ॐश्रीगणेश[illegible] ।१महीशयुक्तममलंहर्यादिसंवंदितंगोपालंभुवनालयंसद्गुरुसूनोःशत्रुणाराधितम् ॥ रोहिण्याःप्रभुणा प्रचुंबितशिरास्त्रहस्यापघातेनभक्तारुण्यामृतमीरमाद्यमभयंकृष्णंप्रणौम्याततम् ॥ १ ॥ यदमितकरुणातःकर्मणेसद्वितीयोऽहमनवधि सुखायाद्वैतनिष्ठोऽपिवंदे ॥ विदितनिखिलवेद्यंतंसदानंदमीड्यंनयनगमिहलोकेसौख्यसिद्ध्यैजनानाम् ॥ २ ॥ नुमःश्रीबालगोपाल तीर्थान्व्यासमुखान्मुनीन् ॥ विघ्नहर्तृन्गणेशादीन्पण्डितांश्चविमत्सरान् ॥ ३ ॥ मूलकर्तृनियुक्तेनमुदातत्प्रीतिसिद्धये ॥ दुंदुभिःश्रीमदाचा र्यविजयेसंप्रकाश्यते ॥ ४ ॥ स्वप्नाविर्भूतश्रीमच्छंकराचार्योपदिष्टः सर्वानर्थनिवृत्तिपुरःसरपरमानंदाविर्भावलक्षणपरमपुरुषार्थानन्यसाध नाद्वैतज्ञानविजयपर्यवसन्नंतद्विजयमाविष्कर्तुं ग्रंथमारभमाणःसारस्वतचूडामणिःश्रीमत्सदानंदाख्यआचार्यस्तस्यनिर्विघ्नपरिसमाप्तिप्रच

ॐस्वस्ति ॥ सत्यंज्ञानमनंतमाद्यममलंवेदांतवेद्यंपरंमायातीतमभेद्यमान्तरमजंसर्वज्ञमीड्यंसुखम् ॥
आराध्यंविधिशंकरादिभिरघागारापहंकेशवंवंदेभक्तजनप्रियंसुरगुरुंकृष्णंश्रियासंयुतम् ॥ १ ॥

यगमनादिप्रयोजनमविगीतशिष्टाचारानुमितश्रुतिप्रमितकर्तव्यताकंमंगलमेतदादावनुरूपेण शार्दूलविक्रीडिताभिधेनपद्येनाचरन्प्रेक्षावत्प्र वृत्त्यंगभूतविषयप्रयोजनेदर्शयति। सत्यमिति। कृष्णंवासुदेवंवंदइतिसंबंधः। तंविशिनष्टि। श्रियालक्ष्म्यास्वीकृतराधारुक्मिण्यादिरूपयासम्य ग्युतम्। चांचल्यादिदोषनिवृत्तिपूर्वकपरमप्रेमास्पदत्वेनाश्रितमितियावत्। अनेनेंद्रादयोऽपियस्याःकटाक्षमात्रेणप्राप्ताभिलषितसर्वार्थास्त यासंयुतत्वकथनेनार्थसार्थार्थिभिःकृष्णएवसमाराधनीयइतिदर्शितम्। ननुविधिविधुशेखरादीन्विहायकृष्णएवकुतःसमाराधनीयइतिचेत्त त्राह ब्रह्मरुद्रादिभिराराध्यम्। नन्वेतदेवकुतइत्याशंक्य सत्यज्ञानानंतानंदात्मनआद्यस्यमायातीतत्वादमलस्यप्रत्यगभिन्नस्यस्वगतादिभेद

---

१ सद्गुरुः सूर्यस्तस्य सूनुः कर्णस्तस्य शत्रुरर्जुनस्तेन सेवितम्। २ मीरः समुद्रः। ३ 'दिभिरपि रागापहं' इतिपाठः।

शून्यस्यवेदांतवेद्यस्यपरब्रह्मणोऽवतारभूतत्वादित्याशयेनाह। सत्यमित्यादि। अनेनमोक्षार्थिभिरप्ययमेवाश्रयणीयइतिदर्शितम्। नन्वक्रिय माणमप्याराधनंनिरर्थकं तेनाज्ञातत्वाद्राजादिषुप्रेमपूर्वकाराधनापरिज्ञानेनविपरीतकार्यस्यापिदर्शनादित्यतआह। सर्वज्ञमिति। सर्वंप्रेम पूर्वकाराधनादिकंजानातीतितथा। एवंचसर्वज्ञत्वान्नास्त्यज्ञानकृतंवैयर्थ्यमित्यर्थः। ननु तथापितत्तत्पुराणादावितरदेवतायाअपिसर्वज्ञत्वा दिनास्तूयमानत्वादस्यैवसमाराध्यत्वंकुतइतिचेत्तत्राह। ईड्यमिति। सर्वैः सर्वात्मनाऽयमेवस्तुत्यइत्यर्थः। नन्वेवंतर्हिसर्वैरपिकृष्णएवरतिःकु तोनसंपाद्यतइतिचेत्तत्राह। भक्तजनप्रियम्। गुरुशुश्रूषादिरूपांभक्तिंविनातस्मिन्रतिर्नोत्पद्यतइतिभावः। तदुक्तम्। गुरुशुश्रूषयाभक्त्यासर्व लब्धार्पणेनवा। संगेनसाधुभक्तानामीश्वराराधनेनच। श्रद्धयातत्कथायांचकीर्तनैर्गुणकर्मणाम्। तत्पदांबुरुहध्यानात्तल्लिंगेक्षार्हणादिभिः। हरिः सर्वेषुभूतेषुभगवानास्तईश्वरः। इति। भूतानिमनसाकामैस्तैस्तैःसाधुत्वमानयेत्। एवंनिर्जितषड्वर्गैःक्रियतेभक्तिरीश्वरे। वासुदेवेभगव तियथासंलभतेरतिमिति। ननु नाभुक्तंक्षीयतेकर्मकल्पकोटिशतैरपीत्यादिवचनैर्भोगंविनापापकर्मणांनाशासंभवात्किंकृष्णाराधनेनेतिचेत्त त्राह। अघानामागारंगृहमपहन्तिनाशयतीतितथातंसमस्तपापापहम्। तथाच यस्यनामोच्चारणादेःपापोन्मूलनसामर्थ्यंश्रुतिस्मृतीतिहा सपुराणादिप्रसिद्धंतस्याराधनेनकापापस्थितिंप्रत्याशेतिभावः। ननु तत्रप्रवृत्तस्यदेवाःप्रतिबंधकाभविष्यंतीतिचेत्तत्राह। सुरगुरुं सर्वदेव शिक्षकम्। तदधीनानांतेषांतत्त्वमनुपपन्नमितिभावः। असुरकर्तृकोऽपिप्रतिबंधोनसंभवतीत्याशयेनाह। केशवं केश्याद्यसुरसूदनम्। ननु जन्मवतोजीवतुल्यत्वात्कथमेवंविधंमाहात्म्यमितिचेत्तत्राह। अजम्। माययाजातइवोपलभ्यमानोऽपिनजीववज्जन्मवानित्यर्थः। तदुक्तम्। अजोऽपिसन्नव्ययात्माभूतानामीश्वरोऽपिसन्। प्रकृतिंस्वामधिष्ठायसंभवाम्यात्ममाययेति। यद्वा ननुगर्भसंबंधेसत्यपिजीववज्जन्मवान्नभव तीतिकथंज्ञातमित्याशंक्याह। ईड्यमिति। नहिकोऽपिजीवोगर्भगोब्रह्मादिभिःस्तूयतइतिभावः। नन्वजस्यमाययापिजन्मकिमर्थ मित्यपेक्षाया[illegible]। [illegible]प्रियमिति। भक्तजनाःप्रियायस्यतम्। किंच सुरगुरुम्। तथाचभक्तसुराद्यर्थमजस्यापिजन्मेतिभावः। यद्वा ननु भक्तजनप्रि[illegible]माह। सुरगुरुम्। केशवम्। अघागारापहमिति। एवंचेंद्रशिक्षणेनकेश्यादिदुष्टसूदनेनपापागाररु

पस्यराज्ञांकारागृहस्यापघातेनभक्तपक्षपातोपलब्ध्यातेषुतस्यप्रीतिर्गम्यतइतिभावः । यद्वा कृष्णंवंदे । कुतइतिचेत्सत्यादिरूपस्यपरब्रह्म
णोऽवतारत्वादित्याह । सत्यमित्यादि । अतएवाजम् । ननु जीवोऽपिवस्तुतएवंविधइत्याशंक्याह । सर्वज्ञमिति । अतएवेड्यमिति । वृद्ध
संवादमाह । विधिशंकरादिभिराराध्यमिति । नन्वेवमपिकिमर्थंवंदनीयइतिचेत्तत्राह । अघागारमविद्यादिरूपंनाशयतीतितथा । किं
च बाह्यशत्रूनपिसएवनाशयतीतितदर्थमप्यन्योनवंदनीयइत्याह । केशवमिति । ननु सर्वैरप्ययमेवप्रीतिपुरःसरंकुतोननमस्क्रियतइत्यत
आह । भक्तजनप्रियमिति । यद्वाकिमर्थमेवंकरोतीतिचेत्तत्राह । भक्तेति । नन्वेवमपिदेवाधीनतल्लोकार्थिभिरयंकिमर्थंवंदनीयइतिचे
त्तत्राह । सुरगुरुम् । नकेवलमेतावदेव अपितुयस्याःकटाक्षमात्रेणब्रह्मादयोऽपिप्राप्ताभिलषितसर्वार्थाभवंति तयासंयुतत्वात्सर्वार्थार्थिभिरप्य
यंसम्यग्वंदनीयइत्याह । श्रियासंयुतमिति । यद्वा श्रियापरमकांत्यासंयुतंकृष्णंवंदे । ननु सौंदर्यवत्त्वेनप्रसिद्धान्सुरान्विहाय किमिति
कृष्णोनमस्क्रियतइतिचेत्तत्राह । सुरगुरुम् । सर्वेभ्यःसुंदरतममित्यर्थः । नन्वेवंतर्हिसर्वैःकुतोनप्रेमपूर्वकंनमस्क्रियतइत्यपेक्षायामाह । भ
क्तेति । यद्वा किंच भक्तेति । देवाहिमनुष्यैःक्रियमाणयज्ञेषुप्रीतिमंतोनतुभक्तजनेष्वितिमहान्विशेषइतिभावः । किंच देवप्रबल
नाशकत्वेनतेभ्यउत्कृष्टत्वात्सएववंदनीयइत्याशयवानाह । केशवमिति । नकेवलमेतावदेव अपित्वघागारापहोऽपीत्याह । अघेति । य
द्वा भक्तेषुतस्यप्रीतिःकथमवगतेतिचेत्तत्राह । केशवमित्यादि । नन्वतिसमर्थान्स्रष्टृादिकर्तृन्सर्वाराध्यान्विहायायमेवकुतोवंदनीयइ
तितत्राह । विधीति । नन्वतिप्रेक्षावतांतेषांसुखाराधनंयुक्तं नत्वेतदाराधनमितितत्राह । सुखम् । विषयसुखवन्निंद्यत्वंतस्यवारयति । ईड्यमि
ति । भक्तिरसिकैर्ब्रह्मानंदतोऽप्युत्कृष्टत्वेनस्तुत्यमितिभावः । ननु तेनापरिज्ञातत्वात्तद्वंदनादिकंव्यर्थमित्याशङ्क्याह । सर्वज्ञम् । ननु जन्म
वतःकथमेवंविधतेतिचेत्तत्राह । अजम् । तस्यताटस्थ्यंवारयति । आन्तरम् । जीववदंतःकरणादिभिर्भेदःस्यादितिशंकांनिरस्यति । अभेद्य
मिति । तत्रहेतुमाह । मायातीतमिति । मायाविनिमायाकृतदोषाभावादित्यर्थः । तत्रहेतुः । परं तयाऽस्पृष्टमित्यर्थः । ननु मायांतुप्रकृतिं
विद्यान्मायिनंतुमहेश्वरमित्यादिवेदांतवेद्यएवंविधोनत्वयमितिचेत्तत्राह । वेदांतेति । अतएवामलम् । ननु सत्यादिपदलक्षितमाद्यंनिर्विशे

षंब्रह्मैवंविधमितिचेत्तत्राह । सत्यमित्यादि । तथाचोक्तम् । अहोभाग्यमहोभाग्यंनंदगोपव्रजौकसाम् । यन्मित्रंपरमानंदंपूर्णंब्रह्मसनातन
मित्यादि । एतस्यमंगलत्वम् । पवित्राणांपवित्रंयोमंगलानांचमंगलम् । सर्वदासर्वकार्येषुनास्तितेषाममंगलम् । येषांहृदिस्थोभगवान्मंगला
यतनंहरिरित्यादिशास्त्रसिद्धम् । अथवा । कृष्णं तत्पदप्रतिपाद्यांपरदेवतांवंदइत्यर्थः । तामेवस्वरूपतटस्थलक्षणाभ्यांलक्षयितुं तटस्थलक्षणमा
ह । आद्यंपरमिति । जगतःपरं कारणमित्यर्थः । तदिदंरुचकादिकंप्रतिसुवर्णकारादेरिवननिमित्तकारणत्वमात्रम् । नापिसुवर्णादे
रिवोपादानत्वमात्रम् । कालादृष्टादौसांख्याभिमतप्रधानेचातिव्यापकत्वात् । किंतुस्वनखकेशादिकंप्रतिजीवत्पुरुषादेरिवोपादानकारणवि
शिष्टकर्तृत्वरूपम् । उपादानत्वंचस्वतादात्म्यापन्नकार्यजनकत्वम् । कर्तृत्वंचकार्योपादानानुकूलज्ञानशक्तिमत्त्वम् । अन्यतरोपादानेऽन्यतर
ग्रहणंप्राप्नुयादित्यतउभयोपादानम् । तथाचसूत्रम् । जन्माद्यस्ययतइति । अस्यजगतोनामरूपाभ्यांव्याकृतस्यानेककर्तृभोक्तृसंयुक्तस्यप्रतिनि
यतदेशकालनिमित्तक्रियाफलाश्रयस्यमनसाप्यचिंत्यरचनारूपस्यसर्वज्ञःसर्वशक्तिःपरमात्मैवकारणंसंभवति नतुप्रधानादीत्याशयेनाह । स
र्वज्ञमिति । तथाच कारणत्वनिर्वाहायसर्वज्ञत्वसाधकंसूत्रम् । शास्त्रयोनित्वादिति । नन्वस्तुपरमात्मनोनिमित्तत्वम् । उपादानत्वंतुनसंभ
वति । परमात्मानोपादानंभवितुमर्हति कर्तृत्वात्कुलालादिवत् । जगन्निमित्तकर्त्रनुपादानकं कार्यत्वाद्घटवत् । ब्रह्मनोपादानम् ई
श्वरत्वाद्राजादिवत् । जगन्नब्रह्मोपादानकं तद्विलक्षणत्वात्सुवर्णविलक्षणमृद्घटवदित्यादियुक्तिविरोधादित्याशंक्याह । वेदांतवेद्यमिति ।
यतोवाइमानिभूतानिजायंते । येनजातानिजीवंति । यत्प्रयन्त्यभिसंविशंति । सोऽकामयतबहुस्यांप्रजायेयेत्यादिवेदांतप्रमाणगम्यम् । नत्वनु
मानगम्यमित्यर्थः । तथाचसूत्रम् । शास्त्रयोनित्वादिति । एवंच यथाऽग्निष्टोमोनस्वर्गफलः क्रियात्वान्मर्दनक्रियावदित्याद्यनुमानम् । अग्नि
ष्टोमेनस्वर्गकामोयजेतेत्याद्यागमेनकालात्ययापदिष्टंतद्वदुदाहृतादिवेदांतैरुक्तानुमानान्यपीतिभावः । ननुवेदांतानांक्रियार्थत्वाभावेनान
र्थक्यात्कर्तृदेवतादिप्रकाशनार्थत्वेनक्रियाविधिशेषत्वाद्वा उपासनादिक्रियान्तरविधानार्थत्वाद्वा सिद्धब्रह्मबोधकत्वंनसंभवति । तदु
क्तम् । आम्नायस्यक्रियार्थत्वादानर्थक्यमतदर्थानां विधिनात्वेकवाक्यत्वात्स्तुत्यर्थेनविधीनांस्युरितिचेन्न । सदेवसोम्येदमग्रआसीत् । आत्मा

। नहि तद्गतानांपदानांतात्पर्येणपरमात्मप्रतिपादकानामर्थान्तरक
वाइदमेकएवाग्रआसीदित्यादिवेदांतैस्तात्पर्येणब्रह्मणएववेद्यत्वात् । नचतेषांकर्तृस्वरूपप्रतिपादनपरत्वम् । तत्केनकंपश्येदित्यादिश्रुतेः । अतएवतस्यनोपा
ल्पनायुक्ता । श्रुतहान्यश्रुतकल्पनाप्रसंगात् । किंच यथाग्नेर्ज्वलतःसर्वादिशोविस्फुलिंगाविप्रतिष्ठेरन्नेवमेतस्मादात्मनः सर्वेप्राणा
स्तिविधिशेषत्वम् । तथाचसूत्रम् । तत्तुसमन्वयादिति । आत्मनएवेदंसर्वम् । आत्मनएषप्राणोऽजा
यथायतनंविप्रतिष्ठंते प्राणेभ्योदेवादेवेभ्योलोकाः । तस्माद्वाएतस्मादात्मनआकाशःसंभूतः । ईड्यमिति । जगत्कारण
यतइत्यादिभिः । समानतयाचेतनकारणवादिसर्वैर्वेदांतैःस्तूयमानंसर्वज्ञंब्रह्मैवजगतःकारणमित्याशयवानाह । गतिसामान्यादिति । ननुतथापिब्र
त्वेनस्तुत्यमित्यर्थः । कर्तृपदानुपादानेनसर्वैर्वेदांतैःसमानगत्या स्तुत्यमितिबोधयति । तथाचसूत्रम् । गुणकर्मारंभकत्वं
ह्मणउपादानत्वंकिमारंभकत्वम् उतपरिणामित्वम् अथवाविवर्ताधिष्ठानत्वम् । आद्येऽपि किमाकाशादिद्रव्यंप्रत्यारंभकत्वं । पक्षद्वये
वा । नाद्यः । अद्वितीयस्यसजातीयद्रव्यांतरसंयोगासंभवेनतत्त्वानुपपत्तेः । नद्वितीयः । ब्रह्मणोनिर्गुणत्वनिष्क्रियत्वाभ्युपगमात् । 
पिकार्यमात्रोपादानत्वासिद्धेश्च । मध्यमेऽपि ब्रह्मकिमेकदेशेनपरिणमते कात्स्न्येनवा । नाद्यः । तस्यसावयवत्वेनघटादिवद्विनाशप्रसंगात् ।
नांत्यः । मुक्तप्राप्यस्वरूपापरिशेषप्रसंगात् । नापितृतीयः । ब्रह्मणोऽतींद्रियत्वात् । एवंजगत्कर्तृत्वमपितस्यनसंभवति । तद्धिकार्यानुकू
लज्ञानशक्तिमत्त्वम् । तत्रज्ञानंनतावत्प्रत्यक्षम् । अचक्षुःश्रोत्रमकायमव्रणमितिश्रुत्यातस्यचक्षुरादिरहितत्वावगमात् । अतएवनानु
मित्यादि तस्यप्रत्यक्षापेक्षत्वादितिचेत्तत्राह । श्रियासंयुतमिति । तेध्यानयोगानुगताअपश्यन् । देवात्मशक्तिंस्वगुणैर्निगूढाम् । मायांतु
प्रकृतिंविद्यान्मायिनंतुमहेश्वरम् । दैवीह्येषागुणमयीममममायादुरत्ययेत्यादिश्रुतिस्मृतिप्रतिपादितयाऽघटमानघटनापटीयस्यामायाशक्त्या
संयुतम् । तथाचतयायुक्तःपरमात्मानिरवयवोऽद्वयोऽपिनिखिलप्रपंचरूपेणविवर्तंते तत्कर्ताचभवति । मायापरिणामरूपस्यैवकार्या
नुकूलज्ञानस्यसत्त्वात् । ननुसासद्रूपाअसद्रूपावा । आद्येद्वैतापत्तिः । द्वितीयेशशविषाणवदनुपयोगादिति विकल्प्य मायांतुप्रकृतिमिति
श्रुत्योक्तप्रकृतित्वस्यान्यथानुपपत्त्यासद्विलक्षणत्वस्यसिद्धिमनेनैवविशेषणेनाभिप्रेत्य सद्विलक्षणत्वंसाधयति । अभेद्यमिति । सजाती

यविजातीयस्वगतभेदार्हंनभवतीति तथातम् । तथाचश्रुतिः एकमेवाद्वितीयमिति । तथाचत्रिविधभेदशून्यत्वान्यथानुपपत्त्या सद्वि
लक्षणत्वंतस्याइत्यर्थः । नचेंद्रियग्राह्यत्वमधिष्ठानतंत्रम् । कार्याकारपरिणममानाविद्याश्रयत्वस्यैवतंत्रत्वात् । मायाऽविद्ययोश्चनभेदः ।
व्यवहारभेदस्तुस्वाश्रयव्यामोहाव्यामोहाद्युपाधिभेदादुपपादनीयइतिविवरणाचार्याः । आचार्यवाचस्पतिमिश्रास्तु प्रतिजीवमविद्या
भेदमंगीकृत्य व्यष्टिरूपेणाश्रयतासंबंधेनजीवेषुसाऽविद्येत्युच्यते समष्टिरूपेणविषयतयाब्रह्मणि सामायेत्याहुः । ननु किमिति जगत्कार
णत्वंश्रीकृष्णलक्षणंप्रदर्श्यतइत्याशंक्याह । विध्यादीति । तत्रहेतुः केशवंब्रह्मादिजनकम् । पुनश्चसुरगुरुम् । नारायणाद्ब्रह्माजायते । नाराय
णाद्रुद्रोजायते । योवैब्रह्माणंविदधातिपूर्वंयोवैवेदांश्चप्रहिणोतितस्मै । इत्यादिश्रुतेः । एवंतटस्थलक्षणमभिधाय स्वरूपलक्षणमाह । सत्यं
ज्ञानमनंतंसुखमिति । सत्यमबाध्यं ज्ञानंस्वप्रकाशंसंविद्रुपम् अनंतंस्वान्यूनसत्ताकत्रिविधपरिच्छेदशून्यं सुखंनिरतिशयानंदरूपम् । तथाचा
नृतजडपरिच्छिन्नदुःखविलक्षणम् । सत्यादिपदैर्लक्षितमित्यर्थः । तथाचश्रुतिः । सत्यंज्ञानमनंतंब्रह्म विज्ञानमानंदंब्रह्मेति । ननुसत्यादीनांब्रह्म
स्वरूपात्परस्परस्माच्चभेदोऽभेदोवा । आद्येसच्चिदनंतानंदरूपत्वस्यब्रह्मणोलक्षणस्यासिद्धिः । द्वितीयेवाक्यार्थासिद्धिः । तस्यानेकपदार्थ
वैशिष्ट्यरूपत्वनियमादितिचेन्न । अज्ञातब्रह्मपदार्थएववाक्यस्यपर्यवसानंनपुनर्विशिष्टे परत्वाभावात् । यथाकश्चंद्रइतिप्रश्ने प्रकृष्टप्रकाशश्चंद्र
इतिवाक्ये प्रकृष्टप्रकाशशब्दौस्वार्थबोधनद्वारातदाश्रयंबुभुत्सितंवस्तुतश्चंद्ररूपंव्यक्तिविशेषंलक्षयतः । सत्यादिशब्दाःस्वार्थबोधनद्वाराऽखं
डंब्रह्मलक्षयंति । तत्रप्रकृष्टप्रकाशवैशिष्ट्यंनवाक्यार्थज्ञानानुप्रविष्टंभवति । मानांतरादेवतत्सिद्धेः । नचमानांतरगृहीतस्यैवतस्यचंद्रव्यक्तिग्रह
णोपायत्वसंभवात्तदुपादानंव्यर्थमितिवाच्यम् । उपात्तस्यैवव्यक्तिविशेषनिर्धारणोपायत्वात् । तच्चाखंडचंद्रसिद्धावुपायभूतंवैशिष्ट्यमविरोधा
च्चंद्रेणप्रतिक्षिप्यते सत्यादिवाक्येत्वनंतादिपदैर्बाध्यते । तदुक्तम् । अविशिष्टमपर्यायानेकशब्दप्रकाशितम् । एकंवेदांतनिष्णाताअखंडंप्रतिपे
दिरइति । एतेनैकेनपदेनयावदुक्तंतावताऽपरेणाभिधानेपर्यायत्वमधिकाभिधानेविशिष्टवाक्यार्थापत्तिरितिपरास्तम् । वाच्यार्थनानात्वस्ये
ष्टत्वात् । लक्ष्यस्यचैकत्वात् । एवंतत्पदार्थंलक्षयित्वात्वंपदार्थेनाभेदंवक्तुंतंशोधयति । मायातीतमिति । तयाकालत्रयेप्यसंस्पृष्टमतएवअमलं

3

अखंडार्थमाह। आंतरम्। सच्चिदानंदात्मकशोधितत्वंपदार्थाभिन्नम्। ननु जन्मादिविकारवतोजीवादभिन्नस्यतद्ब्रह्मत्वंस्यादित्याशंक्य प्रत्य
गात्मनोऽपिसर्वविकारशून्यत्वेनतस्यतद्ब्रह्मत्वंदूरापास्तमित्यभिप्रायेणाह। अजम्। जन्मादिसर्वविकारशून्यमित्यर्थः। महानजइत्यादिश्रुतेः।
नन्वेवंतर्ह्यहंब्रह्मेतिसर्वेकुतोनजानंतीत्याशंक्य अज्ञानेनावृतंज्ञानंतेनमुह्यंतिजंतव इत्युक्ततयाऽविद्यावृतस्वरूपज्ञानत्वेननजानंति। यदातुप
रमात्मातांनाशयति तदाजानंत्येवेत्याशयवानाह। अघागारभूताविद्यानाशकमिति। ननु सर्वेषांतांकुतोननाशयतीतिचेत्तत्राह। भक्तजन
प्रियमिति। तदुक्तम्। मच्चित्तामद्गतप्राणाबोधयंतःपरस्परम्। कथयंतश्चमांनित्यंतुष्यंतिचरमंतिच। तेषांसततयुक्तानांभजतांप्रीतिपूर्वकम्। द
दामिबुद्धियोगंतंयेनमामुपयांतिते। तेषामेवानुकंपार्थमहमज्ञानजंतमः। नाशयाम्यात्मभावस्थोज्ञानदीपेनभास्वतेति। अविद्यापहमितिसु
वचत्वेऽपि। नन्वविद्यानाशेऽपिदुरितंननश्यति कर्मणःफलार्थत्वेनतन्नाशासंभवात्। नहिकर्मक्षीयतइत्यादिस्मृतेः। नचैवंप्रायश्चित्तो
पदेशोनिरर्थकः। प्रायश्चित्तानांगृहदाहेष्ट्यादिवन्नैमित्तिकत्वोपपत्तेस्तेषांदोषसंयोगेनविधानाच्च। नचैवमनिर्मोक्षप्रसंगः। देशकाल
निमित्तापेक्षस्यमोक्षस्यकर्मफलवदुपपत्तेरित्याशंकानिवृत्त्यर्थमेवमुक्तम्। विद्यासामर्थ्यादविद्यानिवृत्तौतान्यपिविनश्यंत्येव। तदुपादानक
त्वात्तेषाम्। अन्यथाकर्मणामनादिकालप्रवृत्तत्वान्मोक्षएवनस्यात् तस्यकर्मफलसमत्वेऽनित्यत्वप्रसंगात् ज्ञानफलस्यपरोक्षत्वानुपपत्तेश्च।
तथाचसूत्रम्। तदधिगमउत्तरपूर्वाघयोरश्लेषविनाशौतद्व्यपदेशात्। श्रुतिश्च। यथापुष्करपलाशआपोनश्लिष्यंत्येवंविदिपापंकर्मनश्लिष्यते
तद्यथेषीकातूलमग्नौप्रोतंप्रदूयेत एवंहास्यसर्वेपाप्मानःप्रदहंतइत्याद्या। तथाच सर्वानर्थविनिर्मुक्तंसच्चिदानंदमद्वयम्। अज्ञातंविषयो
ऽस्त्यस्याज्ञातंज्ञेयंप्रयोजनम्। विषयेनाश्यसंबंधोज्ञाप्यज्ञापकलक्षणः। एतत्संप्राप्तिकामोयःसोऽधिकार्यत्रसंमतः। एवंचैवंविधोग्रंथःसंसे
व्योऽयंमुमुक्षुभिः। श्रीमच्छंकरआचार्यैभक्तिमद्भिःपरेगुरौ ॥ १ ॥ ॥ ॥ ॥ ७ ॥ ॥ ॥

॥ ४ ॥

एवंमंगलाचरणव्याजेनविषयप्रयोजनेप्रदर्श्यसकलवेदांतप्रतिपाद्यंपरपदमेवशंकराचार्यस्वरूपेणाविर्भूयवेदांतसिद्धांतंप्रदर्शितवानितितद्व र्णनंतत्प्रतिपादनमेवेतिबोधयन्नाह। तच्छांकरममृतमेवधामवंदेइति। शंकरस्येदंशांकरंधामपदम्। विष्णोःपदमानंदंब्रह्मणइत्यादिवदौपचा रकोभेदोबोध्यः। शंकरमेवशांकरमितिवा। तद्धामैवामृतं नतुप्रसिद्धंक्षीरसमुद्रोद्भवममृतम्। एवपरमार्थतोनतुसापेक्षंतस्यतत्त्वम्। किंतदित्यपे क्षायामाह। यस्यनामामृतमेवसर्वजनसमूहस्यबुद्धौपरमसुखकरम्। पुनश्चयस्यध्यानामृतमेवज्ञानस्यसाधनतयाजनैर्विधेयम्। यस्यज्ञानामृत मेवसर्वविवेकिनांब्रह्मज्ञतासंपादकम्। ध्यानशब्देनमनननिदिध्यासनेगृह्येते। तथाचप्रसिद्धामृतस्यश्रवणंमननंनिदिध्यानमपरोक्षज्ञानंचन

यन्नामामृतमेवसर्वजनताबुद्धौपरंशंकरंयद्ध्यानामृतमेवसाधनतयाचित्तेविधेयंजनैः ॥ यज्ज्ञा
नामृतमेवसर्वविदुषांपांडित्यसंपादकंतद्धामामृतमेवशाकरमहंवंदेदयार्द्रमहः ॥ २ ॥ यन्नाम
श्रवणान्मतिःप्रमुदिताब्रह्मात्मबोधोद्यतायत्पादांबुजसंगमेनजडतालीनामतेर्दुःखदा ॥ यद्वा
क्यामृतपानतःप्रविलयंग्रंथिर्गतोऽध्यासकस्तंबोधांबुजबोधकंदिनकरंवंदेपरंदैशिकम् ॥ ३ ॥

भवतीत्यतोऽस्यामृतस्यात्युत्कर्षइतिभावः। पुनश्चमहस्तेजोरूपंदययार्द्रम्। तेजसआर्द्रत्वप्रदर्शनेनान्यतेजोभ्योव्यतिरेकंसूचयति ॥२॥ अथ यस्यदेवेपराभक्तिर्यथादेवेतथागुरौ । तस्यैतेकथिताह्यर्थाःप्रकाशंतेमहात्मनः । इतिश्रुतिमनुसृत्यश्रीमत्परमहंसपरिव्राजकाचार्यबालगो पालतीर्थसंज्ञंवेदांतशास्त्रोपदेष्टृत्वात्परंगुरुंनमस्यति । तंबोधांबुजस्फोरकत्वाद्दिनकरंसूर्यंपरमुपदेष्टारंवंदे। यस्यनामश्रवणात्प्रकर्षेणमुदिता ॥ ४ ॥ मतिःब्रह्मात्मबोधाययोद्यता । यस्यचरणारविंदसंगमेनमतेर्दुःखदाजडतालीना । यस्यवाक्यामृतपानेनाध्यासकत्वाच्चिज्जडग्रंथिःप्रकर्षेण विलयंप्राप्तस्तमित्यर्थः ॥ ३ ॥ ॥ ॥ ॥ ॥ ॥

एवंस्वेष्टदेवतादिवंदनलक्षणंमंगलंविधायचिकीर्षितंप्रतिजानीते। शैवेपुराणे। व्याकुर्वन्व्याससूत्रार्थंश्रुतेरर्थंयथोचिवान्। श्रुतेर्न्याय्यःसएवा र्थःशंकरःसवितातः। इत्यादिनासूचितंपुरायतिवरैरानंदगिर्यादिभिरादितोग्रंथात्मनानिबद्धंविस्तृतंशांकरदिग्विजयंस्वबुद्ध्यैववीक्ष्य। कि लेतिवाक्यालंकारे। स्वायत्तबुद्ध्या नतुविक्षिप्तयेतिवा। तस्माच्छांकरदिग्जयाच्छ्रुतिसद्वचसांसिद्धांतंनिकृष्य संक्षेपेणाम्बुंबुद्धिस्थंतस्यसिद्धां तस्यसारमेवादरादहंकुर्वे। तथाचश्रीमच्छंकराचार्येभगवत्पादादरएवैतद्ग्रंथकरणेप्रयोजकइतिदर्शितम्। सारत्वेनास्फुटत्वमाशंक्याह। स्फुटं यथास्यात्तथेति। नतु सत्यप्यादरेप्राचीनवर्णितसारसंग्रहेणतस्मिन्कोवाऽतिशयइत्याशंक्य नाहमेतदर्थंप्रवृत्तोऽपितुस्वात्मविशुद्ध्यइत्याह।

शैवेसूचितमादितोयतिवरैर्बद्धंपुराग्रंथतोऽगाधंशांकरदिग्जयंनिजधियावीक्ष्याऽहमेवाततम्॥ सिद्धांतंश्रुतिसद्गिरांकिलततोनिष्कृष्यसंक्षेपतःकुर्वेस्वात्मविशुद्धयेस्फुटममुंतत्सारमेवादरात् ॥ ४ ॥ पुरैकदादेवगणाःसमस्ताःकैलासमीशाननिवासमेत्य॥ त्रिधाप्रणम्योचुरिदंविनम्राउ मापतिंचंद्रकलावतंसम्॥ ५ ॥ देवदेवमहादेवशरणागतवत्सल॥ सर्वज्ञकरुणासिंधोविज्ञप्तिंशृ णुनोविभो॥ ६ ॥

स्वेति। अतएवकुर्वेइत्यात्मनेपदप्रयोगः॥४॥ एवंप्रतिज्ञामभिधायोपोद्घातकथांप्रस्तौति। पुरेति। पूर्वमेकस्मिन्कालेसर्वेदेवगणाःशिवनिवा संकैलासंप्राप्यत्रिभिर्मनोवाक्कायैःप्रणम्यविनम्राश्चंद्रकलाशिरोभूषणंयस्यतमुमापतिमिदंवक्ष्यमाणमूचुः। अत्रदेवगणाब्रह्मणासहिताग्रा ह्याः। निगमाचारपरिभ्रष्टानागमाचाररतान्विप्रादिवर्णानवलोक्यसत्यलोकंगतेननारदेनप्रेरितश्चतुर्मुखःशिवलोकमागत्यपंचवक्त्रंप्रणम्यो वाचेतिप्राचीनाचार्योक्तेः॥ ५ ॥ तदाह। देवेति। नोऽस्माकंविज्ञप्तिंप्रार्थनांशृणु। श्रवणयोग्यतातवैवेतिसूचनार्थंसंबोधनानि॥ ६ ॥

यद्यप्यस्मद्धितंभगवतोविदितमेवतथापिशरणागतैरस्माभिर्विज्ञप्तिर्विधेयैवेतिबोधयंतआहुः । यदिति । त्वांशरणंप्रकर्षेणप्राप्ताः । शरण्यमित्यादिविशेषणद्वयंहेतुगर्भितम् ॥ ७ ॥ ८ ॥ यद्यपिजनार्दनोऽस्मद्धितायतानवंचयत् । तथापीदानींतेनबुद्धेनप्रणीतायेआगमास्तदालंबैः शास्त्रदूषकैः लुप्तोवर्णाश्रमक्रमोयैस्तैर्भूमिर्व्याप्ता । तान्नुपसंहरेतिसंबोधनाशयः ॥ ९ ॥ नकेवलंबौद्धाएवैवंविधाअपितुसर्वेजनाःपाषंडतांप्राप्ताः । तान्दर्शयति । वेददूषकाइत्यादिना ॥ १० ॥ नैष्ठिकंधर्ममरणांतब्रह्मचर्यलक्षणंधर्मंचोदनाप्रमाणकंधर्मंचेतिवानिंदंत्येव । यतोऽविप

यद्धितंनोजगन्नाथविदितंतत्तवप्रभो ॥ शरणंत्वांप्रपन्नाःस्मःशरण्यंभक्तवत्सलम् ॥ ७ ॥ विष्णुर्बुद्धवपुर्धृत्वाऽवंचयत्सौगतान्यथा ॥ वर्ततेतद्भवान्सर्वंजानात्येवनसंशयः ॥ ८ ॥ तत्प्रणीतागमालंबैर्बौद्धैर्दर्शनदूषकैः ॥ धराव्याप्ताहरेदानींलुप्तवर्णाश्रमक्रमैः ॥ ९ ॥ सर्वेपाषंडतांयाताजनाआम्नायदूषकाः ॥ नसंध्यादीनिकर्माणिकेचित्कुर्वंतिवैद्विजाः ॥ १० ॥ संन्यासंनैष्ठिकंधर्मंनिंदंत्येवाविपश्चितः ॥ ज्ञानवैराग्यनिष्ठायावार्ताकावतिदुर्लभा[1] ॥ ११ ॥ नष्टश्रौतसमाचारेजनेभ्रष्टेऽखिलेभुवि ॥ यज्ञभागंविनाशंभोकथंनःस्याद्दिविस्थितिः ॥ १२ ॥ श्रौतमार्गंभवानद्यलोकसंरक्षणायतत्[2] ॥ स्वर्गापवर्गदंशंभोपुनःस्थापयतुक्षितौ ॥ १३ ॥

श्चितः । कौभूमौ ॥ ११ ॥ नन्वस्त्वेवंभवतांकाक्षतिरित्याशंक्याहुः । भुविअखिलेजनेनष्टश्रौतसमाचारत्वाद्भ्रष्टेसति यज्ञभागंविनाऽस्माकंस्थितिःकथंस्यात् । सुखप्रदानेनसर्वस्थापकस्त्वमेवेतिसंबोधनाभिसंधिः ॥ १२ ॥ तस्मादिदानींलोकसंरक्षणार्थंभवाञ्छ्रौतमार्गंभुविस्थापयतु । प्रार्थनायांलोट् । ननुश्रौतमार्गस्थापनेनलोकरक्षाकथंभविष्यतीत्याशंक्याहुः । स्वर्गापवर्गदमिति ॥ १३ ॥

१ 'वार्ता तु दुर्लभैव कौ' इतिपाठः । २ 'संरक्षणाय हि' इतिपाठः ।

॥१४॥१५॥ ममैषप्राणवल्लभइत्युक्तमेवविवृणोति । नेति । गुहःकार्तिकेयः ॥१६॥१७॥ प्रतिज्ञामेवदर्शयति । मानुषीमिति । युष्माकंसर्वम हंपूरयिष्ये ॥१८॥ ननु नित्यमुक्तस्यतवसंभवनंकथमित्याशंकायामाह । माययेति ॥१९॥ ब्रह्मसुतैः सनकादिभिः ॥२०॥ अल्पाक्षरमसं

इत्थंविज्ञापितःशंभुरुवाचगिरिजाप्रियः ॥ श्रूयतांभोसुराःसर्वेमयेदंनिश्चितंपुरा ॥ १४ ॥ निवृत्तमा गोवैराग्यज्ञानध्यानपुरःसरः ॥ उच्छिन्नोदृश्यतेलोकेममैषप्राणवल्लभः ॥ १५ ॥ नमेप्रियाभवानीत्थं नगणेशोनवागुहः ॥ यादृशोऽसौपरब्रह्माद्वैतमार्गःप्रियोमम ॥ १६ ॥ तंविनानैवतिष्ठामिक्षणमेकमहं यतः ॥ अतोऽयमेप्रतिज्ञेयंतत्त्वज्ञानसमृद्धये ॥ १७ ॥ मानुषींतनुमाश्रित्यपरहंसधुरंधरः ॥ भूत्वामनो रथंवोऽहंपूरयिष्येऽखिलंसुराः ॥१८॥ धर्मसंस्थापनार्थायविनाशायचदुष्कृताम् ॥ शंकराचार्यनामाहं संभविष्यामिमायया ॥ १९ ॥ चतुर्भिःसहितःशिष्यैर्ब्रह्माब्रह्मसुतैरिव ॥ वेदांतेषुस्वयंभाष्यंकरिष्या म्यद्भुतंसुराः ॥ २० ॥ व्यासप्रणीतसूत्रेषुभाष्यंब्रह्मपरेष्वहम् ॥ करिष्यामिस्वयंयुक्त्यावेदार्थसंप्रकाश यन् ॥ २१ ॥ तथेदानींभवंतोऽपिमानुषींतनुमाश्रिताः ॥ वेदमार्गंसमीचीनंगृहीत्वान्यायसंयुतम् ॥२२॥ प्रकुर्वंतुधरोपस्थेयावदाविर्भवाम्यहम् ॥ पुनस्तत्रमयासर्वेमेलनीयाहितैषिणः ॥ २३ ॥

दिग्धंसारवद्विश्वतोमुखम् । अस्तोभमनवद्यंचसूत्रंसूत्रविदोविदुः । इत्युक्तलक्षणेषुव्यासप्रणीतसूत्रेषुसूत्रस्थंपदमादायवाक्यैःसूत्रानुकारि भिःस्वपदानिचवर्ण्यंते । भाष्यंभाष्यविदोविदुरित्युक्तलक्षणंभाष्यम् ॥ २१ ॥ वेदमार्गंगृहीत्वातंसमीचीनंयुक्तियुक्तंप्रकुर्वंत्वितिपरेणान्व यः ॥ २२ ॥ २३ ॥

१ 'महंकदा ॥ अतःप्रतिश्रुतंमेऽद्यतत्त्व' इतिपाठः । २ 'रथंसर्वंपूरयिष्येसवोह्यहम्' इतिपाठः । ३ 'मार्गप्रवृत्त्याख्यंगृही' इतिपाठः ।

॥२४॥ कुमारेस्कंदे ॥२५॥ कांडशब्दोऽत्रसमूहपरः ॥२६॥ तेषाद्विजानांरक्षणेसति ॥ २७ ॥ मध्यमंकांडंदेवताकांडमुद्धर्तुंयोगोपास्तिशास्त्रकर्तारौतत्करणार्थंवास्थितौ ॥ २८ ॥ निर्जरान्देवान्प्रति प्रतिजानेस्मप्रतिज्ञाकृतवानस्मि ॥ २९ ॥ जैमिनीयन्यायसमुद्रस्यपूर्णमासी



मयासहसमागम्यभूत्वासंन्यासिनोभुवि ॥ निवृत्तिमार्गंसंस्थाप्यततःस्थानमवाप्स्यथ ॥ २४ ॥ एवं देवान्समादिश्यभगवाञ्शंकरोगुरुः ॥ चिंतयित्वापरंकार्यंकुमारेदृष्टिमादधे ॥ २५ ॥ शृणुसौम्यवचः श्रेयोजगदुद्धारगोचरम् ॥ कांडत्रयात्मकेवेदेप्रोद्धृतेस्याद्विजोद्धृतिः ॥ २६ ॥ तद्रक्षणेरक्षितंस्यात्सकलं जगतीतलम् ॥ अवतीर्यांशतोविष्णुरनंतश्चपृथग्भुवि ॥२७॥ मध्यमंकांडमुद्धर्तुंयोगोपास्तिकृतौस्थितौ ॥ अग्रिमंज्ञानकांडंतूद्धरिष्यामीतिनिर्जरान् ॥ २८ ॥ संप्रतिप्रतिजानेस्मजानात्येवभवानपि ॥ अतस्त्वंभूतलेगत्वामानुषींतनुमाश्रितः ॥२९॥ जैमिनीयनयांभोधेःशरत्पर्वशशीभव ॥ विशिष्टंकर्मकाडंत्वमुद्धरब्रह्मणःकृते ॥३०॥ सुब्रह्मण्यइतिख्यातिंगमिष्यसिततोऽधुना ॥ नैगमींकुरुमर्यादामवतीर्यमहीतले ॥ ३१ ॥ निर्जित्यसौगतान्सर्वानाम्नायार्थविरोधिनः ॥ ब्रह्मापितेसहायार्थंमंडनोनामभूसुरः ॥३२॥ भविष्यतिमहेंद्रोऽपिसुधन्वानामभूपतिः ॥ तथेतिप्रतिजग्राहशिवाज्ञांशंभुवल्लभः ॥ ३३ ॥

चंद्रोभव। भूत्वाचब्रह्मणःब्राह्मणस्यवेदस्यहिरण्यगर्भस्यतपसःपरब्रह्मणश्चकृतेऽर्थेविशिष्टंकर्मकांडंत्वमुद्धर ॥ ३० ॥ नैगमींवैदिकीम् ॥ ३१ ॥ निर्जित्येत्यादेःपूर्वेणान्वयः । भूसुरोब्राह्मणोभविष्यतीतिपरेणसंबंधः ॥ ३२ ॥ ३३ ॥



१ ‘योगकांडकृतौ’ इतिपाठः । २ ‘नीयन्यायवार्धेःशर’ इतिपाठः । ३ ‘ग्राहसेनानीः शंभु’ इतिपाठः ।

॥ ३४ ॥ कृत्रिमयारचितयाश्रद्धयान्वितः । क्रौंचाख्यगिरिशत्रुंगुहम् ॥ ३५ ॥ ततस्तदनंतरंसप्रसिद्धस्तारकस्यदैत्यविशेषस्यारातिःशत्रुःस्कंदःमहीतलेप्रादुरभूत् । यस्यभट्टपादाभिधादिक्सुदृशांदिगंगनानांभूषाऽलंक्रियाऽभूत् ॥ ३६ ॥ जैमिनिनासूत्रितंवेदतात्पर्यंस्फुटयन्नभादराजत् । यथारुणेनकिंचित्प्रकाशितंजगत्सम्यक्प्रकाशयन्सूर्योभासतेतद्वत् ॥ ३७ ॥ प्रत्युद्गम्यप्रत्युत्थानाभिगमनेविधाय ।

अथैंद्रोनृपतिर्भूत्वाप्रजाधर्मेणपालयन्॥ दिवंचकारपृथिवींस्वपुरीममरावतीम्॥३४॥सर्वज्ञोऽप्यसतांशास्त्रेकृत्रिमश्रद्धयान्वितः ॥ प्रतीक्षमाणःक्रौंचारिंमेलयामाससौगतान् ॥ ३५ ॥ ततःसतारकारातिरजनिष्टमहीतले ॥ भट्टपादाभिधायस्यभूषादिक्सुदृशामभूत् ॥ ३६ ॥ स्फुटयन्वेदतात्पर्यमभाज्जैमिनिसूत्रितम् ॥ सहस्रांशुरिवानूरुव्यंजितंभासयज्जगत् ॥ ३७ ॥ राज्ञःसुधन्वनःप्रापनगरींसजयन्दिशः॥ प्रत्युद्गम्यक्षितींद्रोऽपिविधिवत्तमपूजयत्॥३८॥ सोऽभिनंद्याशिषाभूपमासीनःकांचनासने ॥ तांसभांशोभयामासचंद्रमारजनीमिव ॥ ३९ ॥ सभासमीपविटपिश्रितकोकिलकूजितम् ॥ श्रुत्वाजगादतद्व्याजाद्राजानंपंडिताग्रणीः ॥ सौगतान्क्षोभयन्नेवबद्धप्रलापिनः ॥ ४० ॥ ॥ ॥ ॥

ऊर्ध्वंप्राणाह्युत्क्रामंतियूनःस्थविरआगते । प्रत्युत्थानाभिवादाभ्यांपुनस्तान्प्रतिपद्यते । इतिशास्त्रमनुसृत्येतिभावः ॥ ३८ ॥ ३९ ॥ सभासमीपेविटपिनंवृक्षंसमाश्रितस्यकोकिलस्यकूजितंभाषितंश्रुत्वातन्मिषेणपंडिताग्रणीराजानंप्रत्युवाच ॥ ४० ॥

यदुक्तवांस्तदुदाहरति। सचेति। हेकोकिल मलिनैर्नीचैः श्रुत्योःकर्णयोर्दूषकःपीडाकरोनिर्ह्रादःशब्दोयेषांतैःकाकैस्तवसंगोनस्याच्चेत्तदाश्ला घनीयःस्तुत्यस्त्वंभवेः। एतद्व्याजेनहेराजन्मलिनैर्नीचैःकाककल्पैर्नास्तिकैर्वेददूषकनिर्ह्रादैस्तवसंगोनस्याच्चेत्तदात्वंश्लाघनीयोभवेरितिरा जानंप्रत्युक्तवानित्यर्थः॥४१॥षडभिज्ञाबौद्धाः। निशम्यश्रुत्वा॥४२॥ बुद्धस्यसिद्धांतएवशाखीवृक्षस्तंसभट्टपादोयुक्तिकुठारेणछित्त्वातस्यबुद्ध

मलिनैश्चेन्नसंगस्तेनीचैःकाककुलैःपिक॥श्रुतिदूषकनिर्ह्रादैःश्लाघनीयस्तदाभवेः ॥४१॥ षडभि ज्ञानिशम्येमांवाचंतात्पर्यगर्भिताम् ॥नितरांचरणस्पृष्टाभुजंगाइवचुक्रुधुः॥४२॥ छित्त्वायुक्तिकु ठारेणबुद्धसिद्धांतशाखिनम् ॥ सतद्ग्रंथैंधनैश्चीर्णैःक्रोधज्वालामवर्धयत् ॥ ४३ ॥ उपन्यस्यत्सु साक्षेपंखंडयत्सुपरस्परम्॥ तेषूदतिष्ठन्निर्घोषोभिंदन्निवरसातलम् ॥४४॥ अधःपेतुर्बुधेंद्रेणक्षताः पक्षेषुतत्क्षणम्॥ व्यूढकर्कशतर्केणतथागतधराधराः ॥ ४५ ॥ ततःप्रक्षीणदर्पेषुबौद्धेषुवसुधाधिप म् ॥ बोधयन्बहुधावेदवचांसिप्रशशंससः ॥ ४६ ॥ ॥ ॥ ॥

स्यग्रंथैरेवेंधनैश्चीर्णैरुपचितैःक्रोधज्वालामवर्धयत् ॥ ४३ ॥ निर्घोषोनादः ॥ ४४ ॥ यथादेवेंद्रेणव्यूढकर्कशेनवज्रेणपक्षेषुक्षताःपर्वताअधो निपेतुः तथादेवेंद्रस्थानीयेनबुधानांपंडितानामिंद्रेणभट्टपादेन। तथागताःसुगताः। धर्मराजस्तथागतइत्यमरः। तएवपर्वतास्तस्मिन्नेव क्षणेव्यूढोऽप्रकंप्यश्चासौकर्कशश्चसचासौतर्कश्चतेनपक्षेषुक्षताःखंडिताअधःपेतुः। निकृष्टतांप्राप्ताइत्यर्थः ॥ ४५ ॥ सभट्टपादः॥ ४६ ॥

अथबौद्धानांपराजयानंतरंराजाजगाद । विद्यायत्तौविद्याधीनौजयपराजयौतर्हि कस्यमतंध्रुवंकस्याध्रुवमितिनिर्णयः कथंभवेदितिचेत्त त्राह । यःपर्वतस्यशृंगात्पतित्वाऽपक्षयशून्यःस्यात्तस्यमतंध्रुवमपरस्याध्रुवमित्यर्थः ॥ ४७ ॥ तद्राज्ञोक्तंश्रुत्वान्येसौगताःपरस्परंमुखान्य लोकयन् । द्विजोत्तमोभट्टपादस्तुस्वरक्षार्थंध्रुवान्वेदान्स्मरन्सन्पर्वतस्यशृंगमारुरोह ॥ ४८ ॥ ४९ ॥ श्रुतिरात्मास्वयमेवशरण्यंयेषांतेषांव्य

बभाषेऽथधराधीशोविद्यायत्तौजयाजयौ ॥ यःपतित्वागिरेःशृंगादव्ययस्तन्मतंध्रुवम् ॥ ४७ ॥
तदाकर्ण्यमुखान्यन्येपरस्परमलोकयन् ॥ द्विजाग्र्यस्तुस्मरन्वेदानारुरोहगिरेःशिरः ॥ ४८ ॥
यदिवेदाःप्रमाणंस्युर्भूयात्काचिन्नमेक्षतिः ॥ इत्युक्त्वान्यपतत्तस्माद्गिरेःशृंगाद्द्विजोत्तमः ॥
॥ ४९ ॥ अपिलोकगुरुःशैलात्तूलपिंडइवापतत् ॥ श्रुतिरात्मशरण्यानांव्यसनंनोच्छिनत्तिकिम् ॥
॥ ५० ॥ श्रुत्वातदद्भुतंकर्मद्विजादिग्भ्यःसमाययुः ॥ घनघोषमिवाकर्ण्यनिकुंजेभ्यःशिखाव
लाः ॥५१॥ दृष्ट्वातमक्षतंराजाश्रद्धांश्रुतिषुसंदधे ॥ निनिंदबहुधात्मानंखलसंसर्गदूषितम् ॥५२॥
सौगतास्त्वब्रुवन्नेदंप्रमाणंमतनिर्णये ॥ मणिमंत्रौषधैरेवदेहरक्षाभवेदिति ॥५३॥ दुर्विधैरन्यथा
नीतेप्रत्यक्षेर्थेऽपिपार्थिवः ॥ संधामुग्रतरांतत्रव्यधात्क्रोधसमन्वितः ॥ ५४ ॥ ॥ ॥

सनंदुःखंकिंनोच्छिनत्ति अपितुछिनत्त्येव ॥ ५० ॥ शिखावलामयूराः ॥ ५१ ॥ तंभट्टपादमक्षतंदृष्ट्वाराजावेदेषुश्रद्धांसंदधे । खलानांदु र्जनानांसंबंधेनदूषितमात्मानंबहुधानिनिंदच ॥ ५२ ॥ ५३ ॥ दुर्विधैःखलैर्बौद्धैः । संधांप्रतिज्ञाम् ॥ ५४ ॥

संधामेवाह । पृच्छामीति । यंत्राकारेषुपाषाणेषु ॥ ५५ ॥ इत्येवंसंश्रुत्यप्रतिज्ञाविधायभूमीशःसर्पान्वितंघटमानीयास्मिन्घटेकिमस्तीति द्विजान्सौगतांश्चपप्रच्छ ॥ ५६ ॥ ५७ ॥ वापुंसिपद्मंनलिनमित्यमरात्पद्माइतिपुंलिंगप्रयोगः । कंठद्वयसपाथसिकंठमात्रेजले । द्युमणिं सूर्यंप्रति भूदेवाब्राह्मणाः सस्नुर्यः ॥५८॥ घटेशेषशायीविष्णुरस्तीतिवक्तव्यांशंसंदिश्यादित्येंऽतर्हितेसति द्विजाआजग्मुः । सौगताअपि



पृच्छामिभवतःकिंचिद्वक्तुंनप्रभवंतिये ॥ यंत्रोपलेषुसर्वांस्तान्घातयिष्याम्यसंशयम् ॥ ५५ ॥
इतिसंश्रुत्यगोत्रेशोघटमाशीविषान्वितम् ॥ आनीयात्रकिमस्तीतिपप्रच्छद्विजसौगतान् ॥५६॥
वक्ष्यामहेवयंभूपश्वःप्रभातेऽस्यनिर्णयम् ॥ इतिप्रसाद्यराजानंजग्मुर्भूसुरसौगताः ॥५७॥ पद्मा
इवतपस्तेपुःकंठद्वयसपाथसि ॥ भास्करंप्रतिभूदेवाःसोऽपिप्रादुरभूत्ततः ॥५८॥ संदिश्यवचनी
यांशमादित्येंऽतर्हितेद्विजाः ॥ आजग्मुरपिनिश्चित्यसौगताःकलशस्थितम् ॥ ५९ ॥ ततस्ते
सौगताःसर्वेभुजंगोऽस्तीत्यवादिषुः ॥ भोगीशभोगशयनोभगवानितिभूसुराः ॥ ६० ॥ श्रुत्वाभू
सुरवाक्यंतद्वदनंपृथिवीपतेः ॥ कासारशोषणम्लानसारसश्रियमाददे ॥ ६१ ॥ ॥ ॥

कलशस्थितंवस्तुनिश्चित्याजग्मुः ॥ ५९ ॥ भुजंगःसर्पःभोगीशस्यशेषस्यभोगेदेहेशयनंयस्यसः ॥६०॥ तत्स्वेनघटेनिहितादन्यस्यार्थस्यप्र तिपादकंभूसुराणांवाक्यंश्रुत्वाभूपतेर्मुखंकासारस्यतडागस्यशोषणेनम्लानसारसस्यकमलस्यश्रियंशोभामाददे ॥ ६१ ॥



१ 'भूयःश्वःप्रभाते' इतिपाठः । २ 'भुजगोऽस्ती' इतिपाठः । ३ 'कासारइववनेदाघेतापेम्लानिमुपाददे' इतिपाठः ।

अथानंतरमशरीरिणीदिव्यावागेव तस्यराज्ञःशृण्वतांचसर्वेषांसंशयंनाशयंतीराजानंप्रोवाच ॥६२॥ सत्यप्रतिश्रवःसत्यप्रतिज्ञः ॥६३॥ सु

अथप्रोवाचदिव्यावाक्सम्राजमशरीरिणी ॥ नुदंतीसंशयंतस्यसर्वेषामपिशृण्वताम् ॥ ६२ ॥ श्रुत्वाश

सत्यमेवमहाराजब्राह्मणायद्भाषिरे ॥ माकृथाःसंशयंतत्रभवसत्यप्रतिश्रवः ॥ ६३ ॥ श्रुत्वाश

रीरिणींवाणींददर्शवसुधाधिपः ॥ मूर्तिमधुरिपोःकुंभेसुधामिवसुधाधिपः ॥ ६४ ॥ निरस्ताखि

लसंदेहोविन्यस्तेतरदर्शनात् ॥ व्यधादाज्ञाततोराजावधायश्रुतिविद्विषाम् ॥ ६५ ॥ आसेतोरा

तुषाराद्रेर्बौद्धानांवृद्धबालकम् ॥ नहंतियःसहंतव्योभृत्यानित्यन्वशान्नृपः ॥ ६६ ॥ इष्टोऽपि

दृष्टदोषश्चेद्वध्यएवमहात्मनाम् ॥ जननीमपिकिंसाक्षान्नावधीद्भृगुनंदनः ॥६७ ॥ स्कंदात्तुसा

रिणाराज्ञाजैनाधर्मद्विषोहताः ॥ योगींद्रेणवयोगज्ञाविघ्नास्तत्त्वावलंबिना ॥६८॥ हतेषुतेषुदुष्टेषु

सेनानीःपरितोबभौ ॥ वर्णाश्रमसमाचारंस्थापयन्भुविवैदिकम् ॥ ६९ ॥ कुमारिलमृगेंद्रेणहतेषु

जिनहस्तिषु ॥ निष्प्रत्यूहमवर्धतश्रुतिशाखाःसमंततः ॥ ७० ॥ ॥ ॥

धाधिपइंद्रः ॥ ६४ ॥ विन्यस्ताद्धटेस्थापितादाशीविषादितरस्यमधुद्विषोदर्शनाद्धेतोर्निरस्ताअपगताअखिलसंशयायस्यसराजावेदविद्विषां

सौगतानांवधायाज्ञांव्यधात् ॥६५॥ तुषाराद्रिर्हिमालयः । अन्वशादाज्ञांकृतवान् ॥ ६६ ॥ नन्विष्टानांवधायाज्ञांकथमकरोदित्याशंक्याह ।

इष्टोऽपीति । भृगुनंदनःपरशुरामः ॥ ६७ ॥ ६८ ॥ तेषुदुष्टेषुहतेषुवेदोक्तंवर्णाश्रमसमाचारंभुविसर्वतःस्थापयन्सेनानीर्देवसेनाधिपतिः

स्कंदःरराज ॥ ६९ ॥ कुमारिलोभट्टपादः । निष्प्रत्यूहंनिर्विघ्नम् ॥ ७० ॥ ॥ ॥ ॥ ॥

१ 'भुविराजतः' इतिपाठः । २ 'कुमारेणमृगेंद्रेण' इतिपाठः ।

उपसंहरति । निगमेति । वेदविहितकर्ममार्गमस्मिँल्लोकेसंप्रवर्त्यविदितसकलवेद्येशिवपुत्रेस्कंदेस्थितेसति स्वयमप्यसौकामारिःशिवःसुरवरसुखदोभूतलेविहर्तुंप्रादुर्भावेच्छांचकार । सकलानर्थबीजभूतकामनाशेनसमस्तसुखार्थतस्यसंभवेच्छेतिद्योतयितुंपदद्वयाभिधानम् ॥७१॥ इ

निगमविहितकर्माध्वानमीशानसूनौविदितनिखिलवेद्येसंप्रवर्त्यस्थितेऽस्मिन् ॥ स्वयमपिमदनारिर्भूतलेसंविहर्तुंसुरनरसुखदोऽसौसंभवेच्छांचकार ॥७१॥ इतिश्रीशांकरदिग्विजयसारेश्रीमन्मुकुंदपदारविंदमकरंदाभिलाषिसदानंदाख्यविदुषाविरचितेकुमारप्रादुर्भावोनामप्रथमःसर्गः ॥ १ ॥

तिश्रीमत्परमहंसपरिव्राजकाचार्यबालगोपालतीर्थश्रीपादशिष्यदत्तवंशावतंसरामकुमारसूनुधनपतिसूरिकृतेश्रीमच्छंकराचार्यविजयडिंडिमौ प्रथमःसर्गः ॥ १ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

१ 'निगमविहितमार्गेकर्मिणःसंप्रवृत्तेस्थितिमिहनरदेहेशंभुपुत्रेगतेच' इतिपाठः ।

श्रीः ॥ एवमुपोद्घातकथांनिरूप्यशंकरावतारंवर्णयितुमारभते । अथेति । शुभेषुकेरलेषुदेशविशेषेषुवृषाद्रिभूमौपूर्णसंज्ञायानद्यास्तटे भूताधिपतिःप्रभुःशिवःस्वयंभूर्लिंगरूपीप्रकटोऽभूत् ॥ १ ॥ प्रकटीभूययदकरोत्तदाह । स्वप्नइति । स्वप्नावस्थायांतत्रत्यराजानंस्वयंप्रे रितवान् । किमित्यपेक्षायांतत्कृतंतदाह । प्रासादमिति । अत्रप्रासादंप्रकल्प्यमेपूजनंसदाकुरु ॥२॥ प्रजासहितोराजापूजनंतथैवकृतवान् ।

अथप्रभुश्चंद्रकलाधरोऽभूद्वृषाद्रिभूमावजलिंगरूपी ॥ तटेह्लादिन्याःप्रकटःकृपालुःपूर्णाभिधायाः शुभकेरलेषु ॥ १ ॥ स्वप्नेतत्रत्यभूपालंप्रेरणांकृतवान्स्वयम् ॥ प्रासादंपरिकल्प्यात्रपूजनंकुरु मेसदा ॥२॥ राजातथैवकृतवान्सप्रजःश्रद्धयार्चनम् ॥ तत्रैवन्यवसत्कश्चिद्विदवेदांगपारगः ॥३॥ विद्याधिराजइतिसख्यातिंयातोद्विजोत्तमः ॥ नाम्नाशिवगुरुस्तस्यगृहेपुत्रोबभूवह ॥४॥ उपनी तःसगुरुणाब्रह्मचारिव्रतेस्थितः ॥ सांगान्वेदानधीत्यासौकृतार्थोऽभूत्ततोगुरुः ॥ ५ ॥ आहतं वत्सशृणुभोगच्छेदानींगृहंप्रति ॥ गार्हस्थ्यंधर्ममाश्रित्यपित्रोःशुश्रूषणंकुरु ॥६॥ इत्थंगुरोर्वचः श्रुत्वान्यायपूर्वमथोत्तरम् ॥ प्राहतत्रगुरोरग्रेवैराग्यभरमंथरम् ॥ ७ ॥ ॥ ॥

तत्रैवतत्समीपेग्रामविशेषेकश्चिद्विदवेदांगपारगोन्यवसत् ॥ ३ ॥ तस्यविद्याधिराजइतिख्यातिंगतस्य ॥ ४ ॥ स शिवगुरुराचार्येणोपनीतः ततस्तदनंतरमाचार्यआहेतिपरेणान्वयः ॥ ५ ॥ ६ ॥ ७ ॥ ॥ ॥ ॥

१ 'अथप्रभुर्भूतपतिर्भवोऽभूद्वृषाद्रिभूमौकिल' इतिपाठः । २ 'स्वयंभूः' इतिपाठः ।

तद्वदाहरति । यस्मिन्निति । यस्मिन्नेवदिनेवैराग्यंभवेत्तस्मिन्नेवदिनेहेगुरो अकृतविवाहएवसंन्यासंकुर्यादित्यपिश्रुतौदृश्यते । तथाचश्रुतिः । यदहरेवविरजेत्तदहरेवप्रव्रजेदिति ॥ ८ ॥ अपिशब्देनसमुच्चितंदर्शयति । ब्रह्मचर्यादिति । तथाचश्रुतिः । ब्रह्मचर्यंसमाप्यगृहीभवेद्गृहाद्वनी भूत्वाथप्रव्रजेदिति ॥९॥ इत्यपिश्रुतौदृष्ट्वासंशयव्याप्तचित्तोऽहमस्मि । तस्मात् हेदयाजलधेतयोः श्रुत्यर्थयोर्मध्येश्रेयःसाधनंविनिश्चित्यब्रूहि ॥१०॥

यस्मिन्नहनिवैराग्यंभवेत्तस्मिन्दिनेगुरो ॥ प्रव्रजेदकृतोद्वाहःश्रुतावित्यपिदृश्यते ॥८॥ ब्रह्मचर्याद्गृहीभूत्वातथेष्ट्वाविविधैर्मखैः ॥ पुत्रानुत्पाद्यधर्मेणमनोमोक्षेनिवेशयेत् ॥ ९ ॥ श्रुतावित्यपिदृष्ट्वाहंसंशयापन्नमानसः ॥ विनिश्चित्यतयोर्मध्येब्रूहिश्रेयःकृपांबुधे ॥१०॥ शिष्यस्यैवंवचःश्रुत्वा गुरुराहमहार्थवित् ॥ इदानींनाधिकारस्तेसाक्षान्मोक्षार्थसाधने ॥ ११ ॥ आदौगार्हस्थ्यमाश्रित्यस्वधर्मेणेशमर्चयन् ॥ तत्प्रसादान्मतिःशुद्धाविवेकादिमतीभवेत् ॥१२॥ ततःसाधनपौष्कल्ये साक्षान्मोक्षार्थसाधने ॥ प्रवृत्तस्तुनरोयातिपरंब्रह्मसनातनम् ॥ १३ ॥ इत्थमन्योन्यसंवादे प्रवृत्तेतत्पितागतः ॥ गुरवेदक्षिणांदत्त्वास्वगृहंनीतवान्सुतम् ॥ १४ ॥ पदक्रमजटामुख्येवेदेपारंगतंचतम् ॥ भाट्टेनयेगुरुमतेकाणादेकापिलेतथा ॥ १५ ॥ ॥ ॥ ॥

॥१०॥ साक्षान्मोक्षात्मपरमपुरुषार्थसाधनेऽधुनातवाधिकारोनास्ति ॥ ११ ॥ कस्मादित्याशंक्य यतःस्वकर्माराधितेश्वरप्रसादाद्विवेकादियुक्तमतेःसंन्यस्ताखिलकर्मणापरब्रह्मावाप्तिर्नान्यस्येत्याह । आदावितिद्वाभ्याम् ॥ १२ ॥ साधनपौष्कल्येविवेकादिसाधनचतुष्टयस्यसम्यक्संपत्तौ ॥ १३ ॥ १४ ॥ मुख्यपदेनशिक्षाघनादिकंग्राह्यम् । गुरुःप्रभाकरः ॥१५॥ ॥ ॥ ॥

कुलंचशीलंचवयश्चरूपंविद्याचवित्तंचसनाथताच । एतान्गुणान्सप्तपरीक्ष्यदेयाकन्याबुधैःशेषमचिंतनीयम् । इत्यादिस्मृतिदर्शितपात्रसं

श्रुत्वादृष्ट्वाद्विजादिभ्यःकन्यांदातुंसमागताः ॥ तस्मैवेदविदेपात्रसंपदासंयुतायवै ॥ १६ ॥ तत्रागतेषु
विप्रेषुतेषुकन्याप्रदातृषु ॥ स्वसमानकुलेजातांकन्यांयाचितवानसौ ॥ १७ ॥ कन्यामानीयतत्रैव
तद्गुणग्रामलोभितः ॥ कन्यापिताशुभेलग्नेपाणिग्रहविधानतः ॥ १८ ॥ तस्मैकन्यामदाद्धर्षान्नानालंका
रसंयुताम् ॥ ततःशिवगुरुर्विप्रोभार्यांलब्ध्वापतिव्रताम् ॥ १९ ॥ भोगपूगंसबुभुजेकंचित्कालंयथोचित
म् ॥ ततस्तौदंपतीपुत्रजन्मन्यादधतुर्मनः ॥ २० ॥ जातेबहुतिथेकालेदंपत्योःसुतचिंतने ॥ भार्योवाच
पतिंस्वामिन्नाश्रयावोमहेश्वरम् ॥२१॥ तंसमाराध्यपरयाभक्त्याशूलिनमव्ययम् ॥ प्राप्स्यावोगुणसं
पन्नंपुत्रंसर्वज्ञमीप्सितम् ॥ २२ ॥ इतिश्रुत्वाप्रियावाक्यंविप्रवर्यस्तयासह ॥ शिवमाराधयामासध्याने
नतपसागिरा ॥ २३ ॥ नित्यंशिवालयेस्थित्वापूर्वोक्तंलिंगमार्चयत् ॥ तत्रैकदातपश्चर्यांकुर्वन्निद्रावशं
गतम् ॥ २४ ॥ स्वप्नेमहेश्वरोदेवस्तपसातोषितोहितम् ॥ प्रोवाचब्राह्मणोभूत्वावरदोवरदेश्वरः ॥ २५ ॥
अभिवांछसिकिंविप्रवरंब्रूहिममाग्रतः ॥ पुत्रंदेहीतिविप्रेणप्रोक्तोऽप्याहस्वयंशिवः ॥ २६ ॥ ॥

पदासंयुताय ॥ १६ ॥ असौविद्याधिराजः ॥ १७ ॥ कन्यापितामघपंडिताख्यः ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ ध्यानेनतप ॥ ॥ ॥ ॥
सागिरा मनःकायवाग्व्यापारैः ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥

१ 'कुलीनांतांकन्यां' इतिपाठः ।

॥ २७ ॥ २८ ॥ २९ ॥३०॥ क्षेत्रेकलत्रे ॥ ३१ ॥ ३२ ॥ लग्नेशुभे शुभेनग्रहेणयुक्ते शुभेनतेनदृष्टेच। पुनश्चसूर्यादिग्रहपंचकेउच्चस्थेस्वतुं



सर्वज्ञंगुणसंपन्नमेकंवानिर्गुणान्बहून् ॥पुत्रास्त्वंवांछसीत्येवंशिवेनोक्तोऽब्रवीद्द्विजः॥२७॥ सर्वज्ञःस
र्वशक्तिश्चभवानिवमहेश्वरः ॥ एकएवास्तुमेपुत्रोवरंमेनमहंवृणे ॥२८॥ एवंवृतोमहादेवोऽब्रवी
दस्तुतथेतितम् ॥ इत्थंशृण्वन्बुबोधाथाब्रवीद्भार्यांप्रतिद्विजः ॥ २९ ॥ सिद्धंनोवांछितंभद्रेदेवा
ल्लब्धोवरोमया ॥ इत्युक्त्वातद्दिनेविप्रान्संतर्प्यानर्चदैवतान् ॥ ३० ॥ आनंदभरसंपन्नोयुक्तःशां
भवतेजसा ॥ तपसाशोधितेक्षेत्रेशैवंतेजःसिषेचतत्॥३१॥शैवेनतेजसासाध्वीसंपन्नासासतीबभौ
॥ वैष्णवेनयथादेवीदेवकीतेजसायुता॥३२॥सुमुहूर्तेशुभेलग्नेह्युच्चस्थेग्रहपंचके ॥ सासतीसुषुवेबा
लंशंकराख्यंजगद्गुरुम् ॥३३॥ तस्मिन्नेवक्षणेविप्रःपुत्रजन्ममहोत्सवम् ॥ श्रुत्वासचैलमाप्लुत्यप्रा
दाद्दानान्यनेकशः॥३४॥विप्रेभ्योगाःसुवर्णंचदत्त्वादौजातकर्मच ॥ संचकाराथदैवज्ञान्पप्रच्छवि
नयेनसः॥३५॥बालोऽयंकीदृशोजातइत्थंपृष्टास्ततोद्विजाः ॥ दद्दुःप्रत्युत्तरंतस्मैसर्वज्ञोऽयंभविष्य
ति॥३६॥वेदेऽजेनसमोज्ञानेभविताशंभुनासमः ॥ कारुण्येहरिणातुल्योभविष्यतिमहामनाः॥३७॥

गसंस्थे निजतुंगाउच्चस्थानानिसूर्यादीनांक्रमेणोक्तानि। अजवृषभमृगांगनाकुलीराझषवणिजौचदिवाकरादितुंगा इति। अजोमेषः मृगो मकरः अंगनाकन्या कुलीरःकर्कः झषोमीनः वणिक्तुला ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ॥ ॥

॥११॥

१ 'भगवानिव'। २ 'वरंह्येनमहं'। ३ 'नर्चनिर्जरान्'। ४ 'दत्त्वासौजात'।

धास्यतिस्थापयिष्यति ॥३८॥३९॥ निर्जरादेवाः ॥४०॥ मृगांकश्चंद्रः ॥४१॥ पवमानोवायुः । शिलादमुनेःपुत्रोनंदी॥४२॥गुरुर्बृहस्पतिः । अरुणःसूर्यसारथिरादित्योवा । यद्यपि चंद्रःपद्मपादसंज्ञोबभूवेत्युक्तं सएवचवक्ष्यमाणरीत्यासनंदनस्तथापिपक्षांतरमेकत्रैवोभयांशावतरणं

निष्कलंकांस्विकांकीर्तिंभुविधास्यतिपावनीम् ॥ असंख्यगुणकोबालोभवितेत्यब्रुवन्द्विजाः ३८
हर्षेणजीवनंतस्यनपृष्टंजनकेनतु ॥ नचैवोक्तंद्विजैःप्रश्नंविनातेतुगृहंगताः॥३९॥अथश्रीशंकरेजा
तेजज्ञिरेनिर्जराभुवि ॥ कुलेशास्त्रविदामासन्महांतःसुखकारिणः ॥ ४० ॥ भुविजातोमृगांको
ऽपिपद्मपादंवदंतियम् ॥ हस्तामलाभिधांयातःपवनोऽपिप्रभाकरात् ॥४१॥ पवमानदशांशेनसं
जातस्तोटकाह्वयः॥शिलादमुनिपुत्रोऽभूद्बुदंकंप्रवदंतियम्॥४२॥ब्रह्मासुरेश्वरोजातस्तथाऽनंदगि
रिर्गुरुः ॥ अरुणःसनंदनोऽभूद्वरुणश्चित्सुखाह्वयः ॥ ४३ ॥ विधिशापाद्गुरुर्जातोमंडनाख्यस्तथा
भुवि ॥ नंदीशमानंदगिरिंवदंत्येकेबुधाजनाः ॥ ४४ ॥ एकदामुनयःसप्तब्रह्मणःपार्श्वगाःकिल ॥
सांगान्वेदानधीयानारमंतेस्ममुदान्विताः ॥४५॥ शारदास्खलितंवेदेस्वरंश्रुत्वाजहासह ॥ हसं
तींतांसमालोक्यस्वयंभूश्चतुराननः ॥ ४६ ॥ ॥ ॥ ॥

वाश्रित्याविरोधःसंपादनीयः॥४३॥पक्षांतरमाह । विधीति । विधेश्चार्वाकशास्त्रविधानात्कुपितस्यविधातुःशापात्॥४४॥ अथसरस्वत्यवतरणं सनिमित्तंदर्शयति । एकदेति । शिक्षाकल्पव्याकरणज्योतिश्छंदोनिरुक्तसंज्ञैःषड्भिरंगैःसहितान्ऋग्यजुःसामाथर्वाख्यान्वेदान् ॥४५॥४६॥

१ 'तेस्वगृहं' इतिपाठः । २ 'वेदानुचार्यमाणास्ते' इतिपाठः ।

शशापत्वंमनुष्येषुजायस्वेतिसरस्वतीम् ॥ उक्त्वातूष्णींबभूवाथशारदाचतुराननम् ॥४७॥पतिं
॥१२॥ प्रसादयामासस्वयंसप्तमुनींस्तथा ॥ दृष्ट्वादेवींविषण्णांतेमुनयःपारदर्शिनः ॥ ४८ ॥ विधिंप्रसा
दयामासुःक्षमस्वेतिपुनःपुनः ॥ प्राहप्रसादितोब्रह्मायाहिदेविमहीतले॥ ४९ ॥ यदातेदर्शनंशंभो
र्मानुष्येसंभविष्यति ॥ तदात्वंमेंऽतिकंभूयःसमेष्यसिसरस्वति ॥ ५० ॥ इत्युक्तवत्यथविधौशार
दापिमहीतले ॥ शोणतीरेऽथसंजज्ञेब्राह्मणस्यगृहेवरे ॥ ५१ ॥ आजानसिद्धासकलावेदवेदांगपा
रगा ॥ कुमारीभावमापन्नाबभौविप्रगृहेसती ॥ ५२ ॥ एकदाविश्वरूपंसाऽश्रृणोद्बालागृहेपि
तुः ॥ सर्वज्ञंरूपसंपन्नंवेदवेदांगपारगम् ॥५३॥ श्रुत्वैवसाऽवशाबालादमयंतीवमोहिता ॥ तांचश्रु
त्वाद्विजःसोऽपिनलवच्चावशोऽभवत् ॥ ५४ ॥ तयोरन्योन्यमुत्कंठासंजज्ञेदर्शनेद्वयोः ॥ आहारा
दिक्रियांत्यक्त्वाविरहाग्निप्रपीडितौ ॥५५॥ पृष्टौतौकारणंसम्यङ्नोचतुर्लज्जयान्वितौ ॥ इंगितैर्ल
क्षयामासुस्तयोरांतरमांतराः ॥ ५६ ॥ एकदाविश्वरूपंतंपितापप्रच्छकारणम् ॥ किमिदंवत्सचिं
तायाःकारणंवदमेऽग्रतः ॥ ५७॥ एवंपृष्टोऽथगुरुणायथावृत्तमुदाहरत् ॥ शोणतीरेश्रुताबाला ॥१२॥
जीवनंसाममेतिसः ॥ ५८ ॥ ॥ ॥ ॥ ॥

॥५२॥५३॥ अवशापराधीना। दमयंतीनलभार्या ॥५४॥५५॥ इंगितैश्चेष्टाभिस्तयोरांतरंहार्दमातराअंतरंगालक्षयामासुः॥५६॥५७॥५८॥

॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ कुलंचशीलंचवयश्चरूपमित्यादिशास्त्रतोयोग्याय ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥

एवंश्रुत्वासतद्वाक्यंब्राह्मणौवेदपारगौ ॥ प्रेषयामासवृत्तांतपत्रंदत्त्वाविधानतः ॥ ५९ ॥ शोणतीरे
ऽर्थतौविप्रौप्राप्तौपत्रसमन्वितौ ॥ दृष्ट्वाज्ञात्वाचवृत्तातंसरस्वत्याःपिताततः ॥ ६० ॥ स्वीयांभा
र्यामुवाचेदंवचनंनयसंयुतम् ॥ राजगेहात्समायातौब्राह्मणौवरपक्षतः ॥ ६१ ॥ किंकर्तव्यंमयेदा
नींभद्रेत्रूहिममाग्रतः ॥ साश्रुत्वास्वामिवाक्यंतत्प्राहन्यायसमन्वितम् ॥ ६२ ॥ कुमार्याहृदयंज्ञा
त्वाश्रुत्वाचवरमद्भुतम् ॥ स्वामिन्देयायदाकन्याऽवश्यंयोग्यायशास्त्रतः ॥ ६३ ॥ नविलंबस्तदा
कार्योयोग्योऽसौविश्वरूपकः ॥ भार्यावाक्यंसमाकर्ण्यलग्नंसम्यङ्निरीक्ष्यसः ॥ ६४ ॥ मंगलालं
कृतंपत्रंलेखयित्वाविधानतः ॥ ब्राह्मणाभ्यांददौहर्षात्तौचशीघ्रंप्रजग्मतुः ॥ ६५ ॥ विश्वरूपपितादृ
ष्ट्वाब्राह्मणौपत्रसंयुतौ ॥ वाचयित्वाततःपत्रंविचार्यचजहर्षह ॥ ६६ ॥ हर्षेणमहतायुक्तोविवाहार्थं
समंडनः ॥ पित्रावंधुजनैःसाकंयात्रांसुखकरांव्यधात् ॥ ६७ ॥ तत्रगत्वायथाशास्त्रंपाणिग्रहमची
करत् ॥ विहृत्यचयथाकालंपुनर्बंधुसमन्वितः ॥ ६८ ॥ प्रत्यागत्यगृहंसोऽपिप्रविश्यचयथासुख
म् ॥ उत्सवंकारयामासद्वारकायांयथाहरिः ॥ ६९ ॥ ॥ ॥ ॥

१ 'तीरेच' इतिपाठः । २ 'विवाहार्थंसमुद्यतः ॥ वंधुवर्गैःसमंयात्रांविवाहार्थंविधायसः' इतिपाठः ।

विस्तरेणोक्तं संक्षिप्य दर्शयति । शतधृतिरिति । इत्येवंप्रकारेण शतधृतिर्ब्रह्मा स्वाशरूपेणेहलोके विश्वरूपाभिधानो द्विजवरकुलदीपो भूत्वा द्विजातीन्निगमविहितकर्ममार्गे स्थापयन्निजपत्न्या सरस्वत्या सह स्वीयधर्मे स्थिरोऽभूत् ॥७०॥ कविनृपवरमान्यः यतः प्रख्यातगुणगणः सोऽसौ विश्वरूपस्तत्र शास्त्रवित्त्वेन विविधान्पंडितसमुदायानिहलोके सम्यङ्निग्रहस्थानादिकं विना विजित्य अग्निवरयुक्तां स्वाधिष्ठितां पुरीं माहिष्मतीं शा

शतधृतिरितिलोके स्वांशभावेन भूत्वा द्विजवरकुलदीपो विश्वरूपाभिधानः ॥ निगमविहितमार्गे स्थापयन्सन्द्विजातीनिह सह निजपत्न्या स्वीयधर्मे स्थितोऽभूत् ॥७०॥ विविधविबुधवर्गान्संविजित्येहलोके प्रथितगुणगणोऽसौ मंडनाख्यां स लेभे ॥ कविनृपवरमान्यो विश्वरूपः पुरीं स्वां हुतवहवरयुक्तां शोभयामास शास्त्रैः ॥ ७१ ॥ इति श्रीशांकरदिग्विजयसारे श्रीमन्मुकुंदपदारविंदमकरंदाभिलाषि सदानंदाख्यविदुषा विरचिते सगणशंकरावतारसहितविश्वरूपसरस्वतीविवाहो नाम द्वितीयः सर्गः ॥ २ ॥ ॥ ॥ ॥ ॥ ॥

स्त्रैः शोभयामास ॥ ७१ ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यबालगोपालतीर्थश्रीपादशिष्यदत्तवंशावतंसरामकुमारसूनुधनपतिसूरिकृते श्रीमच्छंकराचार्यविजयडिंडिमे द्वितीयः सर्गः ॥ २ ॥ ॥ ॥ ॥ ॥ ॥



१ 'धृतिरपिलोके–भिधेन । पत्न्या कर्ममार्गे स्थितोऽभूत्' इति पाठः ।

श्रीः॥ अथश्रीशंकराचार्यस्याप्राकृतंचरितंनिरूपयितुमुपक्रमते। अथेति। सशंकरः॥१॥२॥३॥४॥ अजेनब्रह्मणा। अंगनिवहेशिक्षाद्यंगसमु

अथबालत्वमापन्नःशंकरोमाययास्वया ॥ अग्रहीत्प्रथमेवर्षेदेशभाषांससार्थिकाम् ॥ १ ॥ द्वितीयेवर्ण
विज्ञानंपुराणश्रवणंतथा ॥ तृतीयेऽस्यपितामृत्युंसंप्राप्तोदैवयोगतः ॥ २ ॥ तदापिप्रतिभाकाचिल्लब्धा
स्वाभाविकीस्वतः ॥ चतुर्थेसर्वशक्तित्वंप्रादुर्भूतंमहेशितुः॥३॥उपनीतोऽथगुरुणापंचमेऽब्देस्वयंगुरुः ॥
अधीत्यसांगतोवेदान्व्याकरोदर्थतःप्रभुः॥४॥ वेदेऽजेनसमस्तथांगनिवहेगार्ग्येणतात्पर्यकेजीवेनागम
पूर्वकांडनिवहेसाक्षात्स्वयंजैमिनिः ॥ श्रीमद्व्याससमोबभौश्रुतिशिरःसिद्धांतकेशंकरोवेदांताब्जविभा
करोगुरुरसौकेनोपमीयेतसः॥५॥एकदानिवसन्गेहेगुरोर्भिक्षार्थमुद्यतः॥प्रविश्यैकस्यविप्रस्यनिर्धनस्य
गृहेबटुः ॥ ६ ॥ भिक्षांदेहीतिसप्राहश्रुत्वाविप्रवधूस्तदा ॥ प्राहतंकृतिनोयेऽत्रसंतितेवैभवादृशे ॥ ७ ॥
सादरंभोजनंदत्वाजीवंतिसुखिनःसदा ॥ वंचिताःखलुदैवेननसमर्थायतोवयम् ॥ ८ ॥ इत्थंदीनवचःप्रो
च्यभिक्षामामलकंददौ ॥ निशम्येत्थंसकरुणांवाचंदीनदयार्द्रधीः ॥ ९ ॥ संतुष्टावसतत्रैवकमलांकम
लालयाम् ॥ शंकरोवाग्भिरर्थ्याभिःसातुष्टाताभिरंगणे ॥ १० ॥ तस्मिन्नेवक्षणेतत्रप्रादुर्भूताहरेःप्रिया ॥
वरंवृणीष्वभद्रंतेशंकरंप्रत्यभाषत ॥ ११ ॥ ॥ ॥ ॥

दायेवेदादितात्पर्ये। जीवेनदेवगुरुणा। एवंभूतःसश्रीशंकरोऽन्येनकेनोपमीयेत ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ कमलमालयोनिवासस्थानं
यस्याः। अर्थ्याभिरर्थादनपेताभिः ॥ १० ॥ ११ ॥ ॥ ॥ ॥ ॥ ॥ ॥

१ 'दर्थतः स्वयम्' इतिपाठः। २ 'रम्याभिः' इतिपाठः।

॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ समावर्त्यसमावर्तनाख्यंकर्मविधाय ॥ १९ ॥२०॥२१॥ भिक्षयालब्धमन्नम् । अजिनंमृगचर्म । परिधानमाच्छादनम् । तथासुखदायिनोवेदस्यप्राप्तेर्हेतुभूतंस्वीयंब्रह्मचारिणः कर्मपरित्यज्यराजदत्तहस्तिप्रमुखैःकुत्सितभोगै



श्रियंदृष्ट्वापुनश्चक्रेस्तुतिंतस्याबटुस्ततः ॥ संस्तुताश्रीरुवाचेदंयदर्थंसंस्तुतात्वया ॥१२॥ तद्गृहाणाविलंबेनस्वयंतुष्टाददामिते ॥ निशम्येत्थंवचोलक्ष्म्याउवाचकरुणार्द्रधीः ॥१३॥ यदात्वंवरदादेवितदास्याब्राह्मणस्त्रियः ॥ गृहंप्रविश्यकनकैःपूरयित्वास्थिराभव ॥ १४ ॥ इत्थंसंप्रेरितालक्ष्मीर्बटुवर्येणतत्क्षणे ॥ गृहमापूर्यहेम्नासास्वयमंतर्धिमागता ॥ १५ ॥ तदैवशंकरोलोकेसत्कीर्तिंप्राप्यभूतले ॥ विख्यातोऽभूत्ततोवेदमर्मभेत्तेतिचश्रुतः ॥१६॥ बटुवर्यस्यसत्कीर्तिर्लोकेख्यातासुपाविनी ॥ उपमानंगतासत्सुशरदिंदुप्रभेवसा ॥१७॥ षष्ठेऽब्देवेदशास्त्राणांसर्वेषांग्रंथिभेदनम् ॥ चक्रेभासिकयाशक्त्याशंकरोलोकशंकरः ॥ १८ ॥ सप्तमेहायनेप्राप्तेसमावर्त्यगुरोर्गृहात् ॥ मातृसंसेवनेसक्तोऽतिष्ठत्तत्पादसन्निधौ ॥ १९ ॥ तेराज्ञाश्रुत्वागुणास्तस्यराजशेखरसंज्ञिना ॥ स्वामात्यःप्रेषितस्तेनशंकरस्यांतिकेययौ ॥ २० ॥ तेनागत्याथनृपतेर्वृत्तांतंसंनिवेदितम् ॥ श्रुत्वाहसन्नुवाचेदंमंत्रिणंप्रतिशंकरः ॥ २१ ॥ भैक्षमन्नमजिनंपरिधानंशर्मदायिनिगमाप्तिनिदानम् ॥ कर्मनैजमपहायकुभोगैःकुर्महेकिमिहकुंभिपुरोगैः ॥ २२ ॥



रिहमोक्षसाधनेमनुजदेहेकिंकुर्महे । मोक्षप्रतिबंधकैर्निरयप्रापकैस्तैर्विदुषामस्माकंकृत्यंनास्तीत्यर्थः । शर्मदायीतिकर्मणोवाविशेषणम् ॥२२॥

१ 'पूर्यकनकैः स्वय' इतिपाठः । २ 'लक्षितोलोके' इतिपाठः । ३ 'वद्गनाम्' इतिपाठः ।

प्रत्युक्तः प्रत्याख्यातः ॥ २३ ॥ २४ ॥ २५ ॥ सश्रुत्यनिशम्य । स श्रीशंकरः ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ अस्मिन्कालेऽति दुर्लभभवद्दर्शनलाभेनपुराकृतमनल्पसुकृतमेवहेतुरित्याह । क्वेति ॥ ३१ ॥ एतच्छिशूस्त्तेः प्रागलब्धत्वादेतस्यैवतपः प्रभावोऽत्रकारणमित्या

इत्थंसतेनप्रत्युक्तअगतोराजसन्निधौ ॥ वृत्तांतंकथयामासबटुवर्यस्यभूभुजे ॥ २३ ॥ श्रुत्वैवत स्यवृत्तांतंस्वयमेवागतोनृपः ॥ स्वर्णायुतंनिधायाग्रेदंडवत्प्रणनामह ॥ २४ ॥ नाटकत्रितयंस्वे नकृतंराज्ञासुबुद्धिना ॥ वाचितंसम्यगाकर्ण्यप्रसन्नः प्राहशंकरः ॥ २५ ॥ वरंवृणीष्वभोराजन्निति श्रुत्वानृपोऽब्रवीत् ॥ पुत्रंदेहीतिसंश्रुत्यतथैवास्त्विवतिसोऽवदत् ॥ २६ ॥ आज्ञप्तः शंकरेणाथगतः स्वीयांपुरींनृपः ॥ एकदामुनयः सर्वेद्रष्टुंशंकरमागताः ॥ २७ ॥ गौतमप्रमुखास्तत्रदृष्ट्वातान्शंकरः स्वयम् ॥ अर्घ्यादिनासुसंपूज्यमात्रासहपुरः स्थितः ॥ २८ ॥ उवाचशंकरस्यांबामुनीनत्यंतहर्षतः ॥ अद्यैवसफलंजन्मसफलंजीवनंतथा ॥ २९ ॥ मुनीनांश्रीमतांपाददर्शनात्पापहारिणाम् ॥ अहो धन्याअहोधन्यामुनीनांदर्शनाद्वयम् ॥ ३० ॥ क्वकलिर्बहुदोषभाजनंक्वचयुष्मच्चरणावलोकनम् ॥ तदलभ्यमहोपुराकृतंसुकृतंनः किमितिप्रपंचये ॥ ३१ ॥ ममबालस्यतपसः प्रभावादथवागताः ॥ याथातथ्यंसकरुणाभगवंतोब्रुवंतुमे ॥ ३२ ॥ अमुष्यकियदायुः स्यादित्याकर्ण्यमुनीश्वरः ॥ अगस्त्यः प्राहशरदोद्विरष्टेतिसुतस्यते ॥ ३३ ॥ ॥ ॥ ॥

शयेनाह । ममेति । एवंस्तुत्याभिमुखीकृत्यप्रार्थयते । याथातथ्यंयाथार्थ्यंयथास्यात्तथेति ॥ ३२ ॥ द्विरष्टशरदः षोडशसंवत्सराः ॥ ३३ ॥

इत्युक्त्वाससुपामंत्र्यशंकरंमुनयोगताः ॥ वाक्यंश्रुत्वामुनीशस्यजननीशंकरस्यवै ॥ ३४ ॥ शोकसागरसंमग्नाभूयोभूयोऽरुदद्दृढ ॥ तांतथामातरंदृष्ट्वाबोधयामासशंकरः ॥३५॥मांबत्वंरोदनंकार्षीर्नहिशोकेसहायता॥ असारेखलुसंसारेस्थिरत्वंनास्तिकस्यचित्॥३६॥अदर्शनादापतिताःपुनश्चादर्शनंगताः॥नाहंतेषांममैतेनोव्यासेनोक्तमिदंवचः ॥३७॥ मातापितृसहस्राणिपुत्रदारशतानिच ॥ संसारेष्वनुभूतानिकस्यतेकस्यवावयम् ॥३८॥ सारंब्रह्मैववस्त्वत्रनिर्णीतंश्रुतिभिर्यतः॥अतस्तुर्याश्रमंप्राप्ययतिष्येबंधमुक्तये ॥ ३९ ॥ इत्याकर्ण्यवचस्तस्यशोकेनद्विगुणीकृता ॥ आहगद्गदयावाचापुत्रंबुद्धिमतांवरम् ॥४० ॥ त्यजबुद्धिमिमामद्यगृहस्थोभवपुत्रक ॥ यजस्वक्रतुभिस्तातभवितास्यंततोयतिः ॥ ४१ ॥ कथंत्वामुत्सहेत्यक्त्वाजीवितुंविधवासती ॥ ममौर्ध्वदेहिकंतातमृतायाःकःकरिष्यति ॥ ४२ ॥ लब्ध्वासर्वज्ञतांपुत्रमांकथंत्यक्तुमिच्छसि ॥ कथंनतेमनस्तातद्रवतेमयिमातरि ॥ ४३ ॥ एवंशोकेनिमग्नांतांबोधयामासयोगिराट् ॥ वैराग्यगर्भितैर्वाक्यैर्व्यासेनोक्तैःपुनःपुनः ॥ ४४ ॥



॥४२॥ मांत्यक्तुं कथं प्रवृत्तोऽसीत्याह । लब्ध्वेति । ननु संसारासारतांसंबंधाभावंचविजानतःसर्वत्यागएवोचितइत्याशंक्य विद्वत्पांदयालुत्वप्रसिद्ध्यामयिमातरिकरुणयातेमनः कथंनद्रवतइत्याह । कथमिति ॥४३ ॥ ४४ ॥ ॥ ॥

अष्टमेऽब्देऽथसंप्राप्तेचिंतयामासशंकरः ॥ गार्हस्थ्यंतुनकर्तव्यंजननीनजिहासति ॥ ४५ ॥ माताग्गुरुर्न संदेहस्तदाज्ञापीष्यतेबुधैः ॥ वेदांतसंप्रदायार्थंममजन्मतथापितुः ॥ ४६ ॥ अतस्तथाकरिष्येऽहंयथे यंजननीमम ॥ संन्यासायस्वयंदद्यादाज्ञांमेसुतवत्सला ॥ ४७ ॥ इत्थंमनसिसंचिंत्यकदाचित्सरितंय यौ ॥ जलमध्येप्रविष्टःसन्ग्राहात्तांग्रीरुरोदह ॥ ४८ ॥ हांबग्राहेणबद्धोऽस्मिचलितुंनैवपारये ॥ श्रुत्वैव तत्क्षणेमाताजलांतर्गंददर्शतम्[1] ॥ ४९ ॥ अदृष्ट्वातत्प्रतीकारंविललापातिदुःखिता ॥ आमृतेःपालिताभ र्त्रातततोमेशरणंसुतः ॥ ५० ॥ अधुनातस्यचेत्कष्टंहादैवाहंमृतानकिम् ॥ तदैवस्वामिनासार्धमहोकष्टमहो विधे ॥ ५१ ॥ जनन्याःकष्टमालोक्यजलमध्यगतोऽब्रवीत् ॥ जीवनंममचेदंबरोचतेतवचेतसि ॥ ५२ ॥ तदाज्ञां देहिमेशीघ्रंकुर्यांसंन्यासमादृतः ॥ एवमुक्तादददावाज्ञांसंन्यासंकुरुपुत्रक ॥ ५३ ॥ निशम्येत्थंवचोमातुः शंकरोहर्षसंयुतः ॥ बुध्वासंकल्प्यसंन्यासंसलिलाद्बहिरागतः ॥ ५४ ॥ जननींप्रत्युवाचेदंसंन्यस्तंमनसा यदा ॥ तदैवपशुरूपोऽपिग्राहस्त्यक्त्वासमांगतः ॥ ५५ ॥ अंबानुशाधियत्कार्यंमयासंन्यासिनाकृतम् ॥ इत्याकर्ण्याब्रवीन्मातानवक्तव्यंमयाधुना ॥ ५६ ॥ निशम्येत्थंवचःप्राहमातरंशंकरोयतिः ॥ धनंमे पैतृकंमातर्येप्रगृह्णंतिबांधवाः ॥ ५७ ॥ ॥ ॥ ॥ ॥

---

[1] 'जलांतस्थार्थदर्शिनम्' इतिपाठः ।

कर्तव्यंपालनंतैस्तुतववस्त्राशनादिभिः ॥ पुनस्तंप्रत्युवाचांबामृतायांमयिकागतिः ॥ ५८ ॥ इत्युक्तोंऽबासुतःप्राहदुःखेवायदिवासुखे ॥ स्मरिष्यसियदामातस्तदैष्यामितवांतिके ॥ ५९ ॥ संन्यस्यंशिशुरेवायंक्षिप्स्वामांविधवांसतीम् ॥ गतोनेतित्वयाचिंत्यंशृणुतत्रापिमद्वचः ॥ ६० ॥ यावत्तेपालनंकार्यंमयासामीप्यवर्तिना ॥ ततःशतगुणंचाहंकरिष्याम्यपिदूरगः ॥ ६१ ॥ इत्युक्त्वामातरंस्वीयान्बंधूनाहकृपानिधिः ॥ मयासंन्यासिनेदानीमंबाक्षिप्ताभवत्सुच ॥ ६२ ॥ भवद्भीरक्षणीयेयंभोजनाच्छादनादिभिः ॥ तथेतिजगृहुस्तेवैशंकराज्ञांस्वबाधवाः ॥ ६३ ॥ पुनःसंप्रार्थयन्नंबांशोकेनातीवविह्वलाम् ॥ माकार्षीःशोकमधिकंशोकेनास्तिसहायता ॥ ६४ ॥ इत्युवाचाथसंचिंत्यजनन्याहितमात्मनः ॥ नदींसमीपगांचक्रेहरिधामसमन्विताम् ॥ ६५ ॥ अनुज्ञांमातृतःप्राप्यगंतुंदूरेमनोदधे ॥ गच्छन्वनानिसरितोमेनेपश्यन्पथिस्वयम् ॥ ६६ ॥ ब्रह्मैवस्वात्मनात्मानंदर्शयत्यात्मनिस्फुटम् ॥ गोविंदपूज्यपादानामुद्देशेनजगामह ॥ ६७ ॥ तपोवनेप्रविष्टोऽसौकंचित्संपृष्टवान्मुनिम् ॥ गोविंदपूज्यपादानामाश्रमःकुत्रभोमुने ॥६८॥ पृष्टःसदर्शयामासगोविंदस्वामिनांगुहाम् ॥ दृष्ट्वैवदूरतोभक्त्यादंडवत्प्रणनामसः ॥ ६९ ॥ प्रदक्षिणत्रयंकृत्वातुष्टावमधुरोक्तिभिः ॥ गुरूणांमहिमायादृङ्निर्णीतोवेदपारगैः ॥ ७० ॥ ॥ ॥



१ 'इत्याकर्ण्याब्रवीदंबा' इतिपाठः ।

॥ ७१ ॥ तद्वचनमुदाहरति । स्वामिन्निति । उ प्रतिपाद्यमात्मानंदर्शयितुमितरवाद्यभिमतंतंनिराकरोति । अहंनपृथिवीत्यादिना । तत्रस्थूलोऽहंजानामीत्यादिप्रतीत्यास्थूलस्यैवज्ञातृ.. प्रतीतेर्देहाकारेणपरिणतंभूम्यादिभूतचतुष्टयमात्मेतिचार्वाकैकदेशकेषांचिदभिमतमात्मानंनिराकरोति । यापृथिवीसाऽहंनभवामि योऽहंसापृथिवीनभवतीतिपरस्परतादात्म्यनिषेधः एवमग्रेपि । ननु वादिनांसंघातस्यैवात्मत्वाभ्युपगमात्प्रत्येकंपृथिव्यादेस्तत्त्वनिराकरणंकोपयुज्यतइतिचेत् वादिनाद्विगुणगुरुत्वभियातिरिक्तावयव्यनभ्युपगमात् । भूम्यादीनिचत्वारितत्त्वानीतिवदतापंचमतत्त्वाभ्युपगमप्रसक्तिभियासंयोगादिसंबंधानभ्युपगमात्संघातकर्तुरभावाच्चसंघातानुपपत्त्याप्रत्येकभूतनिराकरणं भौतिकदेहात्मत्ववादनिरासइतिगृहाण । स्पर्शनोवायुः । तथाचात्मनोदेशकालाद्यपरिच्छिन्नत्वात्तत्परिच्छिन्नानांघटादिवदनात्मत्वात्पृथिव्या

ताद्दशंशंकरप्रोक्तंश्रुत्वातत्त्वविदांवरः ॥ प्राहकस्त्वंततोवाक्यंशंकरोगुरुमब्रवीत् ॥ ७१ ॥ स्वामिन्नाहंधरानांभोनतेजोनमरुन्नखम् ॥ नेंद्रियंनाप्यहंतेषांसमूहोभ्रांतिकल्पितः ॥ ७२ ॥ ॥ ॥

दिरहंनेत्यर्थः । एवंदेहात्मवादंनिराकृत्यशून्यवादिमाध्यमिकस्यमतंनिराचष्टे । नगगनं यच्छून्यंतदहंनभवामि । योऽहंसशून्यंनभवति । अस्तीत्येवोपलब्धव्यइत्यादिश्रुतेः निरधिष्ठानकभ्रमानुपपत्तेः स्तनपानादिप्रवर्तकजन्मांतरीयसंस्कारोपलब्धेश्चभूतनिराकरणेन आपोमयःप्राणः अन्नमयंहिसोम्यमनः इतिश्रुत्याभूतकार्यत्वेनांगीकृतयोःप्राणमनसोःक्रियाशक्तिज्ञानशक्तिप्रधानयोर्निरासः । मनोनिराकरणेनचमनोवृत्तेःक्षणिकविज्ञानस्यनतावत्प्राणात्मवादःसाधुः । सुषुप्तौतस्यभोक्तृत्वादर्शनात् । नापिमनआत्मवादः तस्यकरणत्वानुभवात् । नापिक्षणिकविज्ञानात्मवादः सौगताभिमतः कर्तृत्वभोक्तृत्वयोर्वैय्यधिकरण्यापत्तेः । यद्वा नगगनमित्यनेनाकाशस्यपंचमभूतस्यनिरासः । यद्यपिभूतचतुष्टयतत्त्ववादिनोमते आवरणाभावत्वेनाभिमतस्यस्थिरस्यासतआकाशस्यदेहानुपादानत्वं तथापितस्यसिद्धांतेभावत्वेदहो

पादानत्वाद्यभ्युपगमात्तत्राप्यात्मत्वप्रसक्त्यातन्निराकृतम् । एवंदेहोपादानानांभूतानामात्मत्वनिराकरणेनतदुपादानभूतानागंधरसरूप
स्पर्शशब्दाख्यानांतद्गुणत्वेनप्रसिद्धानांपंचतन्मात्राणामात्मत्वमपिनिराकृतंवेदितव्यम् । पश्यामिश्टणोमीत्याद्यनुभवात्प्रत्येकमिंद्रियाण्यात्मे
तिकेचित् । विनिगमकाभावात् । मिलितानीत्यपरे । तान्निराचष्टे । नेंद्रियमिति । प्रत्येकमिंद्रियाणामात्मत्वेयोऽहमश्रौषंसोऽहंपश्यामीति
प्रत्यभिज्ञानुपपत्तिः । मिलितानांतथात्वेएकेंद्रियनाशेआत्मनिनाशापातः । तस्मादिंद्रियाण्यप्यहंन । अपितुततस्तस्मात्सर्वेषांनेतिनेतीति
नषेधेसति योऽवशिष्टःसर्वद्वैतबाधेप्यबाधितःकर्तृत्वभोक्तृत्वादिविनिर्मुक्तःसर्वोत्तमःशिवश्चिदानंदोऽस्तिसोऽहमस्मि । अवशिष्टइत्यनेनशू

नेतिनेतिनिषेधेयोऽवशिष्टःसोऽस्म्यहंशिवः ॥ यतोवाचोनिवर्तंतेकेवलान्[1]मनसासह ॥ ७३ ॥ इत्थंनिश
म्यतद्वाक्यंश्रीगुरुस्तंवचोऽब्रवीत् ॥ जानामित्वांमहादेवंशंकराचार्यतांगतम् ॥७४॥ ततःश्रीशंकरोदेवःसं
पूज्यचरणौगुरोः ॥ शिष्यत्वंसमुपागत्यसंप्रदायार्थमादरात् ॥ ७५ ॥ जगृहेब्रह्मतांस्वस्मिन्नाचार्यवच ॥ ॥
साक्रमात् ॥ वेदांतगैश्चतु[2]र्वाक्यैःसंप्रदायानुसारतः ॥ ७६ ॥

न्यमतनिरासः । कर्ताभोक्ताचेतिवैशेषिकतार्किकप्राभाकरा भोक्तैवेतिसांख्याश्चकेवलपदेननिराकृताः । शिवइत्यनेन वैशेषिकाद्यभिमतमा
त्मनःसुखादिगुणकत्वंपराकृतंतस्यबोधितम् । यद्वापदार्थशोधनपुरःसरोऽखंडार्थोऽत्रोक्तः । तत्रपृथिव्यादिनिषेधेनत्वंपदार्थःशोधितः । शिवो
योऽस्तीतिशोधिततत्पदार्थानुवादः । सोऽहमस्मीत्यखंडार्थः । यतःशिवाद्वाचोवागुपलक्षितसर्वेंद्रियाणिमनसासहनिवर्तंते । यतोवाचोनिव
र्तंतेअप्राप्यमनसासहेतिश्रुतेरितिद्वयोरर्थः ॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ॥ प्रज्ञानंब्रह्म अहंब्रह्मास्मि तत्त्वमसि अयमात्माब्रह्म इतिचतु
र्भिर्वचनैर्वेदांतगैर्वेदानांऋग्यजुःसामाथर्वणाख्यानामंतेशिरसिस्थितैः ॥ ७६ ॥

१ 'सकलामनसा' इतिपाठः । २ 'तत्त्वमस्यादिभिर्वाक्यैः' इतिपाठः ।

॥ ७७ ॥ ७८ ॥ ७९ ॥ इंदुभवानर्मदा ॥ ' गुरुं समाधौविघ्नरूपम् ॥ ८१ ॥ ८२॥ उदंतंवृत्तातम् ॥ ८३ ॥ शरत्कालीनाकाशव

उपादिशद्गुरुस्तत्त्वमद्वैतंब्रह्मशाश्वतम् ॥ व्यासेनोक्तंस्वपुत्रायगौडपादस्ततोऽग्रहीत् ॥ ७७ ॥ ततो
गोविंदनाथश्चततःश्रीशंकरोऽग्रहीत् ॥ परहंसोचितांचर्यामंगीकृत्यस्वयंशिवः ॥ ७८ ॥ ब्रह्मैवा
स्मीतिनिश्चित्यसर्वत्रासंगतामधात् ॥ क्षीरंब्रह्मजगन्नीरंहंसवृत्त्याप्रदर्शयन् ॥ ७९ ॥ श्रीगुरोरर्चयन्नं
घ्रिंवसन्निंदुभवातटे ॥ वार्षिकांश्चतुरोमासान्नीतवान्ध्यानयोगतः ॥ ८० ॥ एकदाध्याननिष्ठायांमग्नंदृ
ष्ट्वागुरुंयतिः ॥ विघ्नरूपंनदीशब्दंसमाधौसंविचार्यच ॥ ८१ ॥ नद्यंभःसर्वमाहृत्यसोऽभिमंत्र्यकमंडलु
म् ॥ तन्मध्येऽवेशयन्नीरमगस्त्योऽब्धिंकरेयथा ॥ ८२ ॥ इत्युदंतंसमाकर्ण्यलोकतःशंकरस्यसः ॥ गुरु
र्गोविंदनाथस्तंहर्षेणमहतान्वितः॥ ८३ ॥ अब्रवीद्वचनंभिक्षुंशंकरंप्रहसन्निव ॥ शारदाकाशवत्तत्त्वंभा
तंतेस्वधियाऽनया ॥ ८४ ॥ तद्भवाञ्श्रीमतींकाशींप्राप्यतत्राधिकारिणः ॥ बोधयन्नात्मविज्ञानंमुमुक्षू
नेवतिष्ठतु ॥ ८५ ॥ अत्रमेकथितंपूर्वंव्यासेनापिहिमाचले ॥ मुनिसंसदिवेदांतंशंसतामयिपृच्छति
॥ ८६ ॥ कथांतरेमयापृष्टंयत्तच्छृणुविदांवर ॥ आर्यवेदस्त्वयासर्वोविभक्तोभारतंकृतम् ॥८७॥ सूत्रिता
ब्रह्ममीमांसायोगभाष्यंतथाकृतम् ॥ केचित्त्वत्रविवादेनकल्पयंत्यन्यथान्यथा ॥ ८८ ॥ वेदनिर्णायकं
भाष्यंकर्तव्यंभवतास्वयम् ॥ निशम्यमद्वचःसोऽपिव्यासोमामब्रवीत्तदा ॥ ८९ ॥ ॥ ॥

दतिस्वच्छंब्रह्मतत्त्वम् ॥ ८४ ॥ ८५ ॥ ८६ ॥ ८७ ॥ ब्रह्मणोमीमांसा पूजितविचारः। सूत्रितासूत्रैःप्रदर्शिता ॥ ८८॥ ८९ ॥

॥ ९० ॥ समहेश्वरः ॥ ९१ ॥ ९२ ॥ ९३ ॥ ९४ ॥ ९५ ॥ ९६ ॥ स्तोत्रमेवोदाहरति । शिवाकारामिति । काशींधियासततमजस्रंवंदे । ताविशिनष्टि । शिवेति । शिवाकारांसुखस्वरूपिणींदेवींद्योतमानांस्वयंप्रकाशरूपांचिच्छक्तिम् । एतेनसच्चिदानंदरूपंपरंब्रह्मैवकाशीतिदर्शितम् । अतएवस्वात्मारामयोर्विष्णुशिवयोरसाधारणावासभूमिम् । ननुब्रह्मणोनगर्यात्मनावस्थानेकिंप्रयोजनमित्याशंक्य सकलानर्थ



संपृष्टःपूर्वमेवेत्थंभवःसदसिदैवतैः ॥ सोऽपिस्वात्मावतारायप्रतिजज्ञेमहेश्वरः ॥ ९० ॥ तस्माद्वत्सश्शृणुत्वंसशिष्यस्तेभविताकृती ॥ नद्यंभःसकलंकुंभेसंहरिष्यतियःस्वयम् ॥ ९१ ॥ करिष्यतिसवैभाष्यंवेदांतार्थप्रकाशकम् ॥ निरसिष्यतिमोहात्तान्कुपक्षानिहदुर्धियाम् ॥ ९२ ॥ इत्युक्त्वामांमुनिर्व्यासोययौकैलासपर्वतम् ॥ तन्मुखाद्यच्छ्रुतंभिक्षोसंदृष्टंतत्तथैवहि ॥ ९३ ॥ अतस्त्वंपरमोदारोजगदुद्धारणेरतः ॥ गच्छकाशींशिवःसाक्षाद्दर्शनंतेप्रदास्यति ॥ ९४ ॥ एवमाज्ञाप्यगोविंदस्वामीतंविससर्जह ॥ शंकरोऽस्याभिवंद्यांघ्रिंययौवाराणसींपुरीम् ॥ ९५ ॥ दृष्ट्वाकाशीपुरींभिक्षुस्तुष्टावशिववल्लभाम् ॥ स्तोत्रेणानेनमेधावीयच्छ्रुत्वाशिवतामियात् ॥ ९६ ॥ ॥ ॥ शिवाकारांदेवींहरिहरनिजावासधरणींभवोच्छेत्रींब्रह्माद्वयसुखपदध्वांतहरिणीम् ॥ शरण्यांभूतानांजनिमृतिभयग्रस्तमनसांधियावंद्यांवंदेसततमिहकाशींस्थिरपदाम् ॥ ९७ ॥



निवृत्तिपूर्वकपरमानंदाविर्भावस्तस्यतथात्वेप्रयोजनमित्याह । भवोच्छेत्रीमिति । भवस्यसंसारस्योच्छेत्रीं । यतोब्रह्माऽद्वयानंदपदावरकाज्ञानात्मध्वांतहरिणीं अतएवजन्ममरणभयग्रस्तमनसामखिलभूतानाशरण्यां अतएवसमस्तैर्ब्रह्मादिस्थावरांतैर्वंद्याम् । ननु प्रलयेस्यानाशोस्तिन

१ 'तत्तथामया' इतिपाठः ।

वेतिविचिकित्सायामाह। स्थिरपदामिति । स्थिरपदां प्रलयेऽपिनाशवर्जिताम् । तदुक्तंस्कांदे । अहोजनानांजडताविहायकाशींयद न्यत्रनयंतिचेतः ॥ परिस्फुरद्गांगजलाभिरामांकामारिशूलाग्रधृतांलयेऽपि । महासंवर्तसंवृत्ततापाद्विश्वेशपालिताम् । स्वर्धुन्याहारयष्ट्येवरा जितांकंठभूमिषु । सनत्कुमारसंहितायांच । गतेपरार्धद्वितयेविलीनेजगत्यशेषेमयिदेविसर्वे । रक्षंतिसर्वैर्विविधायुधौघैःकाशींगणाःका शितसूक्ष्मसिद्धिमिति ॥ ९७ ॥ किंच हेभगवति यतः स्थूलंपुरमन्नमयकोशात्मकं सूक्ष्मंपुरंप्राणमयादिकोशत्रयात्मकं सप्तदशावयवम् । अखिलानामतस्मिंस्तद्बुद्धिलक्षणानांसूक्ष्मशरीराद्यध्यासानांजननींप्रकृतिंसर्वोपादानभूतामविद्यांपुरींचत्यक्तुंलोकस्त्वांपुरीमाश्रयति । स्थू

पु[illegible]लंसूक्ष्मंप्रकृतिमखिलाध्यासजननींपुरींत्यक्तुंलोकःश्रयतिभवतींशांतिनिबिडाम् ॥ पुरीं
[illegible]भिख्यांनिरवधिचिदानंदसरणिंसुरप्रार्थ्यांनित्यंभगवतिभजेत्वांशिवसुधाम् ॥ ९८ ॥ क्रतू
नांतीर्थानांप्रबलतपसांशास्त्रविधिनाप्रकर्तारोलोकेत्वयियदिनिवासंसुकृतिनः ॥ लभंतेतेधीराः
प्रचुरशुभलभ्यंसपदितेप्रविष्टाःसौख्याब्धौविमलपदमोक्षेऽप्यसुलभे ॥ ९९ ॥

लादित्यागः काश्याश्रयणेनावश्यंभवतीतिद्योतनायविशेषणानि शांतिसांद्रामिति । शांत्यानिबिडांब्रह्माभिधांनिरवधिचिदानंदश्रेणीम् । यस्माच्चनित्यंसुरैस्त्वंप्रार्थ्या । यतःशिवःसुधामुख्यममृतंयस्यांशिवस्यसुधावदास्वाद्येतिवातस्मात्त्वामहंनित्यंभजे ॥ ९८ ॥ किंच । यज्ञादी यस्माच्चनित्यंसुरैस्त्वंप्रार्थ्या नां सम्यक्कर्तारोऽपित्वयिवासंप्राप्यैवकृतकृत्याभवंतीत्याह । क्रतूनामिति । सुकृतिनः सुकृतवंतोधीराविवेकात्मबुद्धिमंतोयदिअनेकजन्मा र्जितामितपुण्यलभ्यंत्वयिनिवासंलभंतेतदातत्क्षणएवातिदुर्लभआनंदवार्धौविमलपदेमोक्षेऽपिप्रविष्टाः असुलभेऽपीतिवा ॥ ९९ ॥

किंच तपस्तीर्थादिकंस्वृष्ट्वापिचित्तप्रसत्तिमलभमानोहिरण्यगर्भस्त्वांविधायशांतिमवापअतस्त्वमेवसर्वोत्तमेत्याह। स्वयंभूरिति । स्वयंभूरिदंमुन्यादिसहितंजगद्विधायजगतांसुखोपायंदुःखविनाशासाधारणंकारणंविचार्यसुखकरंपापतत्कार्यदुःखविनाशकंतपआदिसृष्ट्वा अंतेत्वांविनिर्मायशांतिमगमत्। यतस्त्वंजगतांजन्ममरणात्मसंसारनिवारिकातस्मादित्यर्थः॥१००॥किंच पुरासर्गादौहरिहरौशिवपदविधात्रींनित्यसिद्धांकाशींस्वहृदयेधियाध्यात्वाध्यात्वा गंगाजलभूषांजनानांमोक्षजननींत्वांतेषांनिवासार्थंभूमौसृष्ट्वा स्वयमपिनितरां सदैववासंकृतवंतौ।

स्वयंभूःसृष्ट्वेदंमुनिसुरनराद्यन्वितमसौसुखोपायंदुःखापहृतिकरणंवीक्ष्यजगताम् ॥ तपस्तीर्थाद्येवंसुखकरमघादिक्षयकरंविनिर्मायांतेत्वांजनिमृतिहरांशांतिमगमत् ॥१००॥ पुराध्यायंध्यायंशिवपदविधात्रींस्वहृदयेधियाकाशींगंगाजलकृतविभूषांहरिहरौ ॥ निवासार्थंभूमौपरमकृपयामोक्षजननींजनानांत्वांसृष्ट्वास्वयमपिनिवासंविदधतुः॥१०१॥ हरिर्ब्रह्माशंभुर्गुहगणपमुख्याःशिवगणाःशिवालक्ष्मीर्वाणीनिजनिजगणैःसंपरिवृताः ॥ ग्रहादेवायक्षाऋषिमुनिगणास्त्वांशिवपुरींसमासाद्याद्यापित्वयिकृतनिवासाःस्पृहयिणः ॥ १०२ ॥ ॥ ॥

गंगाजलंतवालंक्रियामात्रंनतुतद्बलेनत्वंमुक्तिदेतिध्वनयितुंगंगेत्यादि।भूमिसंबंधमात्रमेवताभ्यांरचितंनतुतवस्वरूपमितिद्योतनायभूमावित्युक्तम्। अनायासेननिवासमात्रेणत्वंमोक्षजननीतिबोधयितुंनिवासार्थंपरमकृपयेति॥१०१॥नकेवलमेतावेवापित्वेतदादयःसर्वेऽपीत्याह । हरिरिति। किंकेनचिन्नियुक्ताःनेत्याह। स्पृहयिण इति। स्पृहावंतःतथाचत्वद्भजनमेवश्रेयस्करमितिभावः। तदुक्तम्। जयतिजयतिकाशीकाशितज्ञानराशिर्हरिहरिशिवधातृश्रीगणेशांबिकानाम्। निवसतिरियमाद्यातांभजध्वंभजध्वंस्मरतनमतशुद्धांशुद्धयेकीर्तयध्वमिति॥१०२॥

किंच कलियुगेधर्मेनष्टेसतिदुःखी [illegible] युक्तोजनसमुदायः पूर्वानेकजन्माभ्यस्तैःपुण्यशतपुंजैः प्रभवतींदुःखनिवारणेऽतिसमर्थांत्वांसमाश्रि त्यां [illegible] धकर्मसमाप्तावज्ञानकल्पितांतनुंशरीरत्रयंत्यजति । तत्त्यागेशिवोभूत्वाब्रह्माद्वयसुखपदंसम्यक्पुनरनिर्गमनायप्रविशति ॥१०३॥ अतएव [illegible] यायांत्वयियेवसंतितेअतिधन्याइत्याह । अहोभाग्यमिति । कलौजातानांनराणांस्थावरजंगमानामहोभाग्यंवक्तुमशक्यम् । यत्क लौनिखिलसाधनहीनेकाश्यांसाधनविनिर्मुक्तस्यापिविमुक्तिप्रदायांवासः शिवपादारविंदयुगलेरतिःपरानुरक्तिस्तथासज्जनानांगतिःप्राप्ति स्तत्संगस्तथा सर्वदागंगाजलस्यामृतरसतुल्योयोरसस्तदास्वादनेरतिः अतएवप्रयाणेप्राणोत्क्रमणाव्यवहितक्षणेसन्मोक्षोयातनामृतेपुनरा

कलौनष्टेधर्मेवृजिनगणयुक्तोनरगणःपुराजन्माभ्यस्तैःसुकृतशतपुंजैःप्रभवतीम् ॥ समाश्रित्यां तेत्वात्यजतितनुमांध्यावकलितांशिवोभूत्वाब्रह्माद्वयसुखपदंसंप्रविशति ॥ १०३ ॥ अहोभाग्यं नृणांस्थिरचरकलानांजनिमतांकलौकाश्यांवासःशिवपदरतिःसज्जनगतिः ॥ सदागंगापाथोऽमृ तरसरसास्वादनरतिःप्रयाणेसन्मोक्षःश्रुतिशिखरवेद्योऽतिसुलभः ॥ १०४ ॥ इदंस्तोत्रंकाश्यावि धिहरिशिवास्वादितरतेःसदानंदावाप्तेर्भवशमनसंरक्तसुमतेः ॥ पठन्भक्त्यारुद्रावसतिवसतिंप्रा प्यविमलांसुरालभ्यांशंभोःपरमपदवींयातिसुजनः ॥ १०५ ॥ ॥ ॥

वृत्तिरहितोऽतिसुलभः तत्रापिसकलानर्थनिवृत्तिपूर्वकपरमानंदाविर्भावलक्षणः तरतिशोकमात्मवित् । ब्रह्मविदाप्नोतिपरम् इत्यादिवेदांतवे द्योनतुतार्किकादिकृतर्कगम्यः तथाचत्वयिवसतांसर्वंसुलभमितिभावः । तथाचोक्तम् । असारेखलुसंसारेसारमेतच्चतुष्टयम् । काश्यांवासःसतां संगोगंगाचशिवपूजनमिति ॥ १०४ ॥ एतत्फलमाह । इदमिति । ब्रह्मविष्णुशिवैरास्वादितारतिर्यस्याःसत्यानंदस्यावाप्तिर्यस्याः सर्व

१ 'रतेर्निवासंश्रीकाश्यांभवशमजनन्यांसुखपदम् ॥ सलब्ध्वाशांतात्मावसतिपरभाग्यादविरतंपठन्भक्त्याशंभोः' इतिपाठः ।

स्यापिभवस्यशमनेसंरक्तासुमतिर्यस्याः इदंस्तोत्रंभक्त्यापठन्रुद्रावसतौश्रीकाश्यांवसतिंविमलासुरालभ्याप्राप्य सुजनःशंभोः परमपदवीं मोक्षंयाति ॥१०५॥१०६॥तदेवस्तोत्रमुदाहरति।शिवेति। त्रिपथगास्वर्मर्त्यपातालाख्यलोकत्रयविहारिणीममचित्तेवसतु। तांविशिनष्टि। शिवेति। शिवासुखस्वरूपदेव्यात्मिका तत्स्वरूपत्वेतस्याअसुरादिसंहारायोग्यत्वेनतत्त्वप्रसक्तिंवारयति। शांतेति। इदंकस्माद्विज्ञातमित्याशंक्यकार्यलिंगकानुमानादित्याशयेनाह। शीतेति। किंच कारणस्यशुद्धसात्विकत्वादपि तवशांततेत्याशयेनाह। हरिपदेति। हरिपदयशोभूतिः एवंविधान्यातुनास्त्येवेत्याह। अतुलेति। ननु हरिपदयशोभूतित्वेनपरायत्ताप्रथाकुतएवंविधेत्याशंक्याह। स्वयमिति। स्वयं

एवंस्तुत्वायतींद्रेशःकाशींभक्त्याप्रणम्यच॥ गंगांभागीरथींप्राप्यतांतुष्टावततोऽमुना ॥१०६॥
ॐ शिवाशांताशीताहरिपदयशोभूतिरतुलास्वयंज्योतिर्लक्ष्मीर्निरवधिसुखस्वादुमधुरा ॥ सुधाधारासारात्रिगुणपरिवारातिविमलाचिदानंदाकारावसतुममचित्तेत्रिपथगा ॥ १०७ ॥ निराकारासृष्टेरभवदियमीशात्मनिपुराजगत्सृष्ट्वादेवासुरनरमुखंभ्रांतिनिबिडम् ॥ निमग्नंदुःखाब्धौ दुरितरचितेवीक्ष्यकृपयासमुद्धर्तुंनीराकृतिमिहविधायाविरभवत् ॥ १०८ ॥

ज्योतिषः स्वयंप्रकाशस्यपरब्रह्मणोऽपिलक्ष्मीः परमशोभा तदप्यनयैवशोभतइतिभावः। अतएव निरवधिसुखस्यब्रह्मानंदस्येवस्वादुमधुरा अतएव सुधाधारायाआसारावेगवृष्टिः। किंच त्रिगुणपरिवाराप्रकृतिरूपा। तथात्वेऽपिविमलातज्जनितसुखदुःखादिमलरहिता। यतश्चिदानंदाकारा स्वर्गमर्त्यपातालाख्यत्रिमार्गगागंगाममचित्ते वसतु॥ १०७ ॥ निराकारस्यसच्चिदानंदरूपस्यब्रह्मणोजलाकारेणाविर्भावेनिमित्तमाह। निराकारेति। सृष्टेः पूर्वमियमीशात्मनिब्रह्माभिन्नेप्रत्यगात्मनि स्वस्वरूपभूतेनिराकाराभवत्। सदेवसोम्येदमग्रआसीदेकमेवाद्वितीयं सभगवः कस्मिन्प्रतिष्ठितः स्वेमहिम्नीत्यादिश्रुतेः। देवादिरूपंजगत्सृष्ट्वादुरितरचितेदुःखसमुद्रेमग्नंजगद्वीक्ष्य कृपयासम्यगु

द्रूत्यपुनः पातराहित्येनोर्ध्वंनेतुंजलाकृतिंविधायेहभूमौत्रिलोक्यांव।विरभवत् । निराकारकर्तृकंजगदनुपपन्नमितिशंकानिरासायोक्तम् । भ्रांतिनिबिडम् । तथाचाविद्यकमिदं नतुवास्तवमतोनास्तिविरोधः । देवात्मशक्तिंस्वगुणैर्निगूढामित्यादिश्रुतेः॥ १०८ ॥ एतदेवोपपा दयन्नाह ।स्वयमिति।हेभागीरथिसति स्वयंस्वीयेनासाधारणेनवास्तवेनस्वरूपेणशुद्धासंविच्चिदपि निजांस्वायत्तां नतुस्वतंत्रांशक्तिं महा मायाख्यांचित्रांत्रिगुण ां तथाभूतस्थिरचरजगत्कार्यकारणत्वेनोचितांप्रविश्याधिष्ठाय प्रकृतिपुरुषेशाकृतिरतएवपरिमिततनूनां परि च्छिन्नदेहाभिमानवता वजनिमतांसमस्तभूतानामात्मास्वरूपंत्वमसि।जनिमतामात्मत्वेममापिजन्मस्यादित्याशंकायामाह अजेइति। चशुक्तेःस्वाध्यस्तरजतात्मत्वेऽपितज्जन्मादिनानतस्यास्तदितिभावः । एवंभूतात्वमिदंसर्वंनियमयसि ।यद्वा प्रकृतिपुरुषाद्यधिष्ठानत्वे

स्वयंशुद्धासंवित्प्रकृतिपुरुषेशाकृतिरजेत्वमात्माभूतानांपरिमिततनूनांजनिमताम् ॥ निजांश क्तिंचित्रांस्थिरचरजगद्धेतुमुचितांप्रविश्येदंसर्वंनियमयसिभागीरथिसति ॥ १०९ ॥ विधिर्वि ष्णुःशंभुस्त्वमसिपुरुषत्वेनसकलारमोमागीर्मुख्यास्त्वमसिललनाजन्हुतनये ॥ निराबाधागा धाभगवतिसदात्वंविहरसिक्षितौनीराकाराहरसिजनतापान्स्वकृपया॥ ११० ॥

ननियंतृत्वादिधर्मविनिर्मुक्तापित्वंनिजांशक्तिंप्रविश्यनियमयसीत्यर्थः॥ १०९ ॥ नन्वेवंविधाब्रह्मादयःप्रसिद्धानत्वहमित्याशंकायामाह। विधिरिति । तथाचतत्तद्रूपेणस्थितायास्तववस्तुपरिच्छेदोनास्ति । नापिदेशपरिच्छेदोयतस्त्वंनिराबाधासर्वत्रबाधाविनिर्मुक्ता। कालकृ तंतंवारयति । सदेति । तथाचैवंभूतत्वादगाधापरिच्छिन्नात्वंलोकोद्धाराय तत्तद्रूपेणविहरसि । तत्रापिस्वीयपरमकृपयानीराकारास तीक्षितौविहरसि । यद्वाहेभगवतिजन्हुतनये सदानिराबाधागाधात्वंक्षितौजलाकारासतीविहरसि । विहरंतीस्वकृपयाजनतापान्हरसी त्यर्थः ॥ ११० ॥

एतदेवोपपादयति । त्रिधेति । स्वर्गेभूमौपातालेचमंदाकिनीभागीरथीभोगवतीरूपाभिः संज्ञाभिस्त्रिधाभूत्वा स्वजलगतान्यान्सुरादीन्पवित्रयसि । तेसुरादयोविशुद्धाः सम्यक्शुद्धाभूत्वाखंडमपरिच्छिन्नमतएवावधिरहितं सुखात्मकंब्रह्माभिधंपदंमुक्तप्राप्यंमोक्षंयांति । एतत्पुराकृतानंतपुण्यवतांलभ्यंनतुसर्वेषामितिद्योतनायाह । सुभगाइति ॥ १११ ॥ यतःस्मृत्यादौप्रसिद्धाद्दुःखहरणीशांतिमार्गभूतातवकीर्तिःसंसारसमुद्रस्यपारंगमयति अतोऽहंतत्पारंगंतुमिच्छुस्त्वांहेअभयेमोक्षजननि शरणंयामि । ततोभवत्याहंपालनीयोऽस्मि । पालनंचत्वयिसंगतमेवेत्याह । प्रसिद्धेति । सम्यगुद्धारोयस्मात्तथाभूतेनस्वयशसाप्रभवसि निखिलजगत्परिपालनेसमर्थासि ॥११२॥ अतः सर्वोऽपि

त्रिधाभूत्वागंगेदिविभुविचपातालभुवनेसुरान्नॄन्नागादीन्निजजलगतान्पावयसियान् ॥ विशुद्धास्तेभूत्वासुरनरभुजंगप्रभृतयःसुखंब्रह्माखंडंनिरवधिपदंयांतिसुभगाः ॥ १११ ॥ प्रसिद्धातेकीर्तिर्भवजलधिपारंगमयतिस्मृतौवेदेलोकेवृजिनहरणीशांतिसरणिः ॥ अतोऽहंयामित्वांशरणमभयेमोक्षजननिभवत्यापाल्योऽस्मिप्रभवसिसमुद्धारयशसा ॥ ११२ ॥ दुरुद्धाराघौघेप्रचुरभयदेऽब्धौप्रपतितस्तवांबुस्नानेनत्यजतिमलमत्यंतगहनम् ॥ प्रचंडंमायाख्यंजनिमृतिभयागारमजरंनिजानंदंधामप्रविशतिजनस्तेंऽबकृपया ॥ ११३ ॥

जनस्तवकृपयामोक्षंयातीत्याह । दुरुद्धारेत्यादि । प्रचुरभयदेदुरुद्धाराघौघे समुद्रेपतितोजनस्तवजलस्नानेनात्यंतगहनमनिर्वचनीयत्वात्प्रचंडमुत्कटानर्थप्रचुरत्वात् । तदाह । जनीति । जनिमृतिभयागारंमायाख्यंमलंत्यजति । हेंबतेकृपया स्वानंदात्मकंपदंप्रकर्षेण पुनरावृत्तिराहित्येनविशति । नसपुनरावर्तते । यद्गत्वाननिवर्तंते तद्धामपरमंममेत्यादिश्रुतिस्मृतिभ्याम् । यतोऽजरमपक्षयशून्यमितरोपायसहस्रेणाप्यप्रक्षाल्यत्वादजरंमलमितिवा ॥ ११३ ॥

अंबत्वद्दर्शनान्मुक्तिर्नजानेस्नानजंफलमिति नारदवचनात्वद्दर्शनमेवसर्वसाधनतोऽस्त्युत्तमम् । त्वदंबुस्नानादेस्तुमाहात्म्यंवाचामगम्यमित्याशयेनाह । नेति । प्राणिनांयेषांकलिमलभराणांयज्ञादिभिरपिसम्यगुच्छेदोनास्ति । तेषांतवजलधारादर्शनादेवसमुच्छेदः । हेजननितेसर्वस्तुत्यजलस्यस्नानैःपानैःकिमुत । यज्ञायतेतन्नज्ञायतइत्यर्थः । इतिशब्दः स्तोत्रसमाप्त्यर्थः ॥ १४ ॥ स्तोत्रपाठफलमाह । शु

नयज्ञैर्नोदानैर्नचपरतपोभिर्ननिगमैःसमुच्छेदोयेषांकलिमलभराणामसुमताम् ॥ समुच्छेदस्तेषां तवसलिलधारेक्षणवशात्सदास्नानैःपानैःकिमुतजननीड्यांबुनइति ॥ १४ ॥ शुचिःप्रातःकालेपठतियदिदंस्तोत्रममलंपवित्रंगंगायाःशिवपदवहायाभ्रमहरम्[1] ॥ हृदाध्यायन्गंगांभवभयभरध्वंसिभुवनांविनिर्धूयाघौघान्व्रजतिहरिधामामृतमजम् ॥ १५ ॥ एवंभागीरथींस्तुत्वानत्वास्नात्वायतीश्वरः ॥ सर्वलोकसुखावासंययौविश्वेश्वरालयम् ॥ १६ ॥ विश्वेश्वरंसमभ्यर्च्यमनसास्वात्मरूपिणम् ॥ स्तोत्रेणानेनतुष्टावशंकरंशंकरःस्वयम् ॥ १७ ॥ ॐशिवंशांताकारंभवमृतिजराशून्यममृतंनिरीहंस्वच्छाच्छंविगतकलनंध्वांतविधुरम् ॥ उमाश्लिष्टंशंभुंभ्रमहरमजेंद्रादिशरणंमहेशानंवंदेश्रुतिशिखरवाग्भूमिमकलम् ॥ १८ ॥

चिरिति । शिवपदवहायाः मोक्षप्रापिकाया भवभयभरस्यध्वंसिनाशकरंभुवनंजलंयस्याःसाताम् ॥ १५ ॥ १६ ॥ १७ ॥ तद्वदाहरति । शिवमिति । अहंमहेशानंब्रह्मादिनियंतृत्वान्महांश्चासावीशानश्चतंवंदे । सर्वनियंतृत्वेनसर्वांतर्वर्तित्वेनसर्वदुःखेनदुःखित्वंप्राप्तंवारयति । शिवंपरमानंदस्वरूपम् । बुद्धितादात्म्याध्यासाभावात्तवनदुःखितेतिभावः । ननु साकारस्यकथंसुखरूपतेतिचेत्तत्राह । शांते

१ 'भ्रमहर' इतिपाठः ।

॥२२॥

ति शांताकारंसर्वानर्थविनिर्मुक्तसच्चिदानंदाकारमतएवजन्ममृत्युजराशून्यमतएवामृतंसर्वथाबाधरहितंमोक्षस्वरूपम् । कर्तृत्वविनिर्मुक्तस्येदं सर्वंसंभवत्येवेत्याह निरीहमिति। एतदभावाद्धोकृत्वाभावेनस्वच्छादपिस्वच्छम् । भ्रांतिरहितत्वात्कर्तृत्वादिराहित्यंसांप्रतमेवेत्याह । विगतकलनमिति । विगतकल्पनम् । कल्पनाभावेहेतुः । ध्वांतविधुरमज्ञानविनिर्मुक्तम् । तत्रहेतुः । उमयाब्रह्मविद्ययाश्लिष्टमालिंगितमत एवशंसुखंब्रह्मानंदरूपंभवत्यस्मादितिशंभुस्तम् । यतोभ्रमहरमतएवब्रह्मेंद्रादिशरणम् । नन्वेवंभूतंतुतत्पदप्रतिपाद्यंजगज्जन्मादिकारणं परब्रह्मवेदांतप्रमाणगम्यमितिचेत्तत्राह । श्रुतीति । शिवमद्वैतंचतुर्थमन्यंते अजरोविमृत्युः । उमासहायंपरमेश्वरंप्रभुम् । ईशानःसर्वविद्यानामित्यादिवेदांतवाचांभूमित्वात्तात्पर्येणप्रतिपाद्यस्त्वमेवतथाभूतंपरंब्रह्मेत्यर्थः । ननुश्रुतीनांनिर्गुणब्रह्मपरत्वात्कथमेवमुक्तमितितत्राह। अकलमिति अकलंअविद्ययाध्यारोपिताअप्युपाधिरूपाःषोडशकलाः परमार्थतोनविद्यंतेयत्रसोऽकलोनिष्कलः पुरुषोवेदांतवेद्यस्तम्।कला

अधीत्यादौवेदान्क्रतुभिरमरेशंक्रतुपतिंमहेशंत्वामिष्ट्वाविमलमतयोभोगविमुखाः ॥ निरुध्या
सून्शांतायमनियममुख्याध्वनिरताहृदात्वांध्यायंतोनिरवधिपदंयांतिसुभगाः ॥ १९ ॥

स्तु सप्राणमसृजतप्राणाच्छ्रद्धांखंवायुर्ज्योतिरापःपृथिवींद्रियंमनोऽन्नमन्नाद्वीर्यंतपोमंत्राःकर्मलोकालोकेषुचनामचेतिश्रुत्युक्तावोध्याः॥१८॥ अतएवकृतपुण्यपुंजास्त्वांध्यायंतोनिरवधिपदंयांतीत्याह। अधीत्येति।वेदानादौप्रथमंब्रह्मचर्याश्रमेस्थित्वागुरुशुश्रूषादिपूर्वकमधीत्य गृहिणो भूत्वाक्रतुभिःश्रौतस्मार्तयज्ञैर्देवेशंमहेशंत्वामिष्ट्वा विमलमतयोऽतएवनित्यानित्यवस्तुविवेकेनभोगविमुखाइहामुत्रार्थभोगेषुसम्यक्विरक्ताः अतएव शान्ताजितचित्तेंद्रिया यमनियममुख्याध्वनिरताः यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधिरूपाष्टांगयोगमार्गनिरताः प्राणान्निरुध्यत्वांध्यायंतोनिरवधिपदंमोक्षाख्यंयांति । अतएवसुभगाः । तत्रअहिंसासत्यमस्तेयब्रह्मचर्यापरिग्रहायमाः। शौचसंतोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः। स्थिरसुखमासनम्। तस्मिन्सति श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः । स्वविषयासंप्र

॥२२॥

योगेचित्तस्यस्वरूपानुकारइवेन्द्रियाणांप्रत्याहारः । देशबंधश्चित्तस्यधारणा । तत्रप्रत्ययैकतानताध्यानम् । तदेवार्थमात्रनिर्भासंस्वरूपशून्य मिवसमाधिः ॥ १९ ॥ विपक्षेदोषंविचार्यैवंधीमंतः पशुपतिसमाराधनपराइत्याह । मनुष्यत्वमिति । अनंतसुखस्यमोक्षस्यद्वारभूतंमनु ष्यत्वंप्राप्यापि अबुधामहादेवंत्वांत्यक्त्वा । यतोभ्रमशतयुक्ताअतएव विषयभोगेचतुराः । यद्वाभोगेऽपिचतुरानभवंतीत्यभोगचतुराः भ्रमशतावृताश्चतेअभोगचतुराश्च आंध्यादांध्यंनरकान्नरकंयांति । क्वचिदपिस्वर्गादावपिस्थिरपदांशांतिंनलभंते । तत्सुखस्यक्षणिकत्वात् । एवं विचार्यधीराः स्वमायाबद्धजीवमोचकत्वात्पशुपतेः सम्यगाराधनेतत्पराः ॥ १२० ॥ किंच । अखंडमचलमपरिच्छिन्नत्वादविनाशि

मनुष्यत्वंप्राप्यापरिमितसुखद्वारमबुधामहादेवंहित्वाभ्रमशतवृताभोगचतुराः ॥ व्रजंत्यांध्यादां ध्यंक्वचिदपिनशांतिंस्थिरपदांविचार्यैवंधीराःपशुपतिसमाराधनपराः ॥ १२० ॥ तवाखंडैश्व र्यैर्विधिहरिमुखाराध्यमचलंप्रपंचंस्रष्टादाववतिहरतिस्वात्मनिपरे ॥ तदज्ञानाल्लोकोभ्रमतिकि लदुःखाब्धिपतितोबुधाबुद्ध्वानित्यंतवपदयुगांभोजनिरताः ॥ २१ ॥

तवैश्वर्यमादौस्वात्मनिपरेसकलविवर्ताधिष्ठानेप्रपंचंस्रष्टापालयतिहरतिच । ननु ब्रह्मादेस्तत्तत्स्रष्टृत्वादिकंप्रसिद्धमित्याशंक्यैश्वर्यंविशिनष्टि । विधिहरिमुखाराध्यमिति । तादृशतवैश्वर्याज्ञानाद्दुःखसमुद्रेपतितोभ्रमति । किलेतिवेदलोकप्रसिद्धिंद्योतयति । बुधास्तुतद्बुध्वानित्यंतवप दांभोजनिरताः ॥ २१ ॥ ॥ ॥ ॥ ॥ ॥ ॥

१ 'तदज्ञात्वा लोकोभ्रमतिजडदुःखाब्धि' इतिपाठः ।

तस्मात्त्वामेवाहंप्रपद्यइत्याह । महामोहेति । महामोहेनकारणाज्ञानेनाध्यस्तेअतएवानृतजडपरिक्लेशवपुषि ।अतएव । विसारेसारवर्जितेऽतएव विगतसुखलेशे । अतएवातिनिरयेसंसारेनिमग्नानांनराणांशरणंतस्मादुद्धारकंत्वमेवासि । एतद्योग्यताबोधकंसंबोधनद्वयम् । शंकरविभो तस्मात् हेशंभो स्वस्वरूपभूतंसुखंदत्वादुःखनिबिडंभवंपरिहरअर्थात्सर्वस्यापीत्यर्थः ॥ २२ ॥ यस्मात्त्वांविनाशरण्यंशरणांनपश्याम्यतस्त्वामेवशरणंप्राप्तइत्याह । ऋतइति । ईशानंसर्वनियंतारं त्रिनेत्रमुदारात्मवपुषं विनाक्वचिदपिस्वर्गादावपिभवहरंनप

||२३||

महामोहाध्यस्तेऽनृतजडपरिक्लेशवपुषिविसारेसंसारेविगतसुखलेशेऽतिनिरये ॥ निमग्नानांनॄणां त्वमसिशरणंशंकरविभोप्रपद्येत्वांशंभोपरिहरभवंदुःखनिबिडम् ॥ २२ ॥ ऋतेत्वामीशानंत्रिनयनमुदारात्मवपुषंनपश्यामीड्यांघ्रेक्वचिदपिशरण्यंभवहरम् ॥ शिवंस्वात्माभिन्नंश्रुतिशतशिरोभिःप्रकटितंविचार्याहंनाथप्रणववपुषंत्वामुपगतः ॥ २३ ॥ अनादौसंसारेजनिमृतिभयेत्वांस्वसुहृदंप्रभुंस्वात्मारामंपरमकृपयालंकृततनुम् ॥ शरण्यंलोकोऽयंजडमतिरतिभ्रांतिवशगोनकाशीशंयातीश्वरशरणमेकांतसुखदम् ॥ २४ ॥

श्यामि । अतः शिवमद्वैतमित्यादिश्रुतिशतशिरोभिः प्रकटितंस्वात्माभिन्नंशिवंविचार्य हेनाथ प्रणववपुषमकारोकारमकारार्धमात्रात्मवाचकोंकाररूपंतत्प्रतिपाद्यविश्वतैजसप्राज्ञविराड्हिरण्यगर्भेशतल्लक्ष्यरूपंत्वामुपगतः शरणंप्राप्तः ॥ २३ ॥ तत्रापिमरणमात्रेणमोक्षदंकाशीशंत्वामयंलोकः अहोशरणंनयातीत्याक्रोशन्निवाह। अनादाविति। यतोजडमतिरतोऽतिभ्रांतिर्महामायातद्वशगः ॥ २४ ॥

||२३||

१ ‘ वपुषि भ्रमागारे ध्वांते ’ इतिपाठः ।

यद्यपित्वांस्तोतुंनकोऽपिसमर्थस्तथापिनिष्किंचनस्यसंन्यासिनोमेवचनैरेवकुसुमैःपुष्पैस्त्वत्पादेपूजनंभवत्वित्याह । कइति । यतःशतप्टते श्रुतुर्मुखस्यापिवाचामविषयंयतस्त्वंनिरालंबोवाचामालंबेनजात्यादिनारहितः । यतः शुद्धः । ननुनिरालंबनत्वे शून्यत्वंस्यादित्या शंक्याह । प्रकृतीति । प्रकृतिपुरुषेशं परापरप्रकृतिनियंतारमतएवमृडंसुखस्वरूपम् । विषयसुखवज्जन्यत्वंवारयति । अजम् । यद्य प्येवंतथापिसुखाराध्येअनायासेनैवाराध्ये तत्रापिसंसृतिलक्षणश्रमहरे अतएव सर्वैरपिध्येयेत्वत्पादेमद्वचनकुसुमैः पूजनंभवतुयतए

कईष्टेत्वांस्तोतुंरातधृतिगिरामप्याविषयंनिरालंबंशुद्धंप्रकृतिपुरुषेशंमृडमजम् ॥ तथापित्वत्पादे वचनकुसुमैःपूजनमिदंसुखाराध्येध्येयेभवतुममशंभोश्रमहरे ॥ २५ ॥ एवंस्तुत्वामहादेवंवि श्वेश्वरमुदारधीः ॥ अन्नपूर्णालयंगत्वातांतुष्टावस्तवेनसः ॥ २६ ॥ शिवांशंकरस्यार्धदेहांवि शुद्धांजगन्मातरंशंभुलक्ष्मीमुदाराम् ॥ नियंत्रींसमस्तस्यविश्वस्यकर्त्रींखलानांनिहंत्रींप्रपद्ये ऽन्नपूर्णाम् ॥ २७ ॥ पुरायाद्वितीयाचिदानंदरूपास्वयंब्रह्मशब्दाभिधेयाक्षरासीत् ॥ विधायां डहेतुंस्वशक्तिंविचित्रांससर्जाखिलंविश्वमाकाशमुख्यम् ॥ २८ ॥

तन्मात्रेणापिसर्वस्यत्वत्तः शंभवतीत्याह । हे शंभो इति ॥ २५ ॥ २६ ॥ स्तवमुदाहरति । शिवामिति । अन्नपूर्णामहंप्रपद्ये । तांविशि नष्टि । शिवामिति । शिवांसुखरूपाम् अतएव शंकरस्यशिवस्यार्धदेहाम् । अतएव जगन्मातरम् । अतएवोदारां शंभुलक्ष्मीम् । किंच समस्तस्यविश्वस्यनियंत्रींकर्त्रीं खलानांदुष्टानां दैत्यप्रमुखानां निहंत्रीम् । एवंभूतापियावस्तुतोविशुद्धेत्याशयेनोक्तं विशुद्धामिति ॥२७॥ त्वमेवसृष्टेःपूर्वंचिदद्वयांमायाख्यांस्वशक्तिमुद्बोध्याकाशादिविश्वंनिर्मायब्रह्माद्यभिधानासतीतत्तदाकारेणविविधंभासीत्याह ।पुरेतिद्वाभ्या

१ 'पुरायाहिनित्या' इतिपाठः ।

म् । पुरासृष्टेःपूर्वंयाचिदानंदरूपासाक्षात् ब्रह्माभिधेयाआसीत् । याचांडहेतुभूतामहामायाख्यात्रिगुणात्मतयाविचित्रांस्वशक्तिंविधायाकाशपवनादिकमखिलंविश्वंससर्ज । पुनश्चयाब्रह्माद्यभिधानासतीत्रिलोक्यांसरस्वतीलक्ष्म्यादिरूपाप्रतीता । याचस्वात्मानंदेवनराद्याकारं विनिर्मायविविधंभाति तासर्वस्वरूपामीश्वरीमन्नपूर्णांप्रपद्य इतिद्वयोरर्थः ॥ २८ ॥ २९ ॥ सर्वरूपापियावस्तुतः स्त्रीत्वादिविनिर्मुक्तातांप्रपद्यइत्याह । नेति । सर्वरूपासतीभासमानापिवस्तुतः सदैवकालत्रयेऽपिरूपजालैर्वर्जिता अध्यस्तस्याधिष्ठानासंस्पर्शित्वात् । अतः स्वयंज्योतिर्येषास्त्रीत्वादिरहितातांभवानीमन्नपूर्णांप्रपद्ये॥ १३० ॥ किंच मोक्षसाधनानांदुर्लभत्वादशक्योद्धारेसंसार

पुनर्ब्रह्मविष्णवीशमुख्याभिधानासतीवाङ्मुखायाप्रतीतात्रिलोक्याम् ॥ सुराद्याकृतिंस्वंविनिर्मायशक्त्याविभातीश्वरींतांप्रपद्येऽन्नपूर्णाम् ॥ २९ ॥ नयास्त्रीपुमान्नोनषंढाकृतिर्यास्वयंसर्वरूपासतीभासमाना ॥ स्वयंज्योतिरेषोज्झितारूपजालैःसदातांभवानींप्रपद्येऽन्नपूर्णाम् ॥१३०॥ दुरुद्धारसंसारवार्धौनिमग्नंसमीक्ष्याखिलंजीवजालंदयार्द्रा ॥ विधायाविमुक्तात्मतांयाप्रयाणेजनोद्धारिणींतांप्रपद्येऽन्नपूर्णाम् ॥ ३१ ॥ कलौयाविमुक्तिंददातिप्रयाणेनरेभ्यःपशुभ्यःकृमिभ्यःस्थिरेभ्यः ॥ स्वयंब्रह्मविद्यासतीकाशिकायांमहेशप्रियांतांप्रपद्येऽन्नपूर्णाम् ॥ ३२ ॥

सागरेनिमग्नंजीवजालंवीक्ष्य दयार्द्रासतीअविमुक्तक्षेत्ररूपतां विधाय याप्राणोत्क्रमणसमयेजनोद्धारिणीतांसर्वस्यमोक्षदानेनियतिभंगंकस्यचित्तप्रदानेवैषम्याद्यापत्तिंचालोच्यैवंकृतवतीमन्नपूर्णां प्रपद्ये ॥ ३१ ॥ जनोद्धारिणीत्येतद्विवृणोति । कलाविति । ननुमुक्तिंतुमहेश्वरोददातीतिचेत्तत्राह । स्वयंब्रह्मविद्येति । तमेवविदित्वातिमृत्युमेति नान्यः पंथाविद्यतेऽयनायेत्यादिश्रुत्या ब्रह्मविद्या

१ 'ज्योतिरेषायुता' इतिपाठः ।

याएवमोक्षप्रदायकत्वावधारणात् तथाच महेश्वरस्यापितद्द्वारैवमोक्षदत्वंनस्वातंत्र्येणेतिभावः ॥ ३२ ॥ तस्मात्तपआदिहीनानायाप्रयाण कालेअविमुक्तक्षेत्रेगतिर्नामेवान्नपूर्णासदाहंप्रपद्यइत्याह । नेति। येषांतपआद्याश्रयोनास्तिवैराग्यादिनांतर्द्धदिबोधोऽपिनैव तेषांयाअवि मुक्तेशिवेनकदाप्यत्यक्तेप्रयाणेगतिस्ताम् । येषांक्वापिगतिर्नास्तितेषांवाराणसीगतिरित्युक्तेः ॥ ३३ ॥ तथाचैवमनायासलभ्यांमुक्तिं कोवाविवेक्युपेक्षेतेत्याह । अहो इति । कलौसर्वथाप्यसंभावितमोक्षेतत्रापिदेहत्यागमात्रेण तत्रापिजंतुमात्रस्यशंभुपत्न्यास्वयंप्रार्थना दिविनैवदीयमानामन्यत्रातिदुर्लभामनपेक्ष्यपिमोक्षलक्ष्मीमात्मसिद्धिंकोवाविवेकीसाक्षादुपेक्षेत । यउपेक्षेतसविवेक्येवनभवतीत्यर्थः ॥३४॥

नयेषांतपोयोगयज्ञादिकर्माश्रयोनैवबोधोविरागादिनांतः ॥ गतिर्याहितेषांप्रयाणेविमुक्तेशि वातांसदाहंप्रपद्येऽन्नपूर्णाम् ॥ ३३ ॥ अहोदुर्लभांमोक्षलक्ष्मींविशालामुपेक्षेतकोऽद्धाविवेक्या त्मसिद्धिम् ॥ स्वयंदीयमानांकलौशंभुपत्न्यापरित्यागमात्रेणदेहस्यजंतोः ॥ ३४ ॥ नमस्ते शिवायैगिरीशप्रियायैसुखायैनिजानंददात्र्यैमहत्यै ॥ नमःप्रत्यगात्मस्वरूपस्थितायैपरब्रह्म बोधोदयायैसदास्तु ॥ ३५ ॥ शिवांनीलकंठप्रियांस्वात्मबुद्धौनिधायान्नपूर्णालयेयुक्तचित्तः ॥ स्तवंयःपठेद्देवदेव्याःसदेमंप्रसन्नाभवेत्तस्यदेव्यन्नपूर्णा ॥ ३६ ॥ ॥ ॥ ॥

अतस्त्वामेवपुनःपुनर्नमामीत्याह । नमइति । तेतुभ्यंशिवायैपार्वत्यैनमः । शिवोऽप्यनयैवप्रीयतइत्याह । गिरीशप्रियायैइति । यतःसुखरूपायै अतएवनिजानंददात्र्यै अतएव महत्यैअपरिच्छिन्नस्वरूपायै अतएव प्रत्यगात्मस्वरूपेणस्थितायै । किमर्थंनमस्करो षीतिचेत्तत्राह । परब्रह्मेति । परब्रह्मबोधस्योदयोयस्यास्तस्यैसदैवनमोऽस्तु । नमःशब्दद्वयस्यसदेत्यस्यचप्रयोगेणनमोनमस्तेऽस्तुसहस्रकृ त्वःपुनश्चभूयोऽपिनमोनमस्तइतिवन्नमस्कारावृत्तिं सूचयति ॥ ३५ ॥ एतत्स्तोत्रपठनादिफलमाह। शिवामिति ॥ ३६ ॥

॥ ३७ ॥ शिवापार्वती ॥ ३८ ॥ ३९ ॥ निरवधिसुखदेन यतः स्वात्मस्वरूपंप्राप्तेनदेशिकेनोपदेष्ट्राश्रीगोविंदनाथेनवेदांतविचारेप्रेरितोयतिवराणांशांत्यादिगुणैःसंयुक्तः अतएव प्रख्यातसुजनेषुकीर्तिर्यस्यसः यतीशःश्रीशंकरः काशींप्राप्यतस्थौ । जीवनेजले॥१४०॥

गंगयालंकृतांकाशींप्राप्यगंगांव्यगाहत ॥ तांप्रणम्यावगाह्याथतत्तीरेतस्थिवान्मुनिः ॥ ३७ ॥ शिवंशिवादिसंयुक्तंनत्वासंपूज्यभक्तितः ॥ तत्रैवचमहाक्षेत्रेमोक्षदेतस्थिवान्यतिः ॥ ३८ ॥ निरवधिसुखदेनस्वात्मभावंगतेनप्रथितसुजनकीर्तिःशंकरोदेशिकेन ॥ श्रुतिशिखरविचारेप्रेरितोऽसौहिकाशींयतिवरगुणयुक्तःप्राप्यतस्थौयतीशः ॥ ३९ ॥ प्रतिदिनमिहगांगेजीवनेसंनिमज्ज्यश्रुतिशिखवरचोभिःसंविचार्यात्मतत्त्वम्॥ अचलपदनिविष्टःसंबभौशंकरोऽसौविमलसुखजनन्यांशंभुपुर्यांप्रसन्नः॥ १४० ॥ इतिशांकरदिग्विजयसारेश्रीमन्मुकुंदपदारविंदमकरंदाभिलाषिसदानंदाख्यविदुषाविरचितेगुरुसंगमकाशीप्रवेशोनामतृतीयःसर्गः ॥ ३ ॥

इति श्रीपरमहंसपरिव्राजकाचार्यबालगोपालतीर्थश्रीपादशिष्यदत्तवंशावतंसरामकुमारसूनुधनपतिसूरिकृते शांकरविजयडिंडिमे तृतीयः सर्गः ॥ ३ ॥

---

१ 'विश्वेशंसपरीवारंरामंसंपूज्यभक्तितः' इतिपाठः ।

एवं संन्यासाश्रमप्रवेशादिकंनिरूप्यशिवसं॑गमपूर्वकंब्रह्मविद्याप्रतिष्ठेत्यादि निरूपयितुमुपक्रमते । अथेति ॥ १ ॥ आदिपदेनविवेकादिसंग्रहः । तंब्राह्मणं । मुनिः श्रीशंकरः ॥ २ ॥ प्रथमप्रश्नस्योत्तरमाह । विप्रोऽस्मीति । द्वितीयस्योत्तरमाह । मेइति । तृतीयस्यतदाह । अतिसंतप्तइत्यादिना ॥ ३ ॥ ४ ॥ ५ ॥ अकृत्रिमंकृतिर्मिथ्याकल्पनातयानिर्वृत्तं इहलोकेषुअकृत्रिममजन्यं लोकपालत्वमपिममाकां

अथश्रीशंकरेतत्रस्थितेकाश्यांमहामुनौ ॥ एकांतेकश्चिदागत्यब्राह्मणोवेदपारगः ॥ १ ॥ प्रणनामयतिंसम्यग्वैराग्यादिसमन्वितः ॥ उत्थाप्यतंमुनिःप्राहकस्त्वंकुत्रगृहंकुतः ॥ २ ॥ आगतोऽसीतिसंपृष्टःप्राहविप्रोऽस्मिमेगृहम् ॥ चौलदेशेऽतिसंतप्तोदर्शनार्थीसतामहम् ॥ ३ ॥ संभ्रांतोऽस्मिबहून्देशान्दैवात्प्राप्तःपुरीमिमाम् ॥ शरणंत्वांप्रपन्नोऽस्मिपूर्वपुण्यवशादहम् ॥ ४ ॥ रक्षमांघोरसंसारात्तप्यमानंकृपानिधे ॥ आविरिंचेरिमेलोकाःस्पर्धातिशयदूषिताः ॥ ५ ॥ नास्तीहाकृत्रिमंसौख्यंकृत्रिमंनभजाम्यहम् ॥ लोकपालाइमेसर्वेलोकैःसहविनश्वराः ॥ ६ ॥ नानादोषमयाःस्वामिन्नैवतत्ररुचिर्मम ॥ संसारामयसंशांत्यैसद्वैद्यंत्वामुपागतः ॥ ७ ॥ इत्युक्तवंतंशिष्यत्वेजग्राहकृपयामुनिः ॥ ज्ञात्वासाधनसंपन्नंविरक्तंसंयतेंद्रियम् ॥ ८ ॥

क्षास्पदंनभवतीत्याह । लोकपालाइति ॥ ६ ॥ तर्हियःकश्चिदेवगुरुस्त्वयास्वाभीष्टसिद्धयेसंश्रयणीयइतिचेत्तत्राह । संसारेति । एवं भूतशिवावतारत्वादितिभावः । तथाचश्रुतिः । भिषक्तमंत्वाभिषजांशृणोमीति ॥ ७ ॥ ८ ॥

---

१ ‘ उत्थाप्यतंब्राह्मणंभिक्षुःपृष्टवान्कःकुतोभवान् ॥ २ ॥ एवंपृष्टोद्विजःप्राहचोलदेशेगृहंमम ॥ संसारतापसंतप्तो ’ इतिपाठः ।

प्रैषोच्चारणंपुत्रैषणावित्तैषणालोकैषणामयात्यक्ताःस्वाहेत्यादिमंत्रोच्चारणम् । आदिपदेनप्रज्ञानं ब्रह्मेत्यादिसंग्रहः ॥ ९ ॥ ॥ १० ॥ अनुजगृहेअनुगृहीतवानित्यस्यसर्वैः संबंधः ॥ ११ ॥ अचीकरतकृतवान् ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ तद्बुदाहरति । अद्वितीयमिति । एकमेवाद्वितीयं । असंगोह्ययंपुरुषः । सत्यंज्ञानमनंतं । विज्ञानमानंदमित्यादिश्रुतिभिर्निर्णीतं तत्र तथाभूतेप्रत्यगभिन्नेब्रह्म

ससंन्यासमदात्तस्मैप्रैषोच्चारणपूर्वकम् ॥ तत्त्वमस्यादिवाक्याग्र्यैःस्वात्मतत्त्वमुपादिशत् ॥ ९॥
शंकरस्यगुरोरादौशिष्योजातःसनंदनः ॥ येविरक्ताःसमायाताःशिष्यत्वंप्रापिताश्चते ॥ १०॥
शेषोहिसाधुशब्दैर्नॄन्सूत्रैर्व्यासोऽनुजगृहे ॥ वाल्मीकिःकाव्यसंरीत्याजैमिनिःकर्मशोधनैः॥ ११॥
संसारसागरेमग्नान्दृष्ट्वाश्रीशंकरोजनान् ॥ ब्रह्माद्वैतोपदेशेनकृतकृत्यानचीकरत् ॥ १२ ॥ गंगायामेकदास्नातुमेकाकीशंकरोगतः ॥ तदैवपथिसंप्राप्तंचंडालंसंददर्शसः ॥ १३ ॥ श्वभिश्चतुर्भिरायुक्तमतिमंदतराकृतिम् ॥ शंकरस्तमुवाचेदंपंथानंत्यजमास्पृश ॥ १४ ॥ श्रुत्वासचांत्यजोभिक्षुंप्रहसन्निदमब्रवीत् ॥ वचोवेदांतसंसिद्धंन्याययुक्तमुदारधीः ॥ १५ ॥ अद्वितीयमसंगंयत्सुखरूपमखंडितम् ॥ निर्णीतंश्रुतिभिस्तत्रचित्रंतेभेदकल्पना ॥ १६ ॥ दंडिनोधृतकुंडायेवेषमात्रेणभिक्षवः ॥ ज्ञानशून्यागृहस्थांस्तेवंचयंतिभवादृशाः ॥ १७ ॥

णितवाद्वैतवादित्वेनप्रसिद्धस्यापिभेदकल्पनाचित्रमाश्चर्यरूपा अयोग्यत्वात् ॥ १६ ॥ तस्मादेवंभूताभवत्सदृशागृहस्थवंचनार्थंगृहीतयतिवेषा नतुमोक्षायेत्याह । दंडिनइति ॥ १७ ॥

तत्र ५ रंत्यजमास्पृशेतिकंत्यक्तुमिच्छसिदेहंदेहिनंवेति विकल्प्यदूषयति । त्यजमार्गमिति । उभयमपिन्याय्यं न भवति ॥ १८ ॥ आद्यस्यतत्त्वेहेतुमाह । नहीति । हिंयस्मादन्नमयंशरीरमन्नमयात्तस्माद्भिन्नं न भवति । द्वितीयस्यतत्त्वंदर्शयति । स्वतइति । स्वस्मात्साक्षिणोभेदः क्वास्ति न क्वापीत्यर्थः । तथाच सर्वसाक्षिस्वरूपेएकस्मिन्नात्मनिअहंब्राह्मणः अयमंत्यजइति भेदस्तवाद्वैतवादिनःकथम् । नयुज्यतइत्यर्थः ॥ १९ ॥ तत्रदृष्टांतोयथा । गंगायांमदिरायांचप्रतीतयोः सूर्यप्रतिबिंबयोर्भेदः कः न कोऽपि । ननुआत्मनोभेदशून्यत्वे

त्यजमार्गमितिस्वामिन्कंवापरिजिहीर्षसि ॥ देहंवादेहिनंवात्वंनोभयत्रापिसांप्रतम् ॥ १८ ॥
नह्यन्नमन्नतोभिन्नंक्वभेदःसाक्षिणःस्वतः ॥ ब्राह्मणांत्यजयोर्भेदःकथंतेप्रत्यगात्मनि ॥ १९ ॥
सुरनद्यांसुरायांवाकोभेदःसूर्यबिंबयोः ॥ अहंद्विजोऽयंचांडालःकस्तेमिथ्याग्रहोयते ॥ २० ॥
अशरीरंशरीरेषुसंतमेकंपुरातनम् ॥ विस्मृत्याद्यमनंतंस्वंक्वतेऽहंताकलेवरे ॥ २१ ॥ क्वकाशीक्व
चतेवेषःक्वभेदोऽनर्थकारणम् ॥ अहोमहांतोमुह्यंतिमायाजालेमनस्विनः ॥ २२ ॥

ऽप्युपाधिभेदोऽस्त्येवेतिचेदुपाध्योरप्यन्नमयत्वेनभेदाभावस्योक्तत्वान्नैवमित्याशयेनाह । अहमिति । हेयते तेनायमुचितइति संबोधनाशयः ॥ २० ॥ किंच अशरीरंशरीरेष्वप्यनवस्थेष्ववस्थितं महांतंविभुमात्मानंमत्वाधीरोनशोचतीत्यादिश्रुतिसिद्धंस्वस्वरूपंविस्मृत्यदेहाभिमानो नोचितइत्याशयेनाह । अशरीरमिति । शरीरेषुसंतमपिवस्तुतोऽशरीरत्वादेकंपुरातनत्वादनंतम् ॥ २१ ॥ तस्मादिदंत्वद्वेषैतद्देशानुरूपं न भवतीत्याह । क्वेति । अनुचितत्वादिदमत्यद्भुतमित्याह । अहोइति ॥ २२ ॥

---

१ 'स्वयम्' इतिपाठः ।

भिदाभेदम् ॥ २३ ॥ भेदशून्यबुद्धेरतिदुर्लभत्वान्नकोऽप्युपालंभनीयइत्याशयेनाह । बहवइति । विदंतिजानंति तथाचोक्तंभगवता मनुष्याणांसहस्रेषुकश्चिद्यततिसिद्धये। यततामपिसिद्धानांकश्चिन्मांवेत्तितत्त्वतइति ॥ २४ ॥ ननुतिष्ठतुपरेषांवार्ता तवबुद्धिरपभेदास्तिनवेत्याशंक्याहमपभेदबुद्धिरित्युत्तरमनुचितंमन्यमानो नमोवयंब्रह्मिष्ठायकुर्मइति याज्ञवल्क्योक्तिमनुसृत्यन्याजेनसमाधत्ते । सर्वमिति ॥ २५ ॥ चितिश्चेतना । पुत्तिकापतंगिकाख्याऽतिसूक्ष्मजंतुः ॥ २६ ॥ यत्रयत्रघटादिरूपेऽर्थे । एतेनपंथानंत्यजमास्पृशेतिमयादेहजिहीर्षयानोक्तं

इत्येवमुक्त्वाविरतंप्राहेत्थंविस्मितोयतिः ॥ सत्यमुक्तंत्वयोदारसंत्यजाम्यधुनाभिदाम् ॥२३॥ बहवःपंडिताःसंतिश्रुतिशास्त्रविशारदाः ॥ अपभेदांमतिंकर्तुंकेचिदेवविदंतिच ॥ २४ ॥ सर्वमात्ममयंविश्वंभातियस्यमहात्मनः ॥ द्विजोवाश्वपचोवास्तुवंदनीयःसमेगुरुः ॥ २५ ॥ याचितिर्विष्णुधात्रादौभातिसापुत्तिकादिषु॥ सैवाहंनास्तिवैदृश्यंयेनबुद्धंसमेगुरुः ॥२६॥ यत्रयत्रभवेद्बोधस्तत्तदर्थमुपेक्षयत्[1] ॥ बोधमात्रमहंतत्स्यांबुद्धंयेनसमेगुरुः ॥ २७ ॥ भाषतेयावदित्थंसतावदग्रेशिवःस्वकम्[2] ॥ वेदैश्चतुर्भिरायुक्तंदर्शयामासतद्वपुः ॥ २८ ॥ भयेनभक्तिधैर्याभ्यांयुक्तःश्रीशंकरोयतिः ॥ तुष्टाववाग्भिरग्र्याभिःप्रत्यगात्मानमीश्वरम् ॥ २९ ॥

नाप्यात्मजिहीर्षयापितूभयतादात्म्याध्यासवज्जिहीर्षया । सचतवनास्तिचेत्तर्हित्वमपिममगुरुरेवेत्याक्षेपोऽपिपरिहृतोवेदितव्यः ॥ २७ ॥ एवं निर्व्यलीकंभाषमाणस्त्यक्तांत्यजविग्रहंप्रकटितस्वस्वरूपं शिवंददर्शेत्याह । भाषतइति । तदंत्यजशरीरमेवस्वकंचंद्रशेखरंवपुःदर्शयामास ॥ २८ ॥ २९ ॥



१ 'समुपेक्ष्यया' इतिपाठः । २ 'स्वयम्' इतिपाठः ।

वाचउदाहरति । दासइति ॥ ३० ॥ ३१ ॥ यदात्मनः यस्यात्मनः ॥ ३२ ॥ ३३ ॥ तर्कमुद्रयातर्जन्यंगुष्ठसंयोजनरूपयाज्ञानमुद्रया ॥ ३४ ॥ ३५ ॥ ३६ ॥ यःश्रोतव्यादिविधेर्विधायकोविवेकादिकंप्राप्यगुरुं भजतिसत्वमेवेत्याह । विवेकेति ॥ ३७ ॥ मुक्तोऽपित्वमेवे

दास हदृष्ट्याहंजीवदृष्ट्यातवांशकः ॥ आत्मदृष्ट्यात्वमेवाहमितिमेनिश्चितामतिः ॥ ३० ॥
यस्यभासाप्रकाशंतेलोकालोकेशमानिनः ॥ नमस्तस्मैचिदानंदवपुषेपरमात्मने ॥ ३१ ॥ ज्ञातृ
ज्ञेयविभागोऽयंसत्तांप्राप्ययदात्मनः ॥ भातितस्मैमहेशायशिवायगुरवेनमः ॥ ३२ ॥ ब्रह्मवि
द्यास्वरूपिण्यापार्वत्यालिंगितःसदा ॥ शिवोभातिवसन्काश्यांयस्तस्मैब्रह्मणेनमः ॥ ३३ ॥
सनकादिमुनिभ्योयस्तत्त्वंवस्तुचिदद्वयम् ॥ निर्दिशन्भद्रयातर्कमुद्रयावटसन्निधौ ॥ ३४ ॥
सेव्यमानःसदैवास्तेनंदीशप्रमुखैर्गणैः ॥ आत्मारामोमहादेवस्तस्मैतेब्रह्मणेनमः ॥ ३५ ॥ सृष्ट्वेदं
जीवरूपेणप्रविष्टःसर्वदेहिषु ॥ अलिप्तोव्योमवन्नित्यंयस्तस्मैब्रह्मणेनमः ॥ ३६ ॥ विवेकवै
राग्यशमादिसंपदाजिज्ञासुतांप्राप्यगुरुंभजेत्तुयः ॥ श्रोतव्यमंतव्यविधेर्विधायकस्तस्मैनमोभि
क्षुवरायशूलिने ॥ ३७ ॥ मोहंपरित्यज्यचिदात्मनिस्वयंनिष्ठांपरांप्राप्यरमेतयःपरे ॥ बोधे
सदानंदघनेह्यदृश्यकेतस्मैनमोवीतभयायशंभवे ॥ ३८ ॥ ॥ ॥

त्याह । मोहमिति । कुत्सितदृश्येतुनरमेत ॥ ३८ ॥ ॥ ॥ ॥ ॥

उपसंहरन्काश्यांतारकमंत्रेणसंसारदावानलोपशामकंनमस्यति । वेदैरिति । स्वदृशास्वीयकरुणादृष्ट्यास्वज्ञानेनवा ॥ ३९ ॥ ४० ॥ नारायणस्तदवतारभूतः । अनुअनुसृतः ॥ ४१ ॥ सूत्रभाष्यरचनेनुयोक्तुमुपक्रमते । संगृह्येति । वेधसासर्ववविदा ॥४२॥ ४३ ॥ ४४ ॥

वेदैःसदामूर्तिधरैर्विराजतेसांगैःसमंत्रैःसरहस्यकैर्विभुः ॥ संसारदावानलतापितान्जनान्संजीवयन्यःस्वदृशानमोऽस्तुते ॥ ३९ ॥ इत्येवंसंस्तुतोदेवःसमाभाष्येदमब्रवीत् ॥ धन्योऽसिकृतकृत्योऽसिसर्वज्ञोऽसियतीश्वर ॥ ४० ॥ यथानारायणोव्यासःप्रियोमेत्वंतथायते ॥ अहंत्वमेवत्वंचाहंयस्त्वामनुसमामनु ॥ ४१ ॥ आवयोरंतरंनास्तिमुनीनामाशयोह्ययम् ॥ संगृह्यश्रुतिसर्वस्वंवेदव्यासेनवेधसा ॥ ४२ ॥ ब्रह्माद्वैतात्ममीमांसारचितामोक्षतत्परा ॥ यत्रसांख्यपुरोगाणांमतमुद्दिश्यखंडितम् ॥ ४३ ॥ तत्रमूढधियःकेचिद्भाष्यांभासानिचक्रिरे[1] ॥ अन्यथावेदवाक्यानिव्याख्यातानिकुबुद्धिभिः ॥ ४४ ॥ नसर्वज्ञंविनातेषांसूत्राणांसंप्रकाशकः ॥ अतस्त्वंसर्वशक्तित्वात्सर्वज्ञत्वाच्चभोमुने ॥ ४५ ॥ यथाश्रुतीनांसर्वासांपरब्रह्मणिनिष्ठता ॥ तथाद्वैतपरंभाष्यंकुरुष्वाभिनिवेशतः ॥ ४६ ॥ श्रुतिसूत्रेतिहासानांव्याख्यांनिर्माययत्नतः ॥ संप्रदायविदांमार्गःप्रकाश्यस्तेऽधुनायते ॥ ४७ ॥ ॥ ॥ ॥

॥ ४५ ॥ अद्वैतपरम् ॥ ४६ ॥ ४७ ॥ ॥ ॥ ॥ ॥

[1] ' भाष्याभासांश्चचक्रिरे ' इतिपाठः ।

॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ अत्र श्रीशंकरस्यशिवत्वेऽपि महादेवेनसंवादादि व्यासस्यनारायणेनसंवादादिवद्दृष्ट

ष्यप्रशिष्यरूपेणवेदांतैकनिबंधनम् ॥ कृत्वादिशांसुविजयःकार्योऽद्वैतप्रसिद्धये ॥ ४८ ॥ यदायदाहिसंकीर्णोभवेद्वेदक्रमोमुने ॥ तदातदावतीर्याहंकरोम्यर्थविनिर्णयम् ॥ ४९ ॥ त्वया कृतानिभाष्याणिप्रसरिष्यंतिसर्वतः ॥ पद्मयोनिसभामध्येयास्यंतिपरिनिष्ठताम् ॥ ५० ॥ मंडनंकर्मठंजित्वातथाजित्वाप्रभाकरम् ॥ नीलकंठंतथाशैवंगुप्ताख्यंशक्तिपूजकम् ॥ ५१ ॥ भेदाभेदमतेनिष्ठंभास्करंवेदतस्करम् ॥ जित्वाशिष्यत्वमानीयमतंप्रख्यापयाद्वयम् ॥ ५२ ॥ मोहांधकारदलनेसाक्षादद्वैतभास्करः ॥ विनिवेश्यविनेयांस्त्वंमामुपैष्यस्यतःपरम् ॥ ५३ ॥ भिक्षुणेत्थं समाभाष्यमहादेवःसहागमैः ॥ अंतर्धानमगात्तत्रशंकरःप्रापजान्हवीम् ॥ ५४ ॥ तत्रान्हिक विधिंकृत्वाध्यायन्नीशंहृदिस्थितम् ॥ तस्थौविचारयामासवेदान्तानर्थतोयतिः ॥ ५५ ॥ ततोऽस्यसर्वशक्तित्वात्सर्वज्ञत्वाद्यतीशितुः ॥ भाष्यकर्तृत्वशक्तिश्चस्वयमाविरभूद्धृदि ॥ ५६ ॥ तस्मिन्नेवदिनेयात्रांबदरीकाननस्यसः ॥ विधायमार्गमाश्रित्यगच्छन्संप्रापतद्वनम् ॥ ५७ ॥

व्यम् ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ॥ ॥ ॥ ॥

१ 'शाक्तिकं तथा' इतिपाठः ।

॥२९॥

संगतोमुनिभिस्तत्रोदारैर्ब्रह्मर्षिभिःसह ॥ संविचार्यागमान्तान्ससंचिंत्यापिस्वयंमुहुः ॥ ५८ ॥
ईशावास्यप्रभृतिषुदशसूपनिषत्सुच ॥ भाष्यंव्यधत्तगीतासुविष्णोर्नामसहस्रके ॥ ५९ ॥
भाष्यंसनत्सुजातीयेकृत्वावेदांतसत्कृतम् ॥ भाष्यंप्रसन्नंगंभीरंवेदांतार्थप्रकाशकम् ॥ ६० ॥
नृसिंहतापिनीव्याख्यामुपदेशसहस्रकम् ॥ कृत्वानेकनिबंधांश्चस्वशिष्येभ्यउपादिशत् ॥ ६१ ॥
शांतिपाठंविधायादौशिष्यान्कृतनमस्क्रियान् ॥ स्वयमध्यापयामासवेदभाष्याण्युदारधीः
॥ ६२ ॥ शांतिपाठंततोऽस्यांतेसहशिष्यैर्विधायसः ॥ मंतव्यार्थेषुशिष्यान्स्वान्योजयित्वाव
भौयतिः ॥ ६३ ॥ गुणैःशांत्यादिभिर्युक्तोज्ञानवैराग्यसंपदा ॥ भगवत्पूज्यपादस्यशिष्यःश्रेष्ठः
सनंदनः ॥ ६४ ॥ एकदाजान्हवीपारेतीरेशिष्यंसनंदनम् ॥ गंगाऽवारेस्वयंस्थित्वाभगवाना
जुहावतम् ॥ ६५ ॥ संसारसागराद्भक्तिस्तारिकासरितोनकिम् ॥ तारिकेतिसनिश्चित्यप्रविष्टो
जान्हवीजले ॥ ६६ ॥ पादसंरक्षणेतस्यसापद्मानिपदेपदे ॥ गंगोदंचयतिस्माद्धासंतुष्टागु
रुभक्तितः ॥ ६७ ॥ ॥ ॥ ॥

॥२९॥

॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ उदंचयतिस्म उज्जृंभयामास ॥ ६७ ॥ ॥ ॥ ॥

अंतिकेसमीपे ॥ ६८ ॥ वेदांतान्पाठयंतंतं श्रीशंकराचार्यमपरेवेदांताज्ञानिनःशैवावादिनोहठादाचिक्षिपुराक्षेपान्कृतवंतः । तथाहिकार्यकारणयोगविधिदुःखांताः पंचपदार्थाः पशुपतिनेश्वरेणमोक्षायोपदिष्टाः । तत्रकार्यंमहदादि कारणंप्रधानेशौ योगःसमाधिः विधिस्त्रिषवणस्नानादिः दुःखांतोमोक्षः प्रधानमुपादानकारणं पशुपतिरीश्वरोनिमित्तकारणम् । सईक्षांचक्रे सप्राणमसृजतेत्यादिश्रुतिष्वीक्षापूर्वककर्तृत्वश्रवणात् ईक्षापूर्वकंचकर्तृत्वं निमित्तकारणेष्वेवकुलालादिषुदृष्टं अनेककारकपूर्विकायाश्चक्रियायाः फलसिद्धिर्लोकेदृष्टा सचन्यायआदिकर्तर्यपिसंक्रामयितुं युक्तः । किंच यथेश्वराणांराजवैवस्वतादीनांनिमित्तकारणत्वमेवकेवलंप्रतीयतेतद्वत्परमेश्वरस्यापिनिमित्तकारण

पदंनिवेश्यपद्मेषुश्रीगुरोरंतिकेययौ ॥ दृष्ट्वाश्लिष्यगुरुस्तस्यपद्मपादाभिधांव्यधात् ॥ ६८ ॥
एकदापाठयंतंतंवेदांतान्वादिनोपरे ॥ आचिक्षिपुर्यतिंशैवावेदांताऽज्ञानिनोहठात् ॥ ६९ ॥
तद्विकल्पान्निरस्याद्यैतर्कैर्वेदानुसारिभिः ॥ चखंडागमकांस्तेषांभाष्यकारःसुयुक्तिभिः ॥ ७० ॥

त्वमेव । किंच । सावयवमचेतनमशुद्धमिदंजगल्लक्षणम् । नानेवंलक्षणंब्रह्मोपादानकं संभवति । रुचकादीनां मृद्विकारत्वादर्शनात् । अपिचयदिदुःखमोहाद्यात्मकंकार्यंब्रह्मोपादानकंस्यात्तर्हिप्रलयेस्वोपादानेनब्रह्मणाविभागमापद्यमानंकारणमात्मीयेनदोषेणदूषयेदतोऽसमंजसमिदंजगतोब्रह्मोपादनकत्वकल्पनम् । तस्मात्कारणश्रुतयः पशुपतेरीश्वरस्यनिमित्तकारणत्वबोधिकाइत्यवश्यमास्थेयमिति ॥ ६९ ॥ नैतत्सारं ब्रह्मणोऽभिन्ननिमित्तोपादानत्वस्वीकारेप्रतिज्ञादृष्टांतयोरनुपरोधात् । प्रतिज्ञातावत् उततमादेशमप्राक्ष्योयेनाश्रुतंश्रुतंभवति अमतंमतमविज्ञातंविज्ञातमिति । यदिब्रह्मोपादानंनस्यात्तर्हीयंप्रतिज्ञोपरुध्येत । कार्यव्यतिरिक्तनिमित्तकारणविज्ञानेन तत्कार्यज्ञानादर्श

१ ‘ पद्मपादाख्यतां ’ इतिपाठः । २ ‘ यतिस्तेषांमताभासंचखंडागमयुक्तिभिः ’ इतिपाठः ।

नात्। दृष्टांतोऽपि यथासोम्यैकेनमृत्पिंडेनसर्वंमृण्मयंविज्ञातंस्याद्वाचारंभणंविकारोनामधेयं मृत्तिकेत्येवसत्यमित्युपादानगोचरएवाम्नायते। निमित्तत्वंत्वधिष्ठानांतराभावादधिगंतव्यंप्रागुत्पत्तेरेकमेवाद्वितीयमित्यवधारणादन्यथाप्रतिज्ञादृष्टांतोपरोधस्यस्पष्टत्वात्। किंचसोऽकामयतबहुस्यांप्रजायेय तदैक्षतबहुस्यांप्रजायेयेति चश्रुत्यापरमात्मनएवकर्तृत्वंप्रकृतित्वंचनिश्चीयते अत्यंतसादृश्यंतूपादानोपादेययोर्नापेक्षितं गोमयवृश्चिकयोर्देहकेशयोश्चतददर्शनात्। नापिकार्यस्यब्रह्मदूषकताघटादिविकाराणांकारणविभागमापन्नानांदूषकत्वादर्शनात् किंच कार्यस्यकारणानन्यत्वंनप्रलयेएवापितुत्रिष्वपिकालेष्वआत्मैवेदंसर्वंब्रह्मैवेदंसर्वमित्यादिश्रुतेः। कार्यस्यकारणानन्यत्वेऽपि यथामरीच्युदकेनोषरदेशः कदापि न संस्पृश्यते तथापरमात्मापीत्येवमादौवेदानुसारिभिस्तर्कैस्तेषांविकल्पान्निरस्यतदनंतरंतेषांकुत्सितानागमा

जीवेशयोर्यदाभेदःकथंमुक्तिर्भवेत्तव ॥ ध्यानजाचेन्ननित्यास्याज्जन्येनह्यस्तिनित्यता ॥ ७१ ॥

नपिसुयुक्तिभिर्भाष्यकारः खंडितवान् तथाहि पशुपतेरीश्वरस्यप्रधानपुरुषयोरधिष्ठातृत्वेनजगत्कारणत्वंनोपपद्यते हीनमध्यमोत्तमभावेन प्राणिभेदान्विदधतः पशुपतेरागद्वेषादिप्रसंगात् प्रधानपुरुषाभ्यासंबंधानुपपत्तेश्च । न तावत्संयोगलक्षणःसंबंधःसंभवति त्रयाणामपिसर्वगतत्वान्निरवयवत्वाच्च। नापिसमवायः आश्रयाश्रितभावानिरूपणात्। नाप्यन्यः कर्मगम्यःकश्चित्संबंधःशक्यतेकल्पयितुम्। कार्यकारणभावस्यैवाद्याप्यसिद्धत्वात् ॥७०॥ एवमुक्तवादिप्रकारं तदागमखंडनं चखंडेत्यनेनसूचयित्वातदभिमतयुक्तेः खंडनप्रकारंदर्शयति। जीवेशयोरित्यादिना। जीवेशयोर्यदाभेदःसत्यस्तदातवसंमताईशसमानतालक्षणामुक्तिःकथंस्यात्। ननुपशुपतिध्यानाद्भविष्यतीतिचेत्तत्राह। ध्यानेति । ध्यानजन्याचेत्तदानित्यानस्यात् । हियस्माज्जन्येभावकार्येनित्यतानास्ति । प्रध्वंसेव्यभिचारवारणायभावेति ॥ ७१ ॥

किंच मोक्षावस्थायांपशुषुजीवेषुपशुपतेरीशस्यगुणानांसंक्रमस्तैरबुधैर्भवतामाचार्यैः स्वीकृतः । स तेषांसंक्रमस्तत्रपशौनघटते ॥ ७२ ॥ तत्र हेतुमाह। गुणानामिति। ननुवायौ यथानिरवयवस्यपन्नगंधस्यसंक्रमस्तथास्मिन्जीवेपशुपतिगुणानांसंक्रमोऽस्त्विति शंकते। पशुष्विति। गंधसमवायिकमलंसूक्ष्मावयवात्मनावायुसंयुक्तंसत् भाति गंधात्मनाभासते । किंच पशुपतिगुणाएकदेशेनविमुक्तानुपाश्रयंति किंवा

किंचेशस्यगुणानांतैःसंक्रमःस्वीकृतोऽबुधैः ॥ मोक्षकालेपशौतत्रनतेषांघटतेक्रमः ॥ ७२ ॥ गुणानांकुत्रचित्केषांमतेऽप्यंशानसंमताः॥ पशुष्वीशगुणाःसंतुसमीरेपन्नगंधवत् ॥७३॥ इतिचे [illegible]गंधःसमवायिमरुद्युतः ॥ भातिकिंचैकदेशेनाश्रयंतेवापशौगुणाः ॥ ७४॥ साकल्येनाथ वा[illegible]त्रपूर्वदोषस्तुकीर्तितः ॥ द्वितीयेपरमेशस्यदोषःस्यादज्ञतातव ॥ ७५॥ इत्थंतर्ककुठारैस्ता नभिदत्प्राज्ञमानिनः ॥ जगृहुस्तेऽपिशिष्यत्वंस्वीयंपक्षंविहायवै ॥ ७६ ॥ एकदाशंकराचार्यंचो दयामासशंकरः ॥ भाष्यंशारीरकेकर्तुंवेदतत्त्वप्रकाशकम् ॥ ७७ ॥ शंभोराज्ञांपुरस्कृत्यभा ष्यंशारीरकेऽव्यधात् ॥ प्रसन्नंचातिगंभीरंचतुर्लक्षणसंयुतम् ॥ ७८ ॥ समन्वयाविरोधौचसाध नंफलमेवच ॥ तेषांचतुर्णांमीमांसाकृताभाष्यकृतापृथक् ॥ ७९ ॥ ॥ ॥

कात्स्न्र्येनआद्यपक्षे दोषस्तु निरवयवगुणानामेकदेशेनसंक्रमायोगरूपः कीर्तितः। द्वितीयेपरमेश्वरेऽज्ञतालक्षणोदोषस्तवमतेस्यात्॥ ७३॥ ॥ ७४ ॥ ७५ ॥ ७६ ॥ ७७॥ चतुर्भिर्लक्षणैरध्यायैः संयुतं संयुक्तम् ॥ ७८ ॥ तेषांनामधेयान्याह । समन्वयेति । तेषांसमन्वयादीना चतुर्णांमीमांसापूजितविचारो भाष्यकृतापृथक्पृथक्कृता ॥ ७९ ॥ ॥ ॥ ॥ ॥

|| ८० || तत्र समन्वयाध्यायेप्रथमेपादेस्पष्टब्रह्मलिंगानावाक्यानांसमन्वयाभिधायके । अथातोब्रह्मजिज्ञासेति प्रथमेसूत्रे विषयभूतं यत् श्रोतव्योमंतव्यः तद्विजिज्ञासस्वेत्यादिवाक्यंतस्मिन्बहुधाविचारः कृतः ||८१|| साधनचतुष्टयसंपत्त्यनंतरंब्रह्मजिज्ञासामुपदिशताभगवतासूत्रकृतासूचितयोर्जिज्ञास्यब्रह्मणःसंदिग्धत्वसप्रयोजनत्वयोरध्याससिद्ध्यधीनांसिद्धिं तदधीनांजिज्ञास्यत्वसिद्धिं तदायत्तंशास्त्रारंभंचाभिप्रेत्याध्यासोनेतिभवितुंयुक्तमितिभाष्यकारैरध्यासआक्षिप्त इत्याशयेनाह । शास्त्रमिति । मिथ्याशब्दोऽत्रापह्नववचनः । इति संश

आदौसमन्वयाध्यायेवेदांतानांसमन्वयः ॥ ब्रह्माद्वैतेविनिर्णीतोनानायुक्तिभिरादरात् ॥ ८० ॥
तत्रापिप्रथमेपादेसूत्रेचप्रथमेतथा ॥ श्रोतव्यइतिवाक्यादौमीमांसाबहुधाकृता ॥ ८१ ॥
शास्त्रमारंभणीयंवानवाकृत्वेतिसंशयम् ॥ पूर्वपक्षंसमाश्रित्याध्यासोमिथ्येतिभाष्यकृत् ॥ ८२ ॥
युक्तंभवितुमित्याहतदभावान्नसिध्यतः ॥ ब्रह्मणःफलवत्तासंदिग्धतेतदभावतः ॥ ८३ ॥ नास्य
जिज्ञास्यतातस्माच्छास्त्रारंभोवृथाभवेत् ॥ तथाहिब्रह्मसंदिग्धंनतदात्मैवनोपरम् ॥ ८४ ॥

यं मनसिनिधाय पूर्वपक्षंसमाश्रित्याध्यासोमिथ्येतिभवितुंयुक्तमितिभाष्यकारआहेत्यन्वयः ॥ ८२ ॥ तदभावादध्यासाभावाद्ब्रह्मणः सप्रयोजनत्वं संदिग्धत्वंच नसिद्ध्यतः ॥ ८३ ॥ ततस्तयोःसिद्ध्यभावादस्यब्रह्मणोजिज्ञास्यतानसिद्ध्यतितस्मादस्यजिज्ञास्यत्वाभावाच्छास्त्रारंभोवृथाभवेदितिसंभावनायांलिङ् । यथासंदिग्धत्वादिकंब्रह्मणोनास्तितथाप्रदर्श्यतइत्याह । तथाहीति । तद्ब्रह्मात्मैवनत्वात्मनोऽन्यत् ॥ ८४ ॥ ॥ ॥ ॥ ॥ ॥

तत्रहेतुद्वयमाह । बृहदिति । बृहत्वाद्बृंहणत्वाद्देहादिपरिणामयितृत्वात् । सचात्मा इदंकारास्पदेभ्योदेहेंद्रियमनोबुद्धिविषयेभ्यःपृथक् विवेकेनसर्वैः प्राणिभिरसंदिग्धाविपर्यासंयथास्यात्तथाहमित्यनुभूयते ॥ ८५ ॥ यतोऽहंवानाहंवेतिकस्यचिच्चिदात्मनिसंशयोनास्ति । नाहमेवेति विपर्ययश्चनास्तीत्याह । अहमिति ॥ ८६ ॥ जिज्ञास्यत्वव्यापकस्यसंदेहस्याभावाद्व्याप्याभावमाह । यदिति । तत्र दृष्टांतमा

बृहत्वाद्बृंहणत्वाच्चसचदेहादिकात्पृथक् ॥ असंदिग्धाविपर्यासंसर्वैरेवानुभूयते ॥ ८५ ॥ अहंवानाहमित्येवंसंशयोनास्तिकस्यचित् ॥ नाहमेवेतिनाप्यस्तिविपर्यासश्चिदात्मनि ॥ ८६ ॥ यन्नवस्तुसुसंदिग्धंजिज्ञास्यंस्यान्नतत्पुनः॥ जिज्ञासाविषयःस्फीतालोकमध्यगतोघटः॥ ८७ ॥ समनस्केंद्रियैःसाकंसन्निकृष्टोयथानहि ॥ दृष्टस्तथापरंब्रह्मनजिज्ञास्यंस्फुटंपुनः ॥ ८८ ॥ सप्रयोजनमेवापिजिज्ञास्यंवस्तुनान्यथा ॥ नतथास्तिपरंब्रह्मभोगादौदीनतायतः ॥ ८९ ॥ यदिब्रह्मसुखंवास्याद्दुःखाभावोऽथवाभवेत् ॥ तदालोकस्यभोगादौदीनताकिंनिमित्तिका ॥ ९० ॥ अहमस्मीतिविज्ञानेसत्येवखलुदीनता ॥ भोगादौदृश्यतेलोकेकुतोब्रह्मसुखात्मकम् ॥ ९१ ॥

ह । जिज्ञासेति । समनस्केंद्रियैः सहसन्निकृष्टोविशालालोकमध्यगतोघटोयथाजिज्ञासाविषयोनचदृष्टस्तथेतिपरेणान्वयः ॥ ८७ ॥ ॥ ८८ ॥ प्रयोजनस्यापिजिज्ञास्यत्वव्यापकतामाह । सप्रयोजनमिति । तथा सप्रयोजनम् ॥ ८९ ॥ एतदुपपादयति । यदीति॥ ९० ॥ नन्वानंदात्माऽज्ञानप्रयुक्तेयंदीनतेतिचेत्तत्राह । अहमिति ॥ ९१ ॥ ॥ ॥ ॥

दुःखाभावोऽपिब्रह्मनास्तीत्याह। आतुराणामिति ॥ ९२ ॥ नन्वहमस्मीति प्रत्ययोनब्रह्मविषयइत्याशंक्याह। अहमिति। हियतआत्मैव तद्ब्रह्मतस्मिन्नात्मनिसअहमस्मीति प्रत्ययः सर्वदा वर्तते ॥ ९३ ॥ जिज्ञास्यत्वव्यापकस्य सप्रयोजनत्वस्याभावाद्व्याप्याभाव इत्याह। नोइति। तथैवनिष्प्रयोजनमेव। अयमर्थः। संसारनिवृत्तिर्मोक्षावाप्तिरिहप्रयोजनं विवक्षितम्। संसारश्चात्मयाथात्म्याननुभवनिमित्तआत्मयाथात्म्यानुभवेन निवर्तनीयः। सचास्तिसर्वस्यसर्वदा अहमित्यनुभवादन्यस्य तस्याभावात्। नचोपनिषत्प्रतिपाद्यब्रह्मात्मभावस्यतदधी



आतुराणांसुवैद्येषुप्रार्थनाभेषजेतथा ॥ दृश्यतेनस्ततोविज्ञोदुःखाभावोऽपिनास्तितत् ॥ ९२ ॥
अहमस्मीत्यतोभिन्नोब्रह्मणिप्रत्ययोनहि ॥ आत्मैवतद्धितस्मिन्सप्रत्ययोवर्ततेसदा ॥ ९३ ॥
नोनिष्प्रयोजनंवस्तुजिज्ञास्यंदृश्यतेक्वचित् ॥ काकदंतपरीक्षावद्ब्रह्मवस्तुतथैवच ॥ ९४ ॥
ननुश्रुत्यंतवाक्येषुतत्त्वमस्यादिरूपिषु॥किमर्थंब्रह्मनिर्देशोनिष्फलंब्रह्मयद्भवेत्॥९५॥पठनंसर्ववेदानांविधिनाविहितंकिल ॥ वेदांताअपितन्मध्येयेचब्रह्मात्मतत्पराः ॥ ९६ ॥ कथंतेषांत्वयेदानींनिष्फलब्रह्मवादिना ॥ व्यवस्थाक्रियतेवादिन्नित्येवंशंकितेशृणु ॥ ९७ ॥ वेदांताउपचारार्थाजपमात्रोपयोगिनः ॥ संतुवातोनमीमांसाशास्त्रमारंभमर्हति ॥ ९८ ॥

नानुभवस्यास्मादन्यत्वमस्तीतिवाच्यम् । अहमिति सर्वजनीनस्फुटतरानुभवसमर्पितस्यदेहेंद्रियादिव्यतिरिक्तस्यात्मनउपनिषदासहस्रैरप्यन्यथाभावस्याशक्यत्वादागमसहस्रेणापिघटस्यपटत्वासंभवात्। तथाचायंप्रयोगः मुमुक्षुणाब्रह्मनविचार्यं तंप्रत्यसंदिग्धत्वात् तथाविधकुंभवत् तथानिष्प्रयोजनत्वात्काकदंतवदिति ॥ ९४ ॥ नन्वेवंसत्युपनिषदांकागतिरितिशंकते। नन्विति । यत्यदि ॥ ९५ ॥ स्वाध्यायोऽध्येतव्यइतिस्वाध्यायाध्ययनविधिना ॥ ९६ ॥ ९७ ॥ कर्तृत्वभोक्तृत्वदुःखशोकमोहमयमात्मानमवगाहमानेनसंदेहबाधवर्जिते

नाहंप्रत्ययेनविरुध्यमानावेदाताः कर्मकर्तुरात्मनः स्तावकत्वेनोपचारार्थाआरोपितार्था जपमात्रोपयोगिनोवा संतु । पूर्वपक्षमुपसंहरति अत इति । अतस्तदर्थविचारात्मकम् । चतुर्लक्षणशारीरकमीमांसाशास्त्रमारंभयोग्यंनभवतीत्यर्थः ॥ ९८ ॥ स्यादेतदेवं यदिश्रुतिस्मृतीतिहासपुराणेष्ठुगीयमानमनवच्छिन्नानंतानंदचैतन्यैकरसमुदासीनमेकमद्वितीयमात्मतत्त्वमहमित्यनुभवेन प्रकाशेत न त्वेतदस्तीत्याशयेनाह । स्यादेवमितिद्वाभ्याम् । अहंज्ञानमहमनुभवः ॥ ९९ ॥ अकलःपूर्वोक्तकलावर्जितः नास्त्यहं ज्ञानगोचरः ।

इतिप्राप्तेऽथसिद्धांतःस्यादेवंयदिबोधयेत् ॥ आत्मतत्त्वमहंज्ञानंश्रुतिस्मृत्यादिबोधितम्॥ ९९ ॥
अद्वयानंदनित्यस्वज्योतिरात्मामलोऽकलः ॥ श्रुतीतिहाससंसिद्धोनास्त्यहंज्ञानगोचरः॥१००॥
देहाद्यनात्मवर्गेषुयस्त्वहंज्ञानलक्षणः ॥ प्रत्ययोऽनर्थरूपोऽसौसंसारस्यास्यकारणम् ॥१०१॥ त
स्माच्छ्रुतीतिहासादिवाक्यजातंतथाविधम् ॥ आत्मानंदर्शयन्नैवशक्यतेकर्तुमन्यथा ॥१०२ ॥
क्वचात्मानिर्मलोऽनंतःक्वदेहोमलभाजनम् ॥ आत्मानात्मापरिज्ञानंतयोरैक्यस्यकारणम् ॥१०३॥

अहमनुभवस्यविषयोनभवति ॥ १०० ॥ तस्यप्रादेशिकानेकविधशोकदुःखादिप्रपंचोपप्लुतात्मविषयत्वेनसंसारकारणत्वादित्याह । देहादीति ॥ १०१ ॥ फलितमाह । तस्मादिति । श्रुतिस्मृतीतिहासादिवाक्यजातमुपक्रमोपसंहारादितात्पर्यलिंगैः तथाविधमात्मतत्त्वंदर्शयन्नन्यथाउपचरितार्थं जपमात्रोपयोगीत्येवंकर्तुं केनापिनैवशक्यते ॥ १०२ ॥ सर्वानर्थरूपमध्यासंप्रदर्श्य तत्कारणंमिथ्याज्ञानमित्याह । क्वेति ॥ १०३ ॥ ॥ ॥ ॥ ॥ ॥ ॥

एतत्सर्वमभिप्रेत्य तथाप्यन्योन्यस्मिन्नन्योऽन्यात्मकतामन्योन्यधर्मांश्चाध्यस्येत्यादिना भाष्यकारःअध्यासंसाधितवानित्याशयवानाह। एवंचेतिद्वाभ्याम् । तयोःफलवत्तासंदिग्धतयोः ॥ १०४ ॥ तस्यब्रह्मणः इत्याशयादसौभाष्यकृतामग्रणीरध्यासंसाधयामास ॥ १०५ ॥ अध्यासभाष्यस्योत्सूत्रत्वंवारयति। यदिति ॥ १०६ ॥ तत्रहेतुमाह। यतइति ॥ १०७ ॥ आपातेनाविचारितज्ञानेन ॥ १०८ ॥



एवंचानर्थरूपेऽस्मिन्नध्यासेसतिसिद्ध्यतः ॥ ब्रह्मणःफलवत्तासंदिग्धतेसिद्धितस्तयोः ॥ १०४ ॥
तस्यजिज्ञासितासिद्धाशास्त्रमारभ्यमित्यसौ ॥ आशयात्साधयामासाध्यासंभाष्यकृदग्रणीः
॥ १०५ ॥ यदाक्षेपसमाधिभ्यांवर्णयामासभाष्यकृत् ॥ अध्यासंनैवतत्सूत्राद्बहिर्भूतत्वमर्हति
॥ १०६ ॥ यतोऽध्यासनिवृत्त्यर्थंकरुणासागरोमुनिः ॥ शास्त्रंब्रह्मात्मबोधार्थंकृतवांस्तत्कथंशृणु
॥ १०७ ॥ सांगान्वेदानधीत्यादावापातात्मैक्यवेदिनम् ॥ प्राप्तसाधनसंपत्तिंजिज्ञासुमुपलभ्यसः
॥ १०८ ॥ ब्रह्मैक्यंन्यायसंदर्भैर्निर्णेतुंबादरायणः ॥ अथातोब्रह्मजिज्ञासेत्यादिसूत्राणिनिर्ममे
॥ १०९ ॥ तत्त्वज्ञाननिवर्त्यत्वंबंधस्यास्यतदाभवेत् ॥ यदाबंधोभवेन्मिथ्याभूतःसूत्रकृताततः
॥ ११० ॥ तेनैवसूचितासम्यग्बंधस्याध्यासताततः ॥ विषयादियुतंशास्त्रंसिद्धंबंधस्यबाधनात् ॥ १११ ॥

॥ १०९ ॥ बंधस्यसत्यत्वेबद्धाबद्धयोर्जीवेशयोरैक्यानुपपत्तेः सत्यस्यचज्ञानादनिवृत्तेस्तस्याज्ञानमात्रविरोधित्वात् बंधस्यमिथ्यात्वंतत्त्वे नबाधसंभवाच्छास्त्रस्यविषयादिमत्त्वंसिध्यतीत्यतो बंधस्याध्यासतासूत्रकारेणैवसूचितेत्याशयेनाह। तत्त्वमितिद्वाभ्याम्। तत्त्वंब्रह्मैक्यम् ॥ ११० ॥ विषयप्रयोजनसंबंधाधिकारियुतंशास्त्रंसिद्धम् ॥ १११ ॥ ॥ ॥ ॥ ॥

त्वमर्थेदृष्टस्यबंधस्य तदर्थब्रह्मज्ञानादनिवृत्तेस्तदर्थज्ञानस्यत्वमर्थविषयस्यैव तन्निवर्तकत्वसंभवादर्थात्तयोरैक्यबोधनात् अथशब्दद्योतित स्यमुमुक्षोर्विचारविधानात्तत्साध्यज्ञानसाध्योमोक्षःप्रयोजनंसूचितम् । विशिष्टाधिकार्यसत्त्वेतंप्रतिविचारकर्तव्यतोक्तेरयोगाद्विशिष्टाधिका रिसंभवोध्वनितः । ब्रह्मज्ञानायचविचारविधानाद्ब्रह्मणः शक्यप्रतिपाद्यतयाचवेदांतैः संबंधोऽपिदर्शितइत्याशयेनाह । ब्रह्मज्ञानायेति ॥ ११२ ॥ तथाचसूत्रेणसूचितानांविषयादीनांसंभवाद्वेदांतविचारात्मकंचतुर्लक्षणं प्राच्यामीमांसयाअगतार्थत्वादद्भुतमेतच्छारीरकमी मांसालक्षणंशास्त्रमारभ्यमित्याह । संभवादिति ॥ ११३ ॥ अथाध्यासभाष्यस्योत्सूत्रतापरिहारोपसंहारपूर्वकंतद्भावार्थवर्णनंप्रतिजानीते ।

ब्रह्मज्ञानायवेदांतविचारःक्रियतामिति ॥ वदतासूत्रकारेणसूचिताविषयादयः ॥ ११२ ॥ सं भवाद्विषयादीनांसूचितानांहिसूत्रतः ॥ शास्त्रमेतत्समारभ्यंविचारात्मकमद्भुतम् ॥ ११३ ॥ तस्मा दुक्तमभिप्रायंसमाश्रित्ययतीश्वरः ॥ अकृताध्यासभाष्यंयत्तद्भावार्थोनिगद्यते ॥ ११४ ॥ अ ध्यासरहितावात्मानात्मानौक्वाप्यदर्शनात् ॥ तयोरन्योन्यभावस्यप्रकाशतमसोर्यथा ॥ ११५ ॥

तस्मादिति ॥ ११४ ॥ तत्रादौयुष्मदस्मत्प्रत्ययगोचरयोर्विषयविषयिणोस्तमःप्रकाशवद्विरुद्धस्वभावयोरितरेतरभावानुपपत्तौसिद्धायां तद्धर्माणामपिसुतरामितरेतरभावानुपपत्तिरित्यतोऽस्मत्प्रत्ययगोचरेविषयिणिचिदात्मके युष्मत्प्रत्ययगोचरस्यविषयस्यतद्धर्माणांचाध्या सस्तद्विपर्ययेणविषयिणस्तद्धर्माणांचविषयेऽध्यासोमिथ्येतिभवितुंयुक्तमिति भाष्यस्यतात्पर्यार्थमाह । अध्यासरहिताविति । अन्यस्यान्य भावोवानामैक्यमन्यस्मिन्नन्यभावस्तादात्म्यं तस्यक्वाप्यदर्शनात् । तत्प्रमितेःक्वाप्यभावात् । अयमर्थः चैत्रेमैत्रोऽयमित्यध्यासोऽन्यत्रैक्य प्रमित्यपेक्षः । संस्कारजन्यत्वात्तत्प्रमितिश्चैक्यतेत्यात्मानात्मनोरैक्याध्यासेऽपि तत्प्रमित्यादेरवश्यंभावात्तदभावान्नाध्यासइति ॥ ११५ ॥

हेत्वसिद्धिंपरिहरति। तयोरिति। विरुद्धत्वाद्वस्तुप्रतीतिव्यवहारकृतविरोधवत्त्वात्। तत्रयुष्मदस्मत्पदार्थयोरात्मानात्मनोःपराक्प्रत्यक्त्वेनव स्तुतोविरोधः अहंकारादिरनात्माप्रतीतिविषयत्वाद्दृश्यतयाभाति आत्मातुप्रतीतित्वात्स्वप्रकाशतयाभातीतिप्रतीतिकृतोविरोधः।युष्मदर्थो हिकौटस्थ्यादिस्वभावात्मतिरस्कारेणसक्रियत्वादिना अस्मदर्थस्तु ब्रह्मास्मीत्यहंकारविलापनेनपूर्णतयाव्यवह्रियतइतिव्यवहारकृतोविरो धः। त्रिविधोऽयंविरोधोयुष्मदस्मत्प्रत्ययगोचरयोरितिवदताभाष्यकृतैवस्फुटीकृतः। युष्मचास्मच्चयुष्मदस्मदीतेएवप्रत्ययौतावेवगोचरौत

तयोरन्योन्यभावोनोविरुद्धत्वाच्चपूर्ववत् ॥ आत्मनोविषयित्वाच्चविषयत्वादनात्मनः ॥ ११६ ॥
ननुकिंलोकसिद्धौतौक्रियेतेपक्षगोचरौ ॥ प्रभाकरादिसिद्धौवाकिंवावेदांतिसंमतौ ॥ ११७ ॥
सिद्धसाधनताद्यत्वाद्वयोस्तदनुमानयोः ॥ लोकेदेहादिचैतन्यपर्यंतस्यात्मतामता ॥ ११८ ॥
पाषाणादेरनात्मत्वंतयोरैक्यंनसंमतम् ॥ तयोर्नापिविरोधोवानियतश्चानुभूयते ॥११९॥ नद्वि
तीयःप्रमातृत्वकर्तृत्वाद्याश्रयंजडम् ॥ प्राभाकरादयस्त्वाहुरात्मानंतेयतस्तथा ॥ १२० ॥

योस्त्रिविधविरोधभाजोरितितदर्थात्। ऐक्यासंभवेऽपिनीलमुत्पलमित्यादिवत्तादात्म्यंकिंनस्यादित्याशंक्याह। आत्मनइति। आत्मनोवि षयित्वादनात्मनोविषयत्वाच्चतयोश्चिज्जडयोर्दीपघटवत्तादात्म्यमपिनेत्यर्थः। एतदभिप्रेत्योक्तंविषयविषयिणोरिति। उक्ताद्धेतोःसिद्धेऽन्यो ऽन्यभावासंभवेदृष्टांतमाह। पूर्ववदिति। पूर्ववत्तमःप्रकाशवत्। नचतयोर्भावाभावत्वेनतदभावस्तमसोऽपिगुणवत्त्वादिनाभावत्वात्॥११६॥ अध्यासवाद्येकदेशीशंकते। नन्विति। तौआत्मानात्मानौ ॥ ११७ ॥ सिद्धसाधनतांस्पष्टयति। लोकइतिसार्धेन ॥ ११८ ॥ ११९ ॥ द्वितीयंनिराचष्टे। नेति। तत्रहेतुमाह। यतःकर्तृत्वइत्यादि ॥ १२० ॥

तस्यकारणमज्ञानमितिपरेणान्वयः ॥ १२१ ॥ तद्वयंत्वत्रवेदांतिसंमतेमतेअनात्मैव ॥ १२२ ॥ तथाचसिद्धसाधनानैकांतिकत्वरूपोक्त दोषद्वयाद्द्वितीयपक्षोऽयुक्तइत्याशयेनाह। उक्तेति । तृतीयेऽप्याह । नेति ॥१२३॥१२४॥ तथाचसर्वानुभवगोचरःकर्तृत्वादिव्यवहारस्तयो रध्यासंविनानुपपद्यमानस्तदध्यासंकल्पयतीत्याशयेनाह । तयोरिति ॥ १२५ ॥ ननुपरस्परविरुद्धयोरध्यासःक्वदृष्टइतिचेत्तत्राह । इद

देहेंद्रियाद्यनात्मानंप्रपंचंकथयंतिते ॥ कर्तृत्वाद्याश्रयोयोऽस्त्यहंकारस्तस्यकारणम् ॥१२१॥ अज्ञानंतद्वयंत्वत्रमतेवेदांतिसंमते ॥ अनात्मैवतयोरैक्यंनाध्यासोऽस्वीकृतत्वतः ॥ १२२ ॥ उ क्तदोषद्वयंचास्मिन्पक्षेस्यात्पूर्वपक्षवत् ॥ नतृतीयोयतःसर्वदोषशून्यंनिरंजनम् ॥ १२३ ॥ वि ज्ञानघनमात्मानमाहुर्वेदांतिनोजनाः ॥ तद्भिन्नंसर्वमेवाहुरनात्मानमनर्थकम् ॥ १२४ ॥ त योरन्योन्यमध्यासंविनानुभवगोचरः ॥ कर्तृत्वभोक्तृताद्योऽयंव्यवहारःकथंभवेत् ॥ १२५ ॥ इ दंरूप्यमितिभ्रांतौपरस्परविरुद्धयोः ॥ भिन्नसत्ताकयोर्दृष्टोऽस्त्यध्यासोऽज्ञानहेतुकः ॥ १२६ ॥ स्यादेवंयदिदृष्टांतेतादात्म्यंनैवसंभवेत् ॥ रजतेदंतयोर्दृष्टंतत्तुलोकेयथार्थतः ॥ १२७ ॥ द्रष्टुस्तु दृश्यतादात्म्यंनैवसंभवतिक्वचित् ॥ चित्त्वात्स्वाभाविकंतन्नोतदागंतुकतापिन ॥ १२८ ॥

मिति । भ्रांतौभ्रांतिज्ञानेपरस्परविरुद्धयोर्भिन्नसत्ताकयोःशुक्तिरजतयोरध्यासोयथाशुक्त्यज्ञानहेतुकोदृष्टस्तथात्माज्ञानहेतुकोनात्माध्यास इत्यर्थः ॥ १२६ ॥ अध्यासनिराकर्तापरिहरति । स्यादेवमिति । इदंरजतमितिदृष्टांतेअधिष्ठानाध्यस्यमानयोरिदमंशरजतयोः क्वचि दपितादात्म्यंनैवदृष्टंभवेत् । नैतदस्तीत्याह। तदिति । तत्तादात्म्यंतुलोकेयथार्थतोदृष्टमस्ति ॥ १२७ ॥ ततश्चाधिष्ठानसामान्यांशाध्य

स्यमानविशेषांशयोः । क्वचित्सामान्यविशेषभावेनवागुणगुणिभावेनवा तादात्म्यवतोरेवतादात्म्यभ्रमोदृष्टो नतुप्रकृतेऽधिष्ठानात्माध्यस्यमानाऽनात्मनोरध्यासकारणंवास्तवंतत्तादात्म्यंसंभवतीत्याशयेनाह । द्रष्टुरिति । द्रष्टुश्चिदात्मनोदृश्यतादात्म्यंस्वाभाविकमागंतुकंवेतिविकल्प्याद्यंनिराचष्टे । तत्तादात्म्यंस्वाभाविकंनास्ति तत्रहेतुश्चिद्रूपत्वात् । दृश्यस्यजडत्वेनचैतन्यकर्मकारकतयावभासमानस्यैकस्यांक्रियायांतांप्रतिगुणभूतकर्तृविपरीतप्रधानतयाप्राप्तावस्थानस्य चिद्रूपात्मत्वायोगात् । द्वितीयस्यापितत्सनिमित्तंनिर्निमित्तंवेतिविकल्पासहत्वमभिप्रेत्यतन्निराचष्टे । नापितस्यागंतुकता ॥१२८॥ तत्रहेतुमाह । परिणामइति । यतश्चिदात्मनःपरिणामोनास्ति । ननुसच्चत्यच्चाभवदित्यादिश्रुत्या आत्मकृतेःपरिणामादित्यादिसूत्रेणचविरुद्धमात्मनोऽपरिणामित्वमित्याशंक्याह । निरंशस्येति । चिदात्मनोनिरंशस्येति पदाभ्या

परिणामोयतोनास्तिनिरंशस्यचिदात्मनः॥नहिनिष्कलआकाशःस्वतोवाकारणांतरात् ॥१२९॥
परिणामंभजत्येवंदृश्याकारेणनैवचित् ॥ दृश्यस्यद्रष्टृतादात्म्यमन्यतोवास्वभावतः ॥ १३० ॥
अंत्येदृश्यत्वव्याघातःकर्मकर्तृविरोधता ॥ असंभवान्नचाद्योऽपिसर्वथाध्यासतानहि ॥ १३१ ॥

निरवयवस्याविद्यांविनातत्त्वतःपरिणामासंभवादाविद्यकतत्त्वाभिप्रायंश्रुत्यादिकमितिभावः । तथाच । चिदात्मनोनिरंशत्वात्स्वतोवाहेतूपरागाद्वापरिणामरहितत्वेनागंतुकदृश्यतादात्म्यासंभवइत्यर्थः । फलितंसदृष्टांतमाह । नहीति । निष्कलोनिरवयवः॥१२९॥ननुचेतनस्यानात्मतादात्म्याभावेऽप्यनात्मनश्चैतन्यतादात्म्यंभविष्यति अहमुपलभइत्यहंकारस्योपलब्ध्याश्रयत्वदर्शनादित्याशंक्याह। दृश्यस्येति॥१३०॥ द्वितीयमादौनिराचष्टे । अंत्यइति । सदैवद्रष्टृतादात्म्यापत्त्यादृश्यत्वव्याघातः । एकस्यैवद्रष्टृदृश्यभावेनकर्मकर्तृविरोधश्च । आद्यंप्रत्याह । असंभवादिति । असंभवादन्यतोऽपिजडस्यचिदाकारपरिणामेनचित्तादात्म्यासंभवादाद्योऽपिनसंभवति । ननुमुखसन्निधानादादर्शवदात्मसंनिधानादनात्मनोऽपिचिच्छायताभविष्यतीतिचेत्साकिंचिदात्मनापरिणाम उततत्रचैतन्यसंक्रमणं नाद्यः । पूर्वरूपेणैवस्थितेवापर

स्यापरत्वासंभवात्। द्वितीयेऽपितत्किंवास्तवमुतावास्तवं नाद्यः चैतन्यस्यनिष्क्रियत्वात्पूर्णत्वाच्च। नद्वितीयः क्वचिदपिवास्तवस्यतस्याभा
स्यापरत्वासंभवात्। द्वितीयेऽपितत्किंवास्तवमुतावास्तवं नाद्यः चैतन्यस्यनिष्क्रियत्वात्पूर्णत्वाच्च। नद्वितीयः क्वचिदपिवास्तवस्यतस्याभा

वे कल्पनायाएवासंभवात्तस्मात्क्वचिदपितादात्म्यादर्शनात्सर्वथाप्यात्मानात्मनोरन्योऽन्याध्यासतानसंभवतीत्याह। सर्वथेति॥१३१॥नन्वा
त्मानात्मनोरन्योऽन्यभावाभावेऽपि तद्धर्माणांचैतन्यजाड्यादीनामन्योऽन्यस्मिन्भावोभविष्यति पुष्पपुटकादौपुष्पाभावेऽपितद्धर्मगंधानुवृ
त्तिदर्शनात् तथाचान्योऽन्यस्मिन्नन्योऽन्यप्रमित्याततसंस्काराच्चदध्यासःसिद्ध्यतीत्याशंक्याह। धर्माध्यासइति। तयोरात्मानात्मनोर्धर्माणां
चैतन्यजाड्यादीनामन्योऽन्यस्मिन्नाध्यासः एवंयुक्तितः परस्परविरुद्धयोर्धर्मिणोर्धर्माणामन्योऽन्यभावस्यादृष्टत्वात्। धर्माहिधर्मिणौत्यक्त्वा
कदाचिदपिनैवगच्छंति। पुष्पपुटकादौगंधस्यसूक्ष्मेणस्वाश्रयेणसहैवोपलंभादन्यथागुणत्वेव्याघातात्तथाचतद्धर्माणामपिनान्योऽन्यस्मिन्प्र

धर्माध्यासस्तयोरेवंसंभवेन्नैवयुक्तितः॥ धर्माहिधर्मिणौत्यक्त्वानैवगच्छंतिकर्हिचित्॥ १३२॥
जपापुष्पंविनानास्तिलौहित्यंस्फटिकेयतः॥ तस्माद्युक्तिसहोनस्यादध्यासोभवतांमतः॥ १३३॥
अत्राभिधीयतेऽध्यासावस्तुत्वंप्रतिपाद्यते॥ युक्तेर्विरोधतःकिंवाध्यासएवापलप्यते॥ १३४॥

मितिरितिभावः ॥ १३२ ॥ ननुस्फटिकजपाकुसुमयोर्धर्मिणोर्भेदेनगृह्यमाणत्वेऽप्यतिस्वच्छेस्फटिकमणावरुणःस्फटिकइति जपाकुसुमध
र्मारुण्यविभ्रमदर्शनादत्रापितथाधर्माध्यासोभविष्यतीत्याशंक्याह । जपापुष्पमिति । रूपवद्द्रव्यंजपापुष्पंविनास्फटिकेलौहित्यंयतोना
स्त्यतोनैवगच्छंति । तथाच तत्रतत्प्रतिबिंबोनतुधर्मिणमतिक्रम्यतत्रगमनमितिभावः। पूर्वपक्षमुपसंहरति । तस्मादिति। तद्भवतांमतो
ऽतद्रूपेतद्रूपावभासरूपोऽध्यासोयुक्तिसहोनस्यात् अभावएवाध्यासस्ययुक्तइत्यर्थः ॥१३३॥ एवमध्यासाक्षेपपरभाष्यतात्पर्यार्थमभिधायत
थाप्यन्योऽन्यस्मिन्नन्योऽन्यात्मकतामन्योऽन्यधर्मांश्चाध्यस्येतरेतराविवेकेनात्यंतविविक्तयोर्धर्मधर्मिणोर्मिथ्याज्ञाननिमित्तः सत्यानृतेमिथु

नीकृत्याहमिदंममेदमितिनैसर्गिकोऽयंलोकव्यवहारइति तत्समाधानपरभाष्यतात्पर्यार्थंवक्तुमुपक्रमते । अत्राभिधीयतइति । अध्यासा भावात्प्रमातृत्वादिबंधस्यवस्तुत्वेनविषयाद्यभावाच्छास्त्रमिदमनारभ्यमित्यस्मिन्पूर्वपक्षेप्राप्ते सिद्धांतउच्यते त्वयाध्यासस्यावस्तुत्वंयुक्तिवि रोधादापाद्यते किंवाध्यासएवापलप्यते प्रतिषिध्यते अध्यासस्यनास्तित्वमयुक्तत्वादभानाद्वेतिविकल्पार्थः ॥ १३४ ॥ तत्राद्यमंगीकरो ति । आद्यइति । यतआत्मानात्माध्यासोयुक्त्याविरुध्यते । ततस्तस्यानिर्वाच्यत्वस्यसत्त्वासत्त्वाभ्यांवक्तुमशक्यत्वस्यवादिनोममापीष्टमेव स्यात् ॥ १३५ ॥ स्वस्यानिर्वाच्यत्ववादित्वसिद्ध्यर्थंस्वसांप्रदायिकोक्तिमुदाहरति । सेयमिति ॥ १३६ ॥ १३७ ॥ १३८ ॥ सांप्रदा

आद्येत्विष्टंममापिस्यादनिर्वाच्यत्ववादिनः ॥ युक्त्याविरुध्यतेह्यात्मानात्माध्यासोयतस्ततः ॥ १३५ ॥ सेयंभ्रांतिर्निरालंबासर्वन्यायविरोधिनी॥सहतेनविचारंसातमोयद्वद्दिवाकरम्॥१३६॥ यद्विचारासहिष्णुत्वंतस्याःस्यात्तदलंकृतिः॥अविद्याया अविद्यात्वमिदमेवात्रलक्षणम् ॥१३७॥य द्विचारासहिष्णुत्वमन्यथावस्तुसाभवेत् ॥ अहोधार्ष्ट्यमविद्यायानकश्चिदतिवर्तते॥१३८॥प्रमाणं वस्त्वनादृत्यपरमात्मेवतिष्ठति ॥ उक्तमित्थमविद्यायाश्चातुर्यंसांप्रदायिकैः ॥१३९॥ प्रत्यक्चै तन्यसत्तैकानुबंधित्वेनसंमतः ॥ अध्यासोनत्वयाक्षेप्तुंशक्यःसिद्धोऽनुभूतितः ॥ १४० ॥

यिकैःवार्तिककारैःतथाचायुक्तत्वेनतदवस्तुत्वमस्मदिष्टत्वान्नापादनार्हमित्यर्थः ॥ १३९ ॥ द्वितीयंप्रत्याह । प्रत्यगिति । प्रतीचोजडतां व्यावर्तयति । चैतन्येति । तस्यतुच्छतांव्यावर्तयति । सत्तेति । कार्योपहितसत्तानुबंधित्वंव्यावर्तयति । एकेति । तन्मात्रानुबंधित्वेनसाक्षिस्व रूपमनुसृत्यानवच्छिन्नानंदादिस्वस्वरूपंतिरस्कृत्य व्यवस्थितत्वेनानादित्वेनसंमतइतियावत् । तथाचभाष्ये । नैसर्गिकपदेनानादि त्वंविवक्षितं नस्वभावत्वमन्यथाचैतन्यवत्तस्याच्छेद्यत्वप्रसंगात् । एवंभूतःसर्वानुभवसिद्धोऽध्यासस्त्वयाक्षेप्तुंनास्तीतिवक्तुंनशक्यः ॥ १४० ॥

नन्वनादेस्तस्यकार्यत्वंकथंभविष्यतीत्याशंक्य प्रवाहरूपेणानादित्वंनस्वरूपेणेत्यविरोधंदर्शयितुमध्यासस्वरूपमाह । सचेति । सचाध्यासः अध्यस्यतइतिकर्मव्युत्पत्तिरत्रबोध्या ततःकिमित्यपेक्षायामाह । अपेक्ष्येति । भोक्तृत्वाध्यासःकर्तृत्वाध्यासमपेक्षतइत्यर्थः ॥१४१ ॥ हियस्मात्कर्तृत्वंविनाभोगःक्वचिदपिनसंभवति अकर्तुर्भोक्तृत्वाभावात् । कर्तृत्वंचरागद्वेषदोषसंयोगाध्यासमपेक्षते तद्रहितस्यकर्तृत्वाभावादित्याह । रागादीति ॥१४२ ॥ दोषसंयोगश्चभोक्तृत्वमपेक्षते तत्रहेतुमाह । यतइति ॥ १४३ ॥ अनुपभुक्तेरागोनोपपद्यते इतिवदतोपभुक्तविषयेरागइत्युक्तंस्यान्नचतत्संभवति उपभुक्तेरागादर्शनादित्यतआह । नोपभुक्तासजातीयइति । भोक्तृत्वंचकर्तृत्वाध्यासमपेक्षतइत्य

सचकर्तृत्वभोक्तृत्वदोषसंयोगआत्मनि ॥ अपेक्ष्यकर्तृताध्यासंभोक्तृताध्यासआत्मनि ॥१४१॥
कर्तृत्वंहिविनाभोगोनैवसंभवतिक्वचित् ॥ रागादिदोषसंयोगाध्यासंचापेक्ष्यकर्तृता ॥ १४२ ॥
अस्तिरागादिशून्यस्यकर्तृतानैवदृश्यते ॥ भोक्तृत्वंदोषसंयोगोऽपेक्षतेसर्वथायतः ॥ १४३ ॥ नो
पभुक्तासजातीयेरागोनोऽनादितास्त्यतः ॥ कार्येप्रवाहरूपेणबीजांकुरवदेवहि ॥१४४॥ तदाकृत्यु
परक्तानांव्यक्तीनामेकयाविना ॥ अनादिकालावृत्तिर्यासाकार्यानादितामता ॥ १४५ ॥ देहादी
नामवस्तुत्वान्नारोपइतिचेन्नहि ॥ प्रतीतिमात्रादारोपसिद्धौसत्ताऽप्रयोजिका ॥ १४६ ॥

नादित्वंसिद्धमित्याह । अतइति उक्तयुक्तेः कार्येकर्तृत्वादौबीजांकुरवत्प्रवाहरूपेणानादित्वंसिद्धमित्यर्थः॥१४४॥ ननुप्रवाहस्यावस्तुत्वादध्यासव्यक्तीनांसादित्वात्कथंकार्यानादितेत्याशंक्याह । तदिति । तदाकृत्युपरक्तानामध्यासत्वावच्छिन्नानांव्यक्तीनांमध्ये एकयान्यतमयाव्यक्त्याविना यदनादिकालस्यावर्तनमन्यतमव्यक्तियोगनियमःसाकार्यानादितामता संप्रदायिभिःस्वीकृतेत्यर्थः ॥१४५॥ननुवस्तुभूतायांशुक्तौ वस्तुभूतस्यततोविविक्तस्यरजतस्य भेदाग्रहनिबंधनस्तादात्म्यविभ्रमोदृष्टः देहादीनांत्ववस्तुत्वात्कथमात्मन्यारोपइतिशंकते । देहेति।

परिहरति । नेति । तत्रहेतुर्हियस्मादप्रतीतस्यारोपायोगात्प्रतीतिमात्रादारोपसिद्धौ तत्सत्तातत्रप्रयोजिकानभवति नचारोप्यस्यप्रतीतौ सत्यांपूर्वंदृष्टस्यसमारोपस्तस्मिंश्चसतिप्रतीतिरित्यन्योन्याश्रयइतिवाच्यम् । अनादित्वेनपरिहारात् ॥ १४६ ॥ शुक्तिरूप्यादावप्युपयुक्तं पूर्वदर्शनमेवापेक्ष्यते लाघवान्नतुतत्सत्त्वमित्याशयेनाह । इदमिति । सत्यानृतपदार्थयोःशुक्तिरूप्ययोर्यत्तादात्म्यमध्यस्यते तदिदंरज तमितिप्रथमदृष्टमेवाध्यस्यते तथाचोत्तरोत्तरदेहादीनामात्मनितादात्म्याध्यासउपयुक्तंपूर्वपूर्वदेहादिदर्शनमस्त्येवेतिभावः ॥ १४७ ॥

इदंरजतमित्यादौदृष्टंतच्छुक्तिरूप्ययोः ॥ अध्यस्यतेयत्तादात्म्यंसत्यानृतपदार्थयोः ॥१४७ ॥
परस्परस्मिन्नन्योऽन्यमध्यासस्तुतयोःसमः ॥यद्यप्यस्तितथाप्यात्माध्यासोयोऽसावनात्मनि
॥ १४८॥ संसृष्टरूपतोऽयंस्यान्नस्वरूपेणभाष्यकृत् ॥ अतःसत्यत्वमाहास्यप्रत्यक्चैतन्यरूपिणः
॥१४९॥ अध्यासोनात्मनोयोऽसौप्रत्यगात्मनिवस्तुनि ॥ सस्वरूपेणमिथ्यातोयुष्मदर्थोऽभिधी
यते ॥ १५० ॥ ममेदंचेतिविज्ञानाद्देहादौसर्ववस्तुनि ॥ भेदसहिष्णुरेवात्राभेदस्तादात्म्यमिष्यते
॥१५१॥नैवंभेदग्रहेणैवाप्यध्यासोविनिवर्त्यताम्॥यतोभेदग्रहस्तादृग्विनाशास्त्रंनसंभवेत्॥१५२॥

नन्वात्मानात्मनोरन्योऽन्यस्मिन्नन्योऽन्यात्मकताध्यासे द्वयोरप्यनृतत्वप्रसंगात्कथमुक्तंसत्यानृते मिथुनीकृत्येत्याशंक्याह । परस्परस्मि न्निति ॥ १४८ ॥ अनात्मनिआत्मनःसंसर्गमात्राध्यासोनतुस्वरूपस्यातोभाष्यकृदस्यप्रत्यक्चैतन्यरूपस्यात्मनः सत्यत्वंप्राहेत्यर्थः॥ १४९ ॥ योऽसौप्रत्यगात्मनिवस्तुनिअनात्माध्यासः सस्वरूपेणातोयुष्मदर्थोमिथ्याभिधीयते ॥ १५० ॥ सोऽपितादात्म्याध्यासोनत्वभेदाध्यास इत्याह । ममेदमिति । देहादौसर्ववस्तुनिममेदंदेहादीतिभेदानुभवादत्रात्मानात्माध्यासेतादात्म्यमेवेष्यते तत्स्वरूपमाह । भेदसहिष्णुरे वात्राभेदइति ॥ १५१ ॥ ननुभेदग्रहोऽप्यस्तिचेत्तर्ह्यध्यासःकुतोननिवर्ततइत्याशंक्याह । नैवमिति । तादृक्अध्यासनिवर्तकः ॥ १५२ ॥

॥ १५३ ॥ १५४ ॥ अहमस्मीत्यनुभवादभेदः ममदेहोऽस्तीतिभेदानुभवाद्भेदोयतस्तयोर्भेदोऽप्यस्त्यतस्तादात्म्यमेवनचैक्यम् ॥ १५५॥ ननुजीवस्यैवतत्तद्देहाद्यात्मताव्यवहाराद्ब्रह्मणस्तस्यभेदः किंनस्यादित्याशंक्याह । जीवेति ॥ १५६ ॥ देहात्मनोरैक्यमपिवास्तवंनभवतीत्याह । नवेति ॥ १५७ ॥ नन्वेवमपिसादृश्यदर्शनादेरध्यासकारणस्यलोकेऽन्वयव्यतिरेकाभ्यामवगतस्यप्रकृतेऽसंभवात्किमध्यासकारणमित्यपेक्षायामाह। अनिर्वाच्यमिति। तयोरात्मानात्मनोः समग्रस्यधर्मिधर्माध्यासस्याज्ञानंकारणंस्वीकृतंभाष्ये। अज्ञानमित्युक्तेज्ञाना

भेदंव्यवहरंतोऽपिदेहोमेऽस्तीतिलौकिकाः ॥ देहादेर्भिन्नमात्मानंनगृह्णंतिश्रुतिंविना ॥ १५३ ॥
अनुभूतेस्ततस्त्वैक्याध्यासेऽपिव्यवहारतः॥तादात्म्याध्यासइत्येवंव्यपदेष्टुंहिशक्यते ॥१५४॥
अहमस्मीत्यभेदोऽपिममदेहोऽस्त्यतोभिदा॥तादात्म्यमेवनत्वैक्यंतयोर्भेदोयतोऽस्त्यपि १५५
जीवब्रह्मैक्यमेवास्तिवस्तुतस्तुतदात्मता ॥ अविद्याकल्पितंभेदमपेक्ष्यव्यपदिश्यते ॥ १५६ ॥
नवादेहात्मनोरैक्यंवास्तवंभिन्नरूपतः ॥ सत्यानृतकृतोभेदस्तयोरस्तिस्वभावतः ॥१५७॥ अ
निर्वाच्यमविद्याख्यमज्ञानंभावरूपकम् ॥ अध्यासस्यसमग्रस्यकारणंस्वीकृतंतयोः ॥१५८ ॥

भावमात्रमुक्तंस्यान्मिथ्येत्युक्तेभ्रांतिज्ञानमित्युभयव्यावृत्त्यर्थंमिथ्याज्ञानमित्युक्तम् । तत्रमिथ्याचतदज्ञानंचेतिविग्रहः । मिथ्येत्यनिर्वचनीयत्वमुच्यते अज्ञानमिति जडात्मिकाविद्याशक्तिर्ज्ञानपर्युदासेनोच्यतइत्यभिप्रेत्याह । अनिर्वाच्यमित्यादिविशेषणत्रयेणतत्राज्ञानमितिनञाऽभावत्वप्रतीतेःकथमनिर्वाच्यतेत्याशंकायामुक्तं भावरूपकंजडत्वाज्ज्ञानान्यद्भावरूपमित्यर्थः । ज्ञानविरुद्धत्वाद्वाऽज्ञानमित्याशयेनाह अविद्याख्यमिति । सादृश्यदर्शनादिकंनसर्वत्राध्यासनिमित्तंगुणावयवक्रियाणामन्यतमभूयस्त्वलक्षणसादृश्यस्याभावे

ऽप्यहंब्राह्मणइत्यहमवभासेप्रत्यगात्मनिब्राह्मण्यजात्यध्यासस्यास्तिकैरिष्टत्वात्। तथाविषयकरणदोषाभावेऽपिस्वयंप्रकाशोत्पत्तिविनाशरहि तायाःसंविदःपरप्रकाश्यत्वोत्पत्तिविनाशवत्त्वस्यलोकभ्रमस्योपलंभात् । नहिसंवित्संवेद्ययोःप्रकाशजडयोःसादृश्यमस्ति येनभ्रमकारणंत द्रूपोविषयदोषोऽत्रकारणंभवेत् । नापिकरणदोषः । प्रमितेरदुष्टकरणजन्यत्वात्तथाचाज्ञानमेवाव्यभिचार्यध्यासकारणमितिभावः ॥१५८॥ नन्वज्ञानस्याप्यध्यासकारणत्वंनसंभवतिअननुभवात् व्याप्त्यसंप्रतिपत्तेर्वादिनंप्रत्यागमोपन्यासाऽनौचित्यान्मिथ्याज्ञानकारणत्वमंतरेणानु पपन्नस्याभावादज्ञानस्यकारणत्वेप्रत्यक्षादिप्रमाणाभावादित्याशंक्याह । तस्मिन्निति । रज्ज्वज्ञानेसर्पभ्रमोदयोऽन्यथानेत्यन्वयव्यतिरेका भ्यांतस्यसर्पभ्रमोपादानत्वदर्शनात्तद्दृष्टांतेनाहंकाराद्यध्यासस्याप्यज्ञानोपादानत्वमनुमीयते। विमतमज्ञानोपादानत्वं अध्यासत्वात् रज्जूर

तस्मिन्सतियतोऽध्यासोऽसत्यध्यासोनसंभवेत् ॥ इत्यन्वयादितःसिद्धंतद्वद्रज्ज्वादिकारणम् ॥
॥१५९॥अहमज्ञोनजानामिमामन्यंचेतिभानतः॥ आत्माश्रयंयदज्ञानमुपादानंतदेवहि॥१६०॥
सर्ववस्तुषुतद्व्याप्तंसर्वैरेवानुभूयते ॥ अहंसुखीतिवज्ज्ञातिभावरूपंप्रतीतितः ॥१६१॥

गाद्यध्यासवदितिभावः । ननुतत्त्वज्ञानमध्यासप्रतिबंधकंतदभावश्चाज्ञानमित्यन्वयव्यतिरेकौ प्रतिबंधकाभावविषयतयान्यथासिद्धौ ततश्च साध्यविकलोदृष्टांतइतिचेन्न प्रतिबंधकलक्षणविधुराज्ञानस्यतत्त्वासंभवात्।पुष्कलकारणेहिसतिकार्योत्पत्तिविरोधिप्रतिबंधकम्। नचतस्मि न्सतितत्त्वज्ञानंप्रतिबंधकतयाजायते किंत्वसत्येवतस्मिन्नध्यासकारणे तस्मान्नाज्ञानान्वयव्यतिरेकौतत्त्वविषयतयान्यथासिद्धाविति १५९ किंचाहमज्ञोमामन्यंचनजानामीत्यपरोक्षावभासदर्शनादात्माश्रयंप्रत्यक्षसिद्धंयदज्ञानंतदेवाध्यासोपादानमुचितमित्याह । अहमिति । अहमज्ञइत्यज्ञानाश्रयत्वेनमामन्यंचनजानामीत्यात्मानात्मकर्मकाबोधाश्रयत्वेनप्रतीतिदर्शनादित्यर्थः ॥ १६० ॥ ननुप्रत्यक्षस्यतद भावगोचरतयाप्युपपत्तेर्नभावरूपाज्ञानसिद्धिरित्याशंक्याह।सर्वेति । विमतंप्रत्यक्षंनाभावगोचरमपरोक्षत्वादहंसुखीतिप्रत्ययवदित्यनुमान

विरोधान्नाभावगोचरत्वंतस्येतिभावः ॥ १६१ ॥ ननुएतदज्ञानंनैतज्ज्ञानसमकालीनमेतज्ज्ञाननिवर्त्यत्वादेतज्ज्ञानप्रागभाववदितिशंक
ते । नन्विति ॥ १६२ ॥ ज्ञानशब्देनवृत्तिर्विवक्षिताउतसाक्षी । नद्वितीयोहेत्वसिद्धेः । विमतंसाक्षिज्ञानंनाज्ञाननिवर्तकं तत्स्फोरकत्वाद्य
द्यस्यस्फोरकंनतत्तस्यनिवर्तकं यथाघटज्ञानंघटस्य अन्यथाघटज्ञानेनघटस्यापिनिवृत्तिप्रसंगादित्याशयेनाह । शृण्विति । ननुसाक्षिचैतन्यं
किंघटविशेषिताज्ञानंभासयति उतकेवलं नाद्यः । विषयस्यप्रमाणगम्यत्वनियमादन्यथाप्रमाणवैयर्थ्यप्रसंगात् । नद्वितीयः । इदमज्ञान
मित्यप्रतीतेः । केवलस्यसाक्षिवेद्यत्वाभावादितिचेत्तत्राह । त्रीण्येवेति ॥ १६३ ॥ केवलस्यतथात्वाभावेऽपि विशिष्टस्यतथात्वेनहेत्वसि

नन्वज्ञानस्यभवतांज्ञाननाश्यत्वसंमतेः ॥ अहमज्ञइतिज्ञानंप्रत्यक्षंव्याहतंभवेत् ॥ १६२ ॥
विषयाश्रयविज्ञानगर्भितंचेतिचेच्छृणु ॥ साक्षिणैकेनभास्यंतेत्रीण्येवश्रृणुतत्कथम् ॥ १६३ ॥
आश्रयंविषयंसाक्षीसाधयन्नेवचिद्घनः ॥ अज्ञानंसाधयत्येवननिवर्तयतीहतत् ॥ १६४ ॥ तन्नि
वर्तकमस्माकंवृत्तिज्ञानंतुसंमतम् ॥ नास्तीदानींतदेवात्रकथंनोव्याहतिर्भवेत् ॥ १६५ ॥ तथा
चानाद्यनिर्वाच्यंभावरूपंजडात्मकम् ॥ चिदाश्रयंचिद्विषयमज्ञानंनोमतेमतम् ॥ १६६ ॥

द्ध्यभावात् । नापिप्रमाणवैयर्थ्यंतेषांज्ञाततजननार्थत्वात् ॥ १६४ ॥ नाद्यः सिद्धसाधनत्वादित्याह । तदिति ॥ १६५ ॥ एवमुपपत्ति
सहितमज्ञानप्रत्यक्षंभावरूपमेवात्मन्यज्ञानंगमयतीतिसिद्धमित्याह । तथाचेति । प्रत्यक्षप्रदर्शनमनुमानादेरप्युपलक्षणं । तथाहि । विमतंप्रमा
णज्ञानंस्वप्रागभावव्यतिरिक्तस्वविषयावरणस्वनिवर्त्यस्वदेशगतवस्त्वंतरपूर्वकंभवितुमर्हति अप्रकाशितार्थप्रकाशकत्वादंधकारेप्रथमोत्पन्न
प्रभावत् । प्रागभावविषयकृतार्थांतरत्वस्वविषयावरकांधकारविषयगताज्ञाततामिथ्याज्ञानव्यावृत्त्यर्थानि स्वप्रागभावेत्यादिपंचपदानि
आत्मकृतार्थांतरचक्षुराद्यदृष्टाद्युत्तरज्ञाननिवर्त्यपूर्वज्ञानप्रागभावव्यावृत्त्यर्थानि प्रातिलोम्यक्रमेणविशेषणानि विशुद्धब्रह्मात्मनिशुक्तिका

याचाहंकाररजताद्यध्यासोऽर्थज्ञानात्मकोमिथ्याभूतस्तथाभूताज्ञानंविनानुपपद्यमानोमिथ्याभूतभावरूपमनाद्यज्ञानं स्वोपादानंकल्पयती त्यनुमानार्थापत्ती प्रमाणादेस्तथाभूताज्ञानंसिद्ध्यतीतिसंक्षेपः। ज्ञानस्याहंकारादिज्ञानस्यार्थस्याहंकारादेःकारणंनोमतेमतमित्यन्वयः १६६ अहमिदंममेदमित्यध्यासस्वरूपप्रदर्शनपरभाष्येणाहमाध्यासस्यप्राथम्यमपिबोधितमित्याशयेनाह । अहमइति । नन्वनवभासहेत्वज्ञाना ध्यासस्यप्राथम्यादहंकाराध्यासस्यकथंप्रथमतेत्याशंक्याह । अज्ञानकल्पितइति । अज्ञानाध्यासेऽनादिसिद्धेऽपि कार्याध्यासेषुप्रथमइत्यर्थः ॥१६७॥१६८॥ नन्वंतःकरणेंद्रियाणामात्मनःपृथक्तत्त्वानुपलब्धेरध्यस्ततयैवसिद्धे नतस्यप्राणाउत्क्रामंतीत्यादावात्मतत्त्वावबोधेनस्वरूप

ज्ञानस्यार्थस्यचाध्यासेकारणंचितिकल्पितम्॥अहमःप्रथमोऽध्यासःस्वात्मन्यज्ञानकल्पितः ॥१६७॥
ततोदेहेंद्रियादीनामध्यासस्तत्समन्विते॥ ममेदमितिबाह्यानामध्यासोभावरूपिणाम् ॥ १६८॥ क
र्तृत्वादिकसंबद्धोभोक्ताध्यस्तोयदातदा ॥ किंवाच्यंदेहभोग्यादिजातमध्यस्तमित्यहो ॥ १६९॥ स्व
प्नमाहेंद्रजालेचकल्पितस्यन्नृपस्ययत् ॥ राजोपकरणंवस्तुसत्यंतन्नैवसंभवेत् ॥ १७०॥

तोऽपिलयश्रवणाच्च स्वरूपेणसंसृष्टरूपेणचात्मन्यध्यस्तत्वेनसिद्धिरस्तु शरीरंपुनरिंद्रियैरिदंबुद्धिगृहीतत्वेनकेवलसाक्षिवेद्यत्वाभावादुत्क्रांते ऽप्यात्मनिपृथगुपलब्धेःपृथिवींशरीरमित्यत्रान्यत्रलयश्रवणाच्च नाध्यस्ततयासिद्ध्यति तद्व्यतिरिक्तंममबुद्धिगृहीतंतुसुतरामित्याशंक्याह। कर्तृत्वेति। यदाकर्तृत्वप्रमातृत्वसंयुक्तोभोक्ताध्यस्तस्तदादेहभोग्याद्युपकरणजातमध्यस्तमितिकिमुवक्तव्यमित्यर्थः॥१६९॥ नन्वध्यस्तत्वप्र तीत्यभावेऽपिकल्पितोपकरणत्वाच्छरीरादेःकल्पितत्वमयुक्तं कल्पितोपकरणत्वस्यासिद्धेरित्याशंक्यशरीरादिपदार्थस्वरूपस्यमिथ्याकल्पित कर्तृभोक्तृप्रमातृदोषसंयुक्तात्मार्थतयैव कार्यताभोग्यतयाप्रमेयतयाद्वेष्यतयाच तादर्थ्येनैवसृष्टत्वात्स्वप्नदृष्टांतेन स्वरूपेणापिमिथ्यात्वमनु

मातुं शक्यमित्याशयेनाह । स्वप्नइति । विमतंकल्पितंकल्पितोपकरणत्वात्स्वाप्नावाप्तच्छत्रादिवत् । स्वप्नेछत्रादेरेवकल्पितत्वेनोपक्रियमाण स्येति दृष्टांतवैषम्यमाशंक्य दृष्टांतांतरमुक्तम् । ऐंद्रियकत्वादेः स्वप्नवदुपपत्तिः पृथिवीशरीरमित्यत्रशरीरस्यभूतेष्वनात्यंतिकोलयोनिर्दिष्ट स्तथोत्क्रांतावपिशरीरोपलंभोयुक्तश्चिदधिष्ठानस्यतत्रापिसत्त्वादित्यर्थः ॥१७०॥ दार्ष्टांतिकं दर्शयति । तथेति ॥ ७१ ॥ अन्योऽन्यधर्मा श्चेति पृथक्कथनंवधिरोऽहमित्यादौधर्माध्यासस्यप्राधान्यदर्शनादित्याशयेनाह । वधिरइति ॥ ७२ ॥ नन्वर्थाध्यासवज्ज्ञानाध्यासआचा र्यैः कुतोनसाधितइत्याशंक्याह । अर्थेति । उपसंहरति । अनुभवारूढइति ॥ ७३ ॥ ननु ग्रंथकरणादिकार्यारंभेकार्यानुरूपं कृतमंगला

तथैवाहमिदंचेतिममेदमितिचत्रयः ॥ अध्यासाएवसंसिद्धाअज्ञानेनैवकल्पिताः ॥७१॥ बधिरों ऽधोऽस्मिमूकोऽस्मिखंजोऽस्मीत्यादिकोह्ययम् ॥ धर्माध्यासोऽपिदृष्टोऽस्तिकेवलोनिर्विवादकः॥ ॥७२॥ अर्थाध्यासाविनाभूतोज्ञानाध्यासःपृथक्तया ॥ नसाध्योऽनुभावारूढोऽध्यासःक्षेप्तुंनश क्यते ॥७३॥ सर्वंबुद्धौनिधायेदमध्यासंप्रोक्तवान्मुनिः ॥ युष्मदित्यादिसंदर्भैर्गंभीरैर्वस्तुगर्भितैः ॥७४॥ गुरुशिष्यौवादिनौवाशास्त्रेतत्त्वविचारकौ ॥ तत्रशिष्यंप्रतिगुरुःपूर्वमध्यासमुक्तवान् ॥७५॥

नामेवशिष्टानां प्रवृत्तिदर्शनात्कथमुल्लंघ्यशिष्टाचारमकृतमंगलएवप्रवर्तत इत्याशंक्याह । वस्तुगर्भितैरिति । निरस्तसमस्तोपप्लवचैतन्यैक तानात्मवस्तुगर्भितैरित्यर्थः तथाचाक्षेपतत्समाधानपरैर्भाष्यसंदर्भैरध्यस्ताखिलानर्थासंस्पृष्टवस्त्वनुसंधानात्मकमंगलकृद्भाष्यकारः शिष्टाचा रपालनेऽग्रणीरितिभावः॥७४॥शास्त्रेभवतः । नन्वेतावतैवाध्याससिद्ध्याशास्त्रारंभस्यसिद्धत्वात् अथातोब्रह्मजिज्ञासेतिसूत्राक्षरव्याख्यानमे वक्रियताम् । अथशब्दआनंतर्यार्थइत्यादि किं आहकोऽयमित्यादिभाष्येणेतिशंकानिरासार्थमाह। तत्रेति। तत्र तेषुभाष्यसंदर्भेषु तयोर्वादि शिष्ययोर्मध्येवा तत्रेतआरभ्य कथंपुनःप्रत्यगात्मनीत्यतःप्राक्तनभाष्येणलक्षणं तस्मादारभ्य तमेतमित्यतःप्राक्तेनसंभावनां तदरभ्या

सर्वलोकप्रत्यक्षइत्यंतेनप्रमाणमब्रवीदितिविवेकः ॥ ७५ ॥ ७६ ॥ अध्यासवर्णनस्यप्रकृतोपयोगतांदर्शयति । सर्वेति । यतोयुक्तितः सर्वा नर्थकरोऽध्यासोदर्शितः अतोवेदांतवाक्यजन्यात्मज्ञानादध्यासबाधनाद्दुःखाभावपुरःसरं ब्रह्मात्मैकत्वचिदानंदावाप्तिलक्षणमस्यशास्त्रस्य प्रयोजनं सिद्धमितिद्वयोरन्वयः ॥ ७७ ॥ ७८ ॥ ननु संजाततत्त्वज्ञानस्यदेहाद्युपादानाज्ञानबाधनाद्देहादिप्रतीतिर्नस्यादित्याशंक्याह । संजात इति ॥ ७९ ॥ ननु मूलभूताज्ञानंविना कथंप्रारब्धकर्मणोऽपिस्थितिरित्याशंक्याह । अविद्येति । प्रारब्धकर्मसंपादनपटीयानवि

विवदंतेऽत्रयेऽध्यासेतानुद्दिश्याथलक्षणम् ॥ संभावनांप्रमाणंचभाष्यकारोऽब्रवीत्पृथक् ॥७६॥
सर्वानर्थकरोऽध्यासोदर्शितोयुक्तितोयतः ॥ वेदांतवाक्यजन्यात्मज्ञानादध्यासबाधनात् ॥७७॥
ब्रह्मात्मैकत्वविज्ञानादानंदावाप्तिलक्षणम् ॥ प्रयोजनमतःसिद्धंःदुःखाभावपुरःसरम् ॥ ७८ ॥ सं
जातेतत्त्वविज्ञानेप्रारब्धाख्यस्यकर्मणः ॥ विद्यमानतयाभांतिमिथ्यादेहेंद्रियादयः ॥ ७९॥ अ
विद्यालेशमात्रेणस्थितिःप्रारब्धकर्मणः ॥ भोगेनप्रतिबंधस्यक्षयेप्रारब्धकर्मणः ॥ १८० ॥ तत्त्व
ज्ञानादविद्यायालेशोऽपिविनिवर्तते ॥ अतःसमस्तसंसारानर्थस्यविनिवृत्तये ॥ ८१ ॥ ब्रह्मात्मै
कत्वविज्ञानापरोक्षार्थंमहर्षिणा ॥ सर्ववेदांतवाक्यानांमीमांसासूत्रितामुना ॥ ८२ ॥

द्यायाअवस्थाविशेषो लेशशब्दार्थः । नचतत्रप्रमाणाभावः । जीवन्मुक्त्यादिशास्त्रस्यप्रमाणत्वात् । ननु तल्लेशेनपुनः संसृतिरपिकिंनस्या दित्याशंक्याह । भोगेनेति । तस्यतावदेवचिरंयावन्नविमोक्ष्येऽथसंपत्स्यइतिश्रुतेरित्यर्थः ॥ १८० ॥ फलितमाह । अतइति ॥ ८१ ॥ अ मुनावेदव्यासेनमहर्षिणा ॥ ८२ ॥ ॥ ॥ ॥ ॥

नन्वैश्वर्यादिपालकोपासनविधावपिवेदातपदवृंदसंदर्शनात्सर्वेषांवेदातानांकथंब्रह्मात्मैकत्वविज्ञानप्रतिपत्त्यर्थतेत्याशंक्याह । वेदांतेष्वि
ति । यद्यप्यत्रवेदांतेषुसगुणोपासनान्यपिविधीयंते तथापि तेषांगोदोहनादिवत्प्रसंगतोवर्णनमस्तीतिपरेणान्वयः । निर्विशेषपरब्रह्मप्रति
पत्त्यंगसविशेषब्रह्माश्रयणेनोपासनविधानमप्प्रणयनाश्रयणेनगोदोहनादिविधानवदित्यर्थः । तथाच तत्र वेदांतेषुवस्तुतोनिर्विशेषं परब्र
ह्मैवप्रतिपाद्यंमुनेः संमतमिति । फलितमाह । तत्रेति ॥ ८३ ॥ ८४ ॥ ननु निर्विशेषंब्रह्मप्रतिपाद्यंचेत्तर्हिनिर्विशेषसविशेषयोर्विरोधादंगां
गिभावानुपपत्तेः । सगुणोपासनालंबनंसप्रपंचब्रह्मांगभूतमाश्रित्यविधानमनुपपन्नमित्याशंक्याध्यारोपापवादन्यायेनकल्पिताकल्पितरू
पत्वात्तयोरंगांगितायुक्तेत्यभिप्रेत्याह । यइति । सर्वात्मकत्वसर्वज्ञत्वसर्वशक्तित्वादयोगुणाः अपवादस्यारोपापेक्षत्वादारोपितस्यनिर्विशे

वेदांतेषुकचिद्ब्रह्मसगुणोपासनान्यपि ॥ यद्यप्यत्रविधीयंतेतथाप्यस्तिप्रसंगतः ॥ ८३ ॥ तेषागो
दोहनादीववर्णनंतत्रवस्तुतः ॥ निर्विशेषंपरब्रह्मप्रतिपाद्यंमुनेर्मतम् ॥ ८४ ॥ येऽध्यारोपापवा
दाभ्यामुपास्यत्वेनतेगुणाः ॥ निर्विशेषपरब्रह्मप्रतिपत्त्युपयोगिनः ॥ ८५ ॥

षप्रतिपादकत्वंयुज्यते यथायद्रजतमभादित्यत्रारोपितरजतस्यशुक्तिप्रमितिहेतुत्वंतद्वदित्यर्थः । ननु नेतिनेतीत्यादिवाक्येनारोपितस्य
निरस्यमानत्वात्तद्विषयमुपासनंकथंसांप्रतमितिचेन्न तत्त्वज्ञानात्प्रागवस्थायामुपासनाविधानस्ययुक्तत्वात् । नन्वाश्रित्यविधानेनाधिकृ
ताधिकारतयामुमुक्षोरेवोपासनास्वप्यधिकारःस्यात् । यथादर्शपूर्णमासांगत्वेनप्राप्ताप्प्रणयनमाश्रित्य तदधिकारिणएवपशुकामनायांच
मसपरित्यागेनगोदोहनविधानंदृष्टं तद्वत्सचनोपपद्यते तस्यैहिकामुष्मिकभोगेषुनिर्विण्णत्वादितिचेदुच्यते । यत्तद्गोदोहनेनेतिप्राप्ताप्प्रण
यनमुद्दिश्यगोदोहनविधानमन्यथोभयत्रवाक्यतात्पर्यायातेनवाक्यभेदःस्यात्तथाच तस्यदर्शपूर्णमासाधिकारिसंबंधित्वेनप्राप्तत्वात्स्वतं
त्रपशुकामिनोऽप्राप्तत्वात्तस्यैव तत्राधिकारः । सगुणब्रह्मोपासनंतुमुमुक्षोरमुमुक्षोश्चाविशेषेण प्राप्तमिति तत्र द्वयोरप्यधिकारइति ॥ ८५ ॥

तथाच मोक्षानन्यसाधनज्ञानस्यतत्कर्मतयाब्रह्मणोऽप्रधानत्वापत्तिभयाद्विधातुमशक्यस्यसाधनंविचारः श्रोतव्योमंतव्यइत्यादिविधेर्बला दस्मिन्सूत्रेविधीयतइत्याह । नेति ॥ ८६ ॥ विचारस्यसाक्षाद्विषयाणांवेदांतानांवेदार्थमात्रोपाधौप्रवृत्तयांप्राच्यामीमांसयागतार्थत्वान्नै तद्विचारात्मकं शास्त्रमारभ्यमिति पूर्वपक्षे अथातोधर्मजिज्ञासेतिवेदार्थैकदेशधर्मोपाधौविचारकार्यताप्रतिज्ञानाच्चोदनासूत्रेच तस्यैवलक्ष णप्रमाणयोः श्रुत्यर्थाभ्यामुपन्यासाद्युत्तरत्रापितस्यैवविचारित्वाच्चास्यागतार्थत्वेनेदंशास्त्रमारभ्यमिति वेदांतमीमांसाशास्त्रस्यव्याचिख्या सितस्येदमादिमंसूत्रमिति भाष्यस्थव्याचिख्यासितस्येतिपदस्यतात्पर्यमाह । मीमांसयेति । इदं शास्यतेप्रतिपाद्यते तत्त्वंशिष्येभ्यो ऽनेतिसूत्रसंदर्भः शास्त्रम् ॥ ८७ ॥ आर्थिकार्थेनवर्णकद्वयबोधकस्यभाष्यस्यतात्पर्यमुक्त्वा तत्र सूत्रस्यसामर्थ्यं दर्शयितुं प्रतिपदं

नविधातुंक्षमंज्ञानमतस्तस्यात्रसाधनम् ॥ विधीयतेविचारोऽयंश्रोतव्यादिविधेर्बलात् ॥ ८६ ॥<br>
मीमांसयागतार्थत्वंनप्राच्यास्त्यस्यकर्हिचित्॥शास्त्रस्यातःसमारभ्यमिदंब्रह्मपरायणम्॥८७॥<br>
नित्यानित्यविवेकेनवैराग्यंजायतेनृणाम् ॥ शमादयस्ततःस्युःषण्मुमुक्षुत्वंततोभवेत् ॥ ८८ ॥

व्याख्यानपरस्यभाष्यस्यतात्पर्यमाह । नित्येति । हैरण्यगर्भावासिपर्यंतंभोगजातंविनाशिकार्यत्वात्परिच्छिन्नत्वात् घटवद्विनाशित्वाच्चानि त्यं विनश्यदपीदंकूटस्थनित्यवस्तुपर्यंतमेव विनश्यति निरवधिबाधायोगान्निरुपादानस्यपुनरुत्पत्त्यसंभवात् तथाचात्मानित्योऽकृतिकभा वत्वाद्यन्नैवंतन्नैवमित्येवंनित्यानित्यवस्तुविवेकेनसोऽन्वेष्टव्यः । तद्यथेहकर्मचितोलोकःक्षीयतएवमेवामुत्रपुण्यचितोलोकःक्षीयतइत्यादिश्रु त्युक्तेननराणांवैराग्यं स्वशेषभूतैहिकामुष्मिकस्रक्चंदनादिभोगेच्छाविरुद्धांतःकरणवृत्तिरुत्पद्यते ततोवैराग्यात्परीक्ष्यलोकान्कर्मचिता न्ब्राह्मणोनिर्वेदमायादात्मनस्तुकामायसर्वंप्रियंभवतीत्यादिश्रुत्युक्ताच्छांतोदांतस्तितिक्षुः समाहितः श्रद्धान्वितोभूत्वात्मन्येवात्मानंपश्ये दिति श्रुत्युक्ताः शमादयः षडुत्पद्यंते । तत्र ब्रह्मज्ञानोपयोगिव्यापारातिरिक्तचित्तव्यापारमात्रनिरोधःशमः उक्तातिरिक्तबाह्येंद्रियव्या

पारमात्रनिरोधोदमः नित्यानामपिविधिनात्यागउपरतिः ब्रह्मज्ञानाविरोधिशीतोष्णादिद्वंद्वसहिष्णुतातितिक्षा दैशिकाम्नायांतवाक्येष्वेत
देवमेवेतिविश्वासःश्रद्धा ततस्तेभ्यः मुमुक्षुत्वं आत्मनोऽज्ञानतत्कार्यसंबंधोबंधस्तन्निवृत्तिर्मोक्षस्तदिच्छावत्त्वं ब्रह्मवेदब्रह्मैवभवति तरतिशो
कमात्मविदित्यादिश्रुतिभिः मोक्षकामनोत्पादनद्वारेणप्रदर्शितंजायते ॥ ८८ ॥ ततइति । ततोमुमुक्षुत्वाद्ब्रह्मजिज्ञासास्यात् ।
साधनचतुष्टयस्यसाक्षात्परंपरयाच ब्रह्मजिज्ञासाहेतुत्वेऽन्वयव्यतिरेकौदर्शयति । साक्षादिति । साधनचतुष्टयानंतरं क्रियमाणोब्रह्मविचा
रःसाक्षादपरोक्षप्रदः । कुतूहलाद्वा दैवाद्वा बहुश्रुतत्वबुद्ध्यावा प्रवृत्तोऽपियथोक्तसाधनविरहादनंतर्मुखांतःकरणोबहिरेवाभिनिविशमा
नोनफलायनिर्विचिकित्सप्रत्यगभिन्नब्रह्मसाक्षात्कारायावकल्प्यते । अधिकारिणः फलपर्यवसायिप्रमितिजनकोवेदइतिन्यायाच्छूद्रयागा

ततःस्याद्ब्रह्मजिज्ञासासाक्षादवगतिप्रदा ॥ कौतुकादेःप्रवृत्तोऽस्यांनफलायावकल्प्यते॥८९॥ततःसाधन
संपत्त्यानंतर्यार्थोऽथशब्दकः ॥ अतःशब्दोऽत्रहेत्वर्थःप्रोक्तसंपत्तिसाधकः॥१९०॥ अथशब्देनसंपत्तिंप्र
तिज्ञायमुनिस्ततः ॥ तदसंभवशंकायांतन्निराकरणायच ॥ ९१ ॥ ॥ ॥

दिवत्फलपर्यंततानस्यादित्यर्थः ॥ ८९ ॥ फलितमाह । ततइति । ततोऽन्वयव्यतिरेकाभ्यांसाधनचतुष्टयस्यपुष्कलकारणत्वादत्र अ
थातोब्रह्मजिज्ञासेतिसूत्रेऽथशब्दः साधनसंपत्त्यानंतर्यार्थः । अतःशब्दस्तुहेत्वर्थः परिगृह्यतइत्यर्थः । नन्वथशब्दस्यशक्त्यानंतर्यार्थकस्य
साधनचतुष्टयेपुष्कलकारणत्वद्योतकत्वसंभवादतःशब्दःकिमर्थकइत्याशंक्याथशब्देनानंतर्याभिधानमुखेन पुष्कलकारणतयापूर्वनिर्वृत्तसा
धनचतुष्टयेविवक्षितेऽपि तदपवादेशंकितेतन्निरासेनसाधनसंपत्तिसाधकइत्याशयवानाह । प्रोक्तेत्यादिना ॥ १९० ॥ हियस्मान्मुनिः
श्रीवेदव्यासोऽथशब्देनसाधनसंपत्तिंप्रतिज्ञाय तदनंतरं तदसंभवशंकायांप्राप्तायां तन्निरासायातःशब्दं गृह्णातीतियोजना । तदेवनिराक
रणमेवात्रभाष्येप्रदर्श्यते। तत्रेयंशंका। नित्यानित्यवस्तुविवेको न संभवति । कृतकत्वस्यपरमाणुगतपाकजलौहित्यादौ परिच्छिन्नत्वस्यपर

माणुष्वव्यभिचारात् अक्षय्यंहवैचातुर्मास्ययाजिनःसुकृतंभवतीत्यादिश्रुत्योक्तानुमानस्य कालात्ययापदिष्टत्वादकृतकत्वस्यप्रागभावेव्यभि चारिणोनित्यत्वासाधकत्वाद्भावत्वविशेषणेऽपिपरमाण्वादौव्यभिचारेणात्ममात्रनित्यत्वासिद्धेरपरिच्छिन्नत्वस्यापि प्रतिदेहं भिन्नेष्वात्मस्व भावाद्विभुत्वविवक्षायामाकाशादिष्वभावात्।नापिवैराग्यसंभवः नित्यानित्यवस्तुविवेकाभावात् वैराग्याभावादेव न शमादिभावस्तदभावा न्नमुमुक्षुत्वम्। ननु चातुर्मास्यवद्ब्रह्मज्ञानस्यानित्यफलत्वाद्विकल्पेनास्तुतत्साधनेप्रवृत्तिरितिचेन्न तत्फलस्यप्रत्यग्ब्रह्मैक्यस्यासंभावितत्वात्। ननु विरुद्धत्वान्मास्तुतदैक्यफलं तत्संयोगतस्तद्भविष्यतीतिचेन्न तत्रस्रक्चंदनवनितादिसुखोपायाभावात्। वैषयिकसुखाभावेऽपि ब्रह्मानंदो पभोगोभविष्यतीतिचेन्न। स्वाश्रयतयोपलब्धसुखस्यभोगत्वात्प्रत्यग्ब्रह्मणोर्भेदाद्ब्रह्मसुखस्यजीवाश्रयत्वानुपपत्तेः। ननु सुखापरोक्ष्यमात्रमुप भोगोनस्वाश्रयतयातदितिचेत्सत्यं तथापि स्वाभिन्नब्रह्मणः सुखस्यापारोक्ष्यमेवनसंभवति। नन्वात्मासुखरूपः परमप्रेमास्पदत्वाद्व्यतिरेकेदुःः

अतःशब्दंप्रगृण्हातितदेवात्रनिदर्श्यते ॥ स्वर्गादीनामनित्यत्वंकृतकत्वादिहेतुभिः ॥ ९२ ॥

खवदित्याद्यनुमानात्सुखसच्चित्स्वरूपावस्थानंचमोक्षइतिचेन्न योग्यानुपलब्धिविरोधात्। ननुमोक्षेसुखभोगाभावेऽप्यात्यंतिकदुःखोच्छेदस्य संभवात्तदर्थनाभविष्यतीतिचेन्न देवाद्यानंदपरित्यागेननिरानंदस्यतस्याप्रार्थनीयत्वात् तस्मात्साधनचतुष्टयाभावेविशिष्टाधिकारिणोऽभा वाच्छास्त्रानारंभःप्राप्तइति॥९१॥ तन्निराकरणायेत्युक्तंविवृणोति। स्वर्गादीनामिति। कृतकत्वपरिच्छिन्नत्वादिहेतुभिःस्वर्गादीनामनित्यत्व मनुमाय तस्मादनित्यान्नित्यमात्मस्वरूपंविवेचनीयंयावद्विकारंतुविभागइतिन्यायात्कृतकत्वादेर्नपरमाणुगतपाकजलौहित्यादौव्यभिचारः पुण्यस्याक्षयफलश्रुतिस्तु तद्यथेहकर्मचितोलोकः क्षीयतएवमेवामुत्रपुण्यचितोलोकः क्षीयतइत्यादिव्याप्तिबलप्रवृत्तानुमानानुगृहीतश्रुतिवि रोधान्नस्वार्थेमानतामश्नुते तयाचात्मव्यतिरिक्तपुरुषार्थस्यानित्यतया वैराग्यमप्युपपन्नंभवति तत्सिद्धौचशमादयोऽपिसिद्ध्यंत्येवेतिभावः ९२

मुमुक्षुतांसाधयति । नित्यइति । तथाच ब्रह्मविदाप्नोतिपरं ब्रह्मवेदब्रह्मैवभवतीत्यादिश्रुत्या बाधितविषयंविरुद्धपदार्थतादात्म्यानुपपत्त्यनु
माननंप्रमाणं विंबप्रतिविंबयोरिवतादात्म्यसंभवात् । यत्तुमोक्षेसुखानुभवोनास्तीतितत्प्रतिवक्तव्यं ब्रह्मानंदानुभवात्सुखापरोक्ष्यभानस्यच
पुरुषार्थत्वादात्मनःसुखरूपतायाश्चसुखपरामर्शानुपपत्तिगम्यसुषुप्तिकालीनसुखप्रत्यक्षसिद्धत्वादात्मासुखरूपः निरुपाधिप्रेमास्पदत्वाद्व्यतिरे
केदुःखवत्सुखमात्मनोनभिद्यतेतदव्यभिचारित्वाद्यद्यस्मान्नव्यभिचरतितत्ततोनभिद्यतेयथौष्ण्यमग्नावव्यभिचारीत्याद्यनुमानाच्च ॥९३॥९४
उपसंहरति । तस्मादिति । तापत्रयादाध्यात्मिकाधिदैविकाधिभौतिकभेदेनत्रिविधाद्दुःखात् ॥ ९५ ॥ ९६ ॥ अथातःपदभाष्यस्यतात्प

अनुमायविवेक्तव्यंनित्यंतस्मादनित्यतः ॥ नित्येजीवस्वरूपेऽस्मिन्ब्रह्मानंदेविवादता ॥९३॥नयुज्यते
परप्रेमास्पदत्वात्स्वानुभूतितः ॥ सर्वभोग्यसुखेष्वस्तिब्रह्मानंदस्यलेशता ॥९४॥ तस्मान्मुमुक्षवोधीरा
ब्रह्मानंदेपरात्मनि ॥ तापत्रयात्समुद्विग्नाःप्रवर्ततेविपश्चितः ॥ ९५ ॥ अतःसाधनसंपत्तावतःशब्दस्य
हेतुता ॥ अतोब्रह्मात्मजिज्ञासाकर्तव्यासन्मुमुक्षुणा ॥ ९६ ॥ ज्ञेयःषष्ठीसमासोऽत्रजिज्ञासाब्रह्मणस्त्व
ति ॥ नचतुर्थीसमासोऽस्तितादर्थ्यासंभवादिह ॥ ९७॥ तत्रकर्मणिषष्ठीयंनशेषेब्रह्मणोयतः ॥ प्राधान्यं
संमतंतस्मात्सर्वंतेनैवसिद्ध्यति ॥ ९८ ॥ ॥ ॥ ॥

र्यमुक्त्वा तृतीयपदभाष्यस्यतात्पर्यंवक्तुमुपक्रमते । ज्ञेयइति । अत्र ब्रह्मजिज्ञासेतिपदे ब्रह्मणोजिज्ञासेतिषष्ठीसमासोज्ञेयःतुशब्दाद्वृत्तिकारो
क्तचतुर्थीसमासोऽत्रासंगतइतिद्योतयति । द्योतितंस्फुटयति । नेति । ब्रह्मणोजिज्ञासेतिचतुर्थीसमासोनास्ति तत्र हेतुरिहब्रह्मजिज्ञासेतिपदेता
दर्थ्यासंभवात् । चतुर्थीतदर्थार्थबलिहितसुखरक्षितैरितिसूत्रे बलिरक्षितग्रहणाज्ज्ञापकात्प्रकृतिविकृतिभावोयत्रास्तितत्रैवतदर्थेनसमासोयथा
यूपायदारुयूपदारु इहतुप्रकृतिविकृतिभावाभावात्तादर्थ्याभाव इत्यर्थः ॥९७॥ वृत्त्यंतरेशेषेषष्ठ्याव्याख्यातत्वादाह । तत्रेति । तत्रब्रह्मणइत्यत्र

यंषष्ठीकर्मणिनशेषे संबंधसामान्येजिज्ञासापदस्याकारप्रत्ययांतत्वेनकृद्योगात् । कृद्योगात्कर्तरिकर्मणिचषष्ठीस्यादित्यर्थकात्कर्तृक र्मणोःकृतीतिसूत्रात्कर्मण्येषाषष्ठी कृद्योगाचषष्ठीसमस्यतइतिवाच्यमिति समासः । नच कर्मणीतिषष्ठीसमासनिषेधादुक्तसमासासिद्धिः उभयप्राप्तौकर्मणीतिसूत्रेणोभयोःप्राप्तिर्यस्मिन्कृतितत्रकर्मण्येवषष्ठीतिनियमितायाएवतस्याःसमासनिषेधात् उभयप्राप्तौकर्मणीतियाषष्ठी सानसमस्यतइत्युक्तत्वात् अत्रतुनोभयप्राप्तिर्ब्रह्मणःकर्मत्वस्यैवेष्टत्वात् । ननुशेषेषष्ठीपरिग्रहेसामान्येन ब्रह्मसंबंधिप्रमाणनयादियत्किंचिद स्तितत्सर्वंजिज्ञास्यत्वेनाभिहितंभवति वक्तव्यंचैतदन्यथातद्विचार्यत्वायोगात्तस्मात्संबंधमात्रमेवात्रेष्टं विशेषस्यसामान्यांतर्गतत्वादित्या शंक्याह । यतइति । यतःब्रह्मणःप्राधान्यंसंमतंतस्यज्ञानेनाप्तुमिष्टतमत्वात् तस्मात्तेनप्रधानपरिग्रहेणैवसर्वंसिद्ध्यति जिज्ञासाकर्मणिप्रधाने

यथायंभूपतिर्यातिनवातत्रपृथक्तया ॥ परिवारस्यवक्तव्यंगमनंप्रकृतेतथा ॥ १९ ॥ प्रतिज्ञातात्रमुख तःप्रधानस्यविचारणा ॥ ब्रह्मसंबंधिनामर्थाद्भवेज्जिज्ञास्यतानयात् ॥ २०० ॥ तद्ब्रह्मतद्विजिज्ञासस्वे तिवेदेनबोधिता ॥ कर्मताब्रह्मणःस्पष्टमतःसूत्रेऽपिसोचिता ॥ १ ॥ जिज्ञासाज्ञातुमिच्छेतिजिज्ञासाब्र ह्मगोचरा ॥ इष्यमाणतयाज्ञानंसूत्रेऽस्मिन्समुदाहृतम् ॥ २ ॥

परिगृहीतेसतियैर्जिज्ञासितैर्विनातज्जिज्ञासितंनभवति तान्यर्थाक्षिप्तान्येवभवंति नतुपृथक्सूत्रयितव्यानीत्यर्थः ॥९८॥ एतदेवदृष्टांतेनस्फु टयति । यथेतिद्वाभ्याम् ॥९९॥२००॥ किंच यतोवाइमानिभूतानिजायंते येनजातानिजीवंति यत्प्रयंत्यभिसंविशंति तद्विजिज्ञासस्व त द्ब्रह्मेतिवेदेनजिज्ञासाकर्मत्वंब्रह्मणःस्पष्टंबोधितमतःसूत्रेऽपिसाकर्मतोचिता श्रुतिसूत्रयोर्मूलमूलिनोर्विप्रतिपत्तेरयुक्तत्वादितिभावः ॥ १ ॥ ज्ञातुमिच्छाजिज्ञासेत्यादिभाष्यस्यतात्पर्यमाह । जिज्ञासेति । साक्षात्कारपर्यंतंब्रह्मगोचरंज्ञानमिष्यमाणतयासद्वाच्यायाइच्छायाःकर्मत्वेना स्मिन्सूत्रेसमुदाहृतं ब्रह्मावगतेर्निःशेषसंसारबीजाविद्याद्यनर्थनिवर्हणायाःपरमपुरुषार्थत्वात् ॥ २ ॥ ॥ ॥

तत्पुनर्ब्रह्मप्रसिद्धमप्रसिद्धंवास्यादित्यादिचतुर्थवर्णकपरभाष्यस्यतात्पर्यमाह । अनुबंधेति । अनुबंधत्रयस्यापिसूचनायादइदमादिमंसूत्रमुदारधीर्मुनिःश्रीवेदव्यासःप्रारब्धवान् । अयमर्थः । जिज्ञासायाःपूर्वंतद्ब्रह्मकुतश्चित्प्रमाणादधिगतं नवा । आद्येऽनन्यलभ्यत्वाभावाच्छास्त्राप्रतिपाद्यत्वादतएवविषयत्वाभावादतएवतदवगतेःफलत्वाभावात्संबंधविषयप्रयोजनानामनुबंधत्रयाणामसिद्धिः। द्वितीयेऽपि यन्नकदाचिदिपिकेनचिदाकारेणांतःकरणआरोहतितस्याप्रतिपाद्यत्वादिनासंबंधाद्यसिद्धिः तथाचसंबंधाद्यनुबंधत्रयाभावाच्छास्त्रमनारभ्यमितिप्राप्तेऽभिधीयते । नित्यशुद्धबुद्धमुक्तस्वभावस्यसर्वज्ञस्यसर्वशक्तिसमन्वितस्यब्रह्मणःसामान्यतोऽधिगतस्यविचारादृतेविशेषतोऽनधिगमात्प्रमेयत्वंतस्यैवप्रमितस्यप्रयोजनत्वं वेदांतैःशक्यप्रतिपादनयासंबंधश्चेत्यनुबंधत्रयस्यसंभवाद्ब्रह्मविचारःकर्तव्यइत्यर्थकंसूत्रंकृतवानिति।ननुशास्त्रारंभक

अनुबंधत्रयस्यापिविचारायादिमंमुनिः ॥ सूत्रमारब्धवाञ्शास्त्रेऽदोंऽतर्भूतमुदारधीः ॥ ३ ॥
अनंतंब्रह्मचेत्यादौब्रह्मशब्दःश्रुतिव्रजे ॥ श्रुतःसूत्रेप्रयोगाच्चबाधशून्यंचिदद्वयम् ॥ ४ ॥ बृहद्व्यर्थकाद्धातोर्निष्पन्नोब्रह्मशब्दकः ॥ महत्त्वमाहत्त्वापिसिध्यत्यत्रनिरंकुशम् ॥ ५ ॥

र्तव्यतापरमिदंसूत्रं शास्त्राद्बहिर्भूतंभविष्यतीतिचेत्तत्राह । शास्त्रेऽतर्भूतेति । स्वाध्यायोऽध्येतव्यइतिवच्छास्त्रांतर्भूतमेवसत्तदारंभकर्तव्यतापरमितिभावः ॥३॥ ननुसामान्येनापिलोकेनब्रह्मज्ञातमुक्तरूपस्यतस्यत्यक्षाद्यगम्यत्वान्नापिश्रुत्यातद्धीस्तद्गतब्रह्मशब्दस्याज्ञातसंगतिकत्वादित्याशंक्य श्रुतिसूत्रसमन्वयस्यान्यथानुपपन्नस्यश्रुत्याद्यनुगृहीतयावेशिष्टवाक्यार्थत्वेऽपि पदार्थाकांक्षानुगृहीतस्यच नियतपदार्थहेतुत्वेनविशिष्टब्रह्मणोऽपिसंभावनायाहेतुत्वान्नेत्याशयेनाह । अनंतेति ॥४॥बृहतेर्धातोरर्थानुगमादपितत्प्रसिद्धिरित्याह । बृहेति । संकोचकप्रकरणोपपदाभावेवृद्धिकर्मणोबृहतिधातोर्निरंकुशमहत्त्वबोधितादवच्छेदत्रयशून्यत्वसिद्धेर्नित्यपदस्यतत्परत्वात्कार्यगतदोषासंस्पृष्टत्वेन शुद्धत्वादखंडजाड्यविलक्षणत्वेनबुद्धत्वादविद्याद्यपरतंत्रतयामुक्तत्वात्कुतश्चिदप्यव्यावृत्तशक्तितयासर्वज्ञत्वादिसिद्धेर्धात्वर्थानुगमादेव त

त्सिद्धेश्च। किंच सर्वात्मत्वादपिब्रह्मप्रसिद्धिरस्ति सर्वोहिब्रह्माऽस्तित्वेप्रत्येतिननाहमस्मीति अन्यथानाहमस्मीतिलोकःप्रतीयात् आत्माचब्रह्मचैतन्याविशेषादयमात्माब्रह्मेत्यादिश्रुतेश्च। तथाच सान्यतोऽधिगतेऽपि तद्विशेषंप्रतिविप्रतिपत्तेर्जिज्ञास्यत्वोपपत्तिरिति ॥५॥ ॥ ६ ॥ ननुविनाविचारमात्मतथाब्रह्मयदिप्रसिद्धमस्ति तर्हिलोकेनावगतंतदित्यन्यलभ्यत्वेनशास्त्राविषयत्वात्तदवगतेश्चाफलत्वात्पुनरपिप्राप्तमजिज्ञास्यत्वमित्याशंक्याह। विशेषेइति। आत्मनोऽहमितिप्रत्यक्षप्रसिद्धत्वेऽपितस्यविशेषेपरंकेवलंयुक्तिवाक्यतदाभासाश्रयाणांवादिनांविप्रतिपत्तिरस्ति तत्रदेहमात्रंचैतन्यविशिष्टमात्मेतिप्राकृतालोकायतिकाश्चप्रतिपन्नाः इन्द्रियाण्येवचेतनान्यात्मेत्यपरे मनइत्यन्ये

दिक्कालाद्यनवच्छिन्नमबाध्यंब्रह्मवस्तुयत् ॥ ज्ञेयंवेततविज्ञाननिश्चितार्थैर्मुमुक्षुभिः ॥ ६ ॥ विशेषेवादिनामस्तिविवादःपरमात्मनः ॥ युक्तिवाक्यतदाभासाश्रयाणांतुमुमुक्षुभिः ॥ ७ ॥ दृश्यंनास्तिपरेशुद्धेभ्रांत्याकल्पितमात्मनि ॥ तन्मिथ्येतिविनिश्चित्यज्ञेयंब्रह्माद्वयात्मना ॥ ८ ॥ एतद्विचारंसच्छास्त्रमश्रुत्वापंडिताधमाः ॥ देहादीशांतवादेषुभ्रांतामायानियंत्रिताः ॥ ९ ॥

विज्ञानमात्रंक्षणिकमितियोगाचाराः शून्यमितिमाध्यमिकाः अस्तिदेहादिव्यतिरिक्तःसंसारीकर्ताभोक्तेतिगौतमकाणादजैमिनीयाः भोक्तैवकेवलंनकर्तेतिसांख्याः अस्तिदेहादिव्यक्तिरिक्तभोक्तृतिरिक्तईश्वरःसर्वज्ञःसर्वशक्तिरितिपातंजलाः सहीश्वरोभोक्तुःस्वरूपमित्यौपनिषदाः तत्रचरमपक्षवादिनोयुक्तिवाक्याश्रयाइतरेतुतदाभासाश्रयाइतिविवेकः॥७॥ तर्हिकस्यपक्षस्योपादेयतेत्यपेक्षायामाह। दृश्यमिति। देहादिदृश्यंपरेशुद्धेकालत्रयेऽपिनास्ति तर्हिब्रह्माभिन्नेप्रत्यगात्मनिकथंभातीतिचेत्तत्राह। भ्रांत्येति। आत्मनिभ्रांत्याकल्पितंतत्तस्मात्प्रतिपन्नोपाधौ त्रैकालिकात्यंताभावप्रतियोगित्वाद्दृश्यंमिथ्येतिसम्यङ्निश्चित्याद्वैतरूपेणमुमुक्षुभिर्ब्रह्मज्ञेयम् ॥ ८ ॥ ननु यस्ययस्मिन्पक्षेश्रद्धासतमाश्रित्यस्वार्थंसाधयिष्यतिकिंविचारेणेत्याशंक्याह। एतदिति ॥ ९ ॥ ॥ ॥ ॥ ॥

तेष्विति । तेषूदाहृतपक्षेषुमुमुक्षवोऽपिसाधनचतुष्टयसंपन्नाअपियंकंचिदात्मानमाश्रित्यनमोक्षंप्राप्नुयुः किंत्वनर्थपरंपरामवाप्नुयुः ॥ २१० ॥ एतदेवस्पष्टयति । ब्रह्मेति । तेनविपरीतज्ञानेनसंसारःसंप्रदर्शितः । मृत्योःसमृत्युमाप्नोतियइहनानेवपश्यतीत्यादिश्रुतेः॥११॥अन्यथायथार्थ बोधंविना ॥ १२ ॥ अन्यथाप्रतिपत्त्यामहत्पापोत्पत्तौस्मृतिंप्रमाणयति । यइति ॥ १३ ॥ किंच सत्यंज्ञानसुखाद्यात्मकं सत्यंज्ञानमनंतं

तेषुयंकंचिदात्मानमाश्रित्यापिमुमुक्षवः ॥ नमोक्षंप्राप्नुयुर्नैवशांतिंसौख्यलवाश्रयाः ॥ २१० ॥ ब्रह्मात्म ज्ञानलभ्यस्यमोक्षस्यनविपर्ययात् ॥ प्राप्तिःशक्यायतस्तेनसंसारःसंप्रदर्शितः ॥ ११ ॥ विपरीतात्मबो धस्यनिष्कृतिर्नान्यथाभवेत् ॥ अन्यथाप्रतिपत्तिर्हिमहत्पापमुदाहृतम् ॥ १२ ॥ योऽन्यथासंतमात्मा नमन्यथाप्रतिपद्यते ॥ किंतेननकृतंपापंचौरेणात्मापहारिणा ॥ १३ ॥ अतःसत्यंपरंब्रह्मज्ञानानंतसुखा त्मकम् ॥ अन्यथाकल्पयद्भिस्तुकिंकिंदुःखंनसंचितम् ॥ १४ ॥ ब्रह्मात्मघातिनांकष्टलोकप्राप्तिःश्रुतौ श्रुता ॥ असुर्यानामतेलोकाअंधेनतमसावृताः ॥ १५ ॥ तांस्तेप्रेत्याभिगच्छंतियेकेचात्महनोजनाः ॥ अतोऽन्यथात्वमेवादौनिरस्यात्मानमाश्रयेत् ॥ १६ ॥

ब्रह्म विज्ञानमानंदंब्रह्मेत्यादिश्रुतिबोधितंपरंब्रह्मान्यथासत्याज्ञानपरिच्छिन्नासुखत्वात्मकंकल्पयद्भिर्देहात्मवाद्यादिभिः किंकिंदुःखंनसंचित मपितुसर्वमपीत्यर्थः ॥ १४ ॥ किंच विचाराभावेतत्त्वाज्ञानान्नास्तिकत्वे असुर्यानामेतिश्रुतेःश्रुत्यर्थबहिर्मुखानांमहदनर्थप्राप्तिर्भवतीत्याह । ब्रह्मेतिसार्धेन ॥ १५ ॥ यस्मादेवमतोऽन्यथात्वपरित्यागपूर्वकपरमार्थात्माश्रयणंयुक्तमित्याह । अतइति ॥ १६ ॥

तथाचविषयादिसंभवाच्छास्त्रमारंभणीयमितिफलितमाह । एवमित्यादिना । उक्तप्रत्यक्षसंभवात्प्रसिद्धिः ॥ १७ ॥ विशेषतःसच्चिदानंदात्म निर्विशेषाखंडस्वरूपेणवादिविवादात्प्रसिद्ध्यप्रसिद्धिभ्यामेतच्छास्त्रप्रतिपाद्यत्वंसिद्धमित्याह । सिद्धेति ॥१८॥१९॥ तथाच विषयप्रयोजन सत्त्वाच्छास्त्रमारंभणीयमितिसिद्धमित्याह । अतइति ॥२०॥ तत्रास्याधिकरणस्यप्राथम्यान्नाधिकरणसंगतिर्वक्तव्येतिमत्वा श्रुत्यादिसंगती राह । उत्थाप्योत्थापकत्वमिति । विचारविध्यपेक्षितविषयाद्यसमर्पकाम्नायांतैरस्योत्थापनादुत्थाप्योत्थापकत्वंश्रुतिभिरस्यसंगतिःस्यात्तथा

एवंसामान्यरूपेणप्रत्यगात्मप्रसिद्धितः ॥ अहमस्मीतिसर्वत्रसर्वप्रत्यक्षसंभवात् ॥ १७ ॥ विशे
षतोऽप्रसिद्धत्वाद्वादिविप्रतिपत्तितः ॥ सिद्धातस्यात्मनोऽनेनशास्त्रेणप्रतिपाद्यता॥१८॥ प्रतिपाद
कतासिद्धाशास्त्रस्यास्यविशेषतः ॥ प्रयोजनस्यमोक्षस्यप्रोक्तत्वादेवसिद्धिता ॥ १९॥ अतोब्रह्म
विचारोऽयंब्रह्मज्ञानायपंडितैः॥ कर्तव्यइतिसंसिद्धंसूत्रेऽस्मिन्प्रथमेत्विति ॥२०॥ उत्थाप्योत्था
पकत्वंस्यात्संगतिःश्रुतिभिस्तथा ॥ उपोद्घाततयाशास्त्रेणास्यसंगतिरिष्यताम् ॥ २१ ॥ श्रोत
व्यादिविधेरत्रस्वार्थेतात्पर्यनिर्णयात् ॥ विस्पष्टब्रह्मलिंगस्याद्याध्यायादिकसंगतिः ॥ २२ ॥

अथातोधर्मजिज्ञासेतिसूत्रवर्चितांप्रकृतसिद्ध्यर्थांस्तुपोद्घातंप्रचक्षतइत्युक्तोपोद्घातत्वेनचतुर्लक्षणात्मशास्त्रेणास्यसंगतिरिष्यतामित्यर्थः ॥२१॥ श्रोतव्यादिविधेःस्पष्टब्रह्मलिंगस्यस्वार्थेतात्पर्यस्यसमन्वयस्यनिर्णयात्प्रथमाध्यायेऽद्याध्यायादिकसंगतिः । समन्वयाध्यायेप्रथमपादेस्पष्ट ब्रह्मलिंगवाक्यसमन्वयार्थकेसंगतिः ॥२२॥ ॥ ॥ ॥ ॥ ॥ ॥

एवंप्रथमसूत्रभाष्यस्यतात्पर्यमभिधाय द्वितीयसूत्रस्थस्यतस्यतात्पर्यंवक्तुमारभते । आदिसूत्रइत्यादिना ॥ २३ ॥ अपिच । ज्ञानेच्छा लक्षणस्यब्रह्मजिज्ञासापदस्ययःस्वार्थस्तस्यापरित्यागेननिर्णीतविचारस्यलक्ष्यताबोधिता ॥ २४ ॥ ननुब्रह्मणोजिज्ञास्यत्वोक्त्यार्थाल्लक्षण प्रमाणयुक्तिसाधनप्रयोजनविचाराणां प्रतिज्ञातत्वात्साध्यस्यचतदधीनसिद्धित्वादादौतद्विचारःकर्तव्यइतिशंकते । तदिति ॥ २५ ॥ ब्रह्मप्रमाणंब्रह्मयुक्तिरिति विशिष्टविचाराणांविशेषणविचारसापेक्षत्वादादौब्रह्मविचारएवोचितइतिसमाधत्ते । तथापीति ॥ २६ ॥ ब्रह्म

आदिसूत्रेपरब्रह्मज्ञातुकामेनसर्वथा ॥ ज्ञानोपायमिदंशास्त्रंश्रोतव्यमितिबोधितम् ॥ २३ ॥ तज्जि
ज्ञासापदस्यापिज्ञानेच्छालक्षणस्यच ॥ स्वार्थस्यासंपरित्यागाद्विचारस्यैवलक्ष्यता ॥ २४ ॥
तद्विचारेप्रतिज्ञातेतदंगान्यर्थतःस्फुटम् ॥ लक्षणादिफलांतानिप्रतिज्ञातानिचैवहि ॥ २५ ॥
साधनाधीनसिद्धत्वात्साध्यस्यापितदग्रतः ॥ साधनादिविचार्यंस्यात्सूत्रकारस्तथापितत् ॥ २६ ॥
मानादिब्रह्मसापेक्षंशेषत्वाद्ब्रह्मनिर्णये ॥ निरपेक्षंप्रधानंतत्स्वरूपंब्रह्मणस्त्विति ॥ २७ ॥ जन्मा
द्यस्येतिसूत्रेणलक्षयत्येतदादितः ॥ किंतद्ब्रह्मेत्यपेक्षायांजन्माद्यस्येतिसूत्रतः ॥ २८ ॥

निर्णये तन्मानादिकंशेषत्वाद्ब्रह्मसापेक्षंब्रह्मणस्तत्स्वरूपंप्रधानंनिरपेक्षमितिहेतोर्जन्माद्यस्ययतइतिसूत्रेणप्रथममेतत्स्वरूपंलक्षयतीतिपरेणा न्वयः ॥ २७ ॥ पूर्वसूत्रेणास्योत्थाप्योत्थापकत्वलक्षणः संबंधइत्याशयेनाह । किंतदिति । अधीतिविध्युपपादितोपनिषद्वाक्यस्थस्य स्पष्टब्रह्मलिंगस्य ब्रह्मणिसमन्वयाभिधायकस्य श्रुतिशास्त्राध्यायपादैःसंबंधः । पूर्वाधिकरणस्यब्रह्मणोलक्षणप्रतिपादनात्तत्फलमेवात्रपूर्वो त्तरपक्षयोःफलमित्यपिद्रष्टव्यम् ॥ २८ ॥

नन्वेतत्सूत्रंकिंस्वरूपलक्षणस्यप्रतिपादकमुततटस्थलक्षणस्य । नाद्यः । कारणत्वस्यस्वरूपानुपपत्तेः द्वितीयेऽपितस्यस्वरूपाद्बहिर्भूततया पृथक्त्वेनस्वरूपलक्षणंवाच्यम् । नच तत्प्रतिपाद्यतइत्यसामंजस्यमाशंक्यानंदात्मकस्यमायाविनोब्रह्मणःकारणत्वप्रतिपादकत्वादुभयपर त्वमस्येत्याशयेनाह । जगदिति ॥ २९ ॥ कस्याधिकारिणोबोधार्थंलक्षणमभिधीयतइत्यपेक्षायामाह । अधीतेति । तत्रलक्षणद्वयेजगज्जन्मा दिहेतुत्वंमायाविब्रह्मणःस्वरूपलक्षणं निर्गुणस्यतस्यब्रह्मणस्तुतटस्थंलक्षणंभवेत् ॥ ३० ॥ ३१ ॥ नन्वस्यनिर्गुणस्यब्रह्मणःस्वरूपलक्षणंकि

जगज्जन्मस्थितिध्वंसायतःसिद्ध्यंतिकारणात् ॥ तत्स्वरूपतटस्थाभ्यांलक्षणाभ्यांप्रदर्श्यते॥२९॥ अधीतसांगवेदस्यपदवाक्यार्थवेदिनः ॥ आपाततःपरंब्रह्मज्ञात्वातच्चविशेषतः ॥ ३० ॥ ज्ञातु कामस्यबोधार्थंलक्षणंत्वभिधीयते ॥ तत्रजन्मादिहेतुत्वंमायाविब्रह्मणोभवेत् ॥ ३१ ॥ स्वरूप लक्षणंतस्यतटस्थंनिर्गुणस्यच ॥ स्वरूपंलक्षणंत्वस्यसत्यंज्ञानमितिश्रुतिः ॥ ३२ ॥ यतोवेतिश्रु तौजन्मनिर्दिष्टंवस्तुनोऽग्रतः ॥ तद्वृत्तंचतथादृष्टंतेनादित्वंजनेःस्मृतम् ॥ ३३ ॥ प्रत्यक्षादिप्रतीत स्यसर्वस्यजगतोयतः ॥ जन्मस्थितिलयाःसंतिजिज्ञास्यंब्रह्मतद्भवेत् ॥ ३४ ॥

मित्यपेक्षायामाह । स्वरूपमिति ॥ ३२ ॥ ननुसंसारस्यानादित्वेनकथंजन्मनआदित्वमित्याशंक्याह । यतइति । यतोवाइमानिभूतानिजा यंते येनजातानिजीवंति यत्प्रयंत्यभिसंविशंतीत्येतत्सूत्रलक्षितश्रुतौ वस्तुनोजन्मप्रथमतोनिर्दिष्टं श्रुत्यापिकथमयुक्तमुक्तमित्याशंक्याह । तद्वृत्तंवस्तुस्वभावःजन्मनालब्धात्मकस्यस्थितिलयसंभवात् तेनश्रुतिनिर्देशापेक्षत्वेनवस्तुवृत्तापेक्षत्वेनचजन्मनआदित्वंसूत्रकारेणस्मृतम् ॥ ३३ ॥ अस्येतिप्रत्यक्षादिसंनिधापितस्यधर्मिणःप्रातिपदिकेननिर्देशः विभक्तिर्जन्मादिधर्मसंबंधार्थेत्याशयेनाह । प्रत्यक्षादीति ।

जन्मादीतितद्गुणसंविज्ञानोबहुव्रीहिरित्याशयवानाह । जन्मेति । पूर्वसूत्राद्ब्रह्मशब्दानुवृत्त्या तच्छब्दाध्याहारेणच सूत्रवाक्यंपूरयति । जिज्ञास्यमिति । वियदधिकरणन्यायंमनसिनिधायसर्वस्येत्युक्तं जन्मोत्पत्तिरादिरस्येतितद्गुणसंविज्ञानोबहुव्रीहिस्तस्यबहुव्रीह्यर्थान्यपदार्थाप्रगुणत्वेनविशेषणत्वेनसंविज्ञानंयत्रसमासेसर्वस्यतत्त्वेसमासायोगाद्विशेष्यैकदेशंविशेषणंकृत्वासमासोजन्मस्थितिभंगंसमासार्थः । जन्मादिरस्यस्थित्यादेरित्यतद्गुणसंविज्ञानेतुस्थितिभंगमात्रस्यसमासार्थत्वेनोभयकारणत्वालाभान्नोपलक्षणत्वंसिद्ध्यतीत्यतो जन्मनोऽपिविशेष्यांतर्भावाद्धर्मजातस्यसंहतिप्रधानस्थहेतुर्ब्रह्मेत्युपलक्षणसिद्धिरित्यर्थः । तादृग्धर्मजातंगृहीत्वाजन्मस्थितिभंगमितिसामान्येनपुंसकप्रयोगः ॥ ३४ ॥ इदमःसन्निहितवाचित्वेनप्रत्यक्षमात्रपरामर्शित्वमाशंक्य प्रतीतिमात्रंसन्निधिरित्यभिप्रेत्यप्रातिपदिकार्थमाह । इदमेति । आकाशादेरनादित्वेनकथंसर्वजगतोजन्मादीत्याशंक्य वियदधिकरणमभिप्रेत्यविभक्त्यर्थमाह । षष्ठीति ।

इदमाधर्मिनिर्देशःषष्ठीसंबंधबोधिका ॥ जन्मप्रमुखधर्माणाकारणस्ययतस्त्विति ॥ ३५ ॥
उपादानंनिमित्तंचब्रह्मवस्त्वत्रसंमितम् ॥ सृष्टिवाक्यप्रसिद्धंचह्यैक्षतेतिनिमित्तता ॥ ३६ ॥

जगतोजन्मादेर्वाब्रह्मासंबंधान्नतल्लक्षणतेत्याशंक्याह । कारणस्येति । तथाचजगज्जन्मादिकारणत्वंब्रह्मलक्षणं तच्चाज्ञातेतस्मिन्संभवतीत्यर्थः ॥ ३५ ॥ नन्विदंकारणत्वात्मकमुपलक्षणंकिंनिमित्तकारणत्वमुतोपादानकारणत्वमाहोस्विदुभयकारणत्वम् । नाद्यः । जगदभिन्नस्योपादानस्यनिमित्ताद्भेदेनावस्थानाद्ब्रह्मशब्दस्यस्वार्थान्वयाभावप्रसंगात् । नद्वितीयः । निमित्तकारणस्यसर्वज्ञस्योपादानाद्भेदेनावस्थानाद्यतःसर्वज्ञात्सर्वशक्तेरितिव्यपदेशासत्त्वप्रसंगादुपादानकारणस्य लोकेचेतनत्वात्सत्यंज्ञानमनंतमितिस्वरूपलक्षणोक्तज्ञानपदानुपपत्तिप्रसंगाच्च । किंच । निमित्तकारणस्योपादानकारणस्यवापृथक्सत्वेऽनंतपदानुपपत्तिः । नापितृतीयः । उभयकारणत्वस्याप्रसिद्धेः । प्रमाणांतराधिगतस्यगंधवत्त्वादेःपृथिव्यादिलक्षकत्वदर्शनादन्यथाश्रयासिद्धेः नचास्यप्रमाणांतरेणास्तिप्रसिद्धिः । साकिमनुमानादुता

गमात् । नाद्यः । घटादौदृष्टांतेद्वयोर्भेदोपलंभेनतस्यसपक्षत्वासिद्धेः । किंच भूतभौतिकपक्षीकारेणोभयकारणत्वंसाध्यतेकिंवाभूतमात्र पक्षीकारेण । नाद्यः । भौतिकेषुनानाविधनिमित्तोपादानोपलंभात्तद्ग्राहिप्रत्यक्षादिविरोधादित्यनुमानानुदयात् । नद्वितीयः । अभिन्न निमित्तोपादानकत्वस्यकार्येषुभौतिकेषुव्यभिचारात् । नाप्यागमात्तत्सिद्धिःतथाविधागमानुपलब्धेरित्याशंक्य जनिकर्तुःप्रकृतिरित्युभ यत्रपंचमीविधानादत्रप्रकृतित्वनिमित्तत्वोभयनिबंधनापंचमीत्याशयेनतृतीयंकल्पमवलंबते उपादानंनिमित्तंचेति । महाभूतानिस्वा नुगतोपादानानिभावत्वेसतिविकारत्वात् घटादिवदित्यनुमानेन सर्वकार्योपादानमेवेतिन्यायानुगृहीतेन सिद्धस्योपादानस्यनिमित्त कारणत्वमप्यनुमानेनकल्प्यते । विमतमभिन्ननिमित्तोपादानंभवितुमर्हति प्रेक्षापूर्वजनितकार्यत्वादात्मगतसुखदुःखरागद्वेषादिवत् । नचघ टादौव्यभिचारःमृदाद्यवस्थचैतन्यस्योपादानत्वात्कुलालाद्यवस्थचैतन्यस्यनिमित्तत्वात्तयोश्चैक्यतयातत्राप्यभिन्ननिमित्तोपादानकल्पना

बहुस्यामित्युपादानतातस्तूभयमास्तितत् ॥ परिणामोनचास्त्यत्रवेदबाह्योयतोहिसः ॥ ३७ ॥

त् । अदृष्टादिलक्षणनिमित्तस्यात्मलक्षणोपादानाद्भेदेऽपि नदृष्टांतेसाध्यवैकल्यमभिन्नोपादानाधिष्ठातृकत्वस्यसाध्यत्वादित्येतदभिप्रेत्याह संमितमिति । सम्यग्मितमनुमितमित्यर्थः । नकेवलमनुमानादुभयकारणत्वमनुमितं किंतु श्रुतितोऽपिसिद्धमित्याह । सृष्टीति । तदैक्षत बहुस्यामिति सृष्टिविवेचनंप्रसिद्धंच हियस्मादैक्षतेतीक्षणपूर्वकस्रष्टृत्वश्रवणादधिष्ठातृत्वं बहुस्यामितितस्यैवप्रजारूपेणबहुभवनश्रव णादुपादानत्वमेकस्यैवलक्ष्यते अतस्तुतद्ब्रह्मोभयमुपादानंनिमित्तंचास्ति परिणाम्युपादानस्यक्षीरादेरचेतनत्वदर्शनादुपादानस्याधिष्ठा तृत्वंविरुद्धमित्येकदेशिमतमाशंक्याह । परिणामइति । तदात्मानंस्वयमकुरुत । सचत्यच्चाभवदित्याद्याःश्रुतयोवस्तुतोऽन्यथाभावंविव र्तंकथयंतीत्यतोवेदबाह्योऽयंपरिणामवादइत्याशयेनाह वेदबाह्यइति ॥ ३६ ॥ ३७ ॥

तथाचाध्यारोपापवादन्यायेन प्रत्यक्षादिसिद्धप्रपंचस्य ब्रह्मण्येवोत्पत्तिविनाशप्रतिपादनेन कार्यादन्यत्रकार्याभावसिद्ध्या तत्रापितत्प्रति षेधेनतन्मिथ्यात्वापादनेनप्रमाणांतराविरुद्धतयाद्वितीयब्रह्मस्वरूपवस्त्वैक्यबोधनायश्रुतेर्वचनमित्याह । अध्यारोपेति ॥ ३८ ॥ तन्वेवंसृ ष्टेराभासत्वे रजताभासवत्तद्विषयश्रुत्युत्थज्ञानस्याप्रामाण्यापत्तिमाशंक्य सत्यरजतवन्मुख्यसृष्ट्यन्तराभावात्तस्याएवमुख्यसृष्टित्वात्तज्ज्ञा नस्यमुख्यरजतज्ञानवत्प्रामाण्यमित्याशयेनाह । रूप्येति ॥ ३९ ॥ ननुप्रपंचसत्यत्वे सचत्यच्चाभवदितितद्भाववचनं इदंसर्वमसृजते तिसृष्टिवचनंचानुपपन्नंस्यादित्याशंक्य देवदत्तोव्याघ्रोऽभवन्मायाह्येषामयासृष्टेत्यादावसत्यकार्येऽपि तद्भावसृष्टिशब्दयोःश्रवणान्नैव

अध्यारोपापवादाभ्यांनिष्प्रपंचंप्रपंच्यते ॥ नान्यत्रकारणात्कार्यंनचेत्तत्रक्वतद्भवेत् ॥ ३८ ॥
इतिन्यायेनवस्त्वैक्यबोधनायश्रुतेर्वचः ॥ रूप्याभासाद्यथान्यत्रमुख्यंलोकेऽस्तिरूपकम् ॥ ३९ ॥
नतथाब्रह्मणोऽन्यत्रजगत्सत्यत्वसंभवः ॥ माययाविश्वभावत्वंनविरुद्धंपरात्मनः ॥ ४० ॥
देवदत्तोऽभवद्व्याघ्रोमायासृष्टामयेतिवत् ॥ सृष्टिर्मायामयीत्यत्रप्रमाणंतुश्रुतिस्मृती ॥ ४१ ॥
मायांतुप्रकृतिंविद्यान्ममममायादुरत्यया ॥ मिथ्यात्वंदृश्यमात्रस्यमायाकार्यत्वहेतुना ॥ ४२ ॥
यथेदंरूप्यमित्यत्रेदंतोपाधौहिसत्यपि ॥ नेदंरूप्यंचबाधोऽस्तिघटोऽस्त्यत्रतथैवहि ॥ ४३ ॥

मित्याशयेनाह । माययेति ॥ ४० ॥ ननुसृष्टिश्रुतौसत्यशब्दाश्रवणवन्मिथ्याशब्दस्याप्यश्रवणात्सृष्टिमिथ्यात्वेकुतःपक्षपातइत्याशंक्याह । सृष्टिरिति ॥ ४१ ॥ कारणस्यमिथ्यात्वेऽपिजगतिकिमायातमितिचेत्तत्राह । मिथ्यात्वमिति ॥ ४२ ॥ किंच नकेवलंमिथ्यात्वेश्रुतिरेवप्र माणमपितुप्रत्यक्षमपीत्याह । यथेति । प्रतिपन्नोपाधौनिषेध्यत्वंमिथ्यात्वं तच्च शुक्तिरूप्यवद्घटेऽप्यस्तीत्याह । घटइति । अस्तिघटइत्यस्त्यर्थो पाधौ ब्रह्मणिप्रतिपन्नस्यघटस्यसतिब्रह्मण्येव नास्तीतिघटाभावबोधनात्तस्यप्रपंचस्यमिथ्यात्वेप्रत्यक्षमपिप्रमाणमस्ति ॥ ४३ ॥

नन्वेकदेशकालसंसर्गितयाप्रतिपन्नस्यघटस्यदेशकालांतरसंसर्गोनिषिध्यते नस्वरूपमितिचेद्देशोनास्ति कालोनास्तीत्ययंनिषेधःकिंदेश कालोपाधावुतास्त्यर्थोपाधौ । नाद्यः । देशाद्यंतराभावात् द्वितीयेदेशादेर्मिथ्यात्वसिद्धिः ननुरजतनिषेधोत्तरकालमियंशुक्तिरितीदमःप्रति पत्तेर्नेदंरजतमितिनिषेधोयुक्तः । नचतथाघटनिषेधोत्तरमस्त्यर्थोपाधिरितिसोऽपिनिषेध्यइतिचेन्न । तस्यनिरुपाधित्वादप्रतीतेर्व्यक्त्यभावे जातेरिवस्तुवचत्वात्तस्माद्देशकालतदुपाधिघटादीनामस्त्यर्थे ब्रह्मस्वरूपेप्रतिपन्नोपाधौ प्रत्यक्षेणैवबाधान्मिथ्यात्वसिद्धिरितिभावः ॥ ४४ ॥ विमताविकाराःस्वानुस्यूतैकस्मिन्वस्तुनिपरिकल्पिताः प्रत्येकमेकस्वभावानुविद्धत्वाद्विभक्तत्वाच्चचंद्रभेदवदित्याद्यनुमानमपिमिथ्यात्वेप्र

अस्त्यर्थेब्रह्मणीत्येवंघटभावस्यबोधनात्॥सतिब्रह्मणिमानंतन्मिथ्यात्वेऽध्यक्षमस्त्यपि॥४४॥
विकाराःकल्पिताःसंतिस्वानुस्यूतैकवस्तुनि ॥ प्रत्येकमनुविद्धत्वात्स्वभावेनैकरूपिणा ॥ ४५ ॥
विभक्तत्वाद्यथाचंद्रविशेषोऽस्तिजडत्वतः ॥ कार्यत्वाद्भेदभावाच्चरूप्यवच्चंद्रभेदवत् ॥ ४६ ॥
देहात्मभाववद्ब्रह्मण्यस्थूलादिवचोव्रजैः॥ मिथ्यानिषिध्यमानत्वादित्येवंयुक्तितोऽपितत् ॥४७॥

माणमित्याह । विकाराइति । कल्पिताइत्युक्तेशून्यवादिनःसिद्धसाधनतातदर्थंवस्तुनीत्युक्तंव्यावृत्तज्ञानेष्वविषयस्यकल्पितत्वांगीकाराद्बौ द्धंप्रत्यर्थांतरतातदर्थमाह । एकेति । एतावत्युक्तेयस्मिन्कस्मिंश्चित्परिकल्पितत्वेनसतितत्वासिद्धिस्तदर्थमाह । स्वानुस्यूतेति । वनस्वभावानु विद्धतरुव्यावृत्त्यर्थंप्रत्येकमित्युक्तं नहिवृक्षेषुप्रत्येकंवनमितिमतिःकिंतुमिलितेष्वेवविभक्तत्वंचधर्मिसमानसत्ताकभेदवत्त्वंतत्रैवहेत्वंतरमाह । जडत्वतइति । भेदिमिथ्यात्वेहेतूनभिधायभेदमिथ्यात्वेहेतुमाह । भेदभावाच्चेति ॥ ४५ ॥ ४६ ॥ विमतंमिथ्याप्रतिपन्नोपाधेर्निषिध्यमान त्वाद्देहात्मभाववदितिहेत्वंतरविवक्षयाह । देहात्मभाववदिति । असिद्धिनिरासार्थमाह । अस्थूलादिवचोव्रजैरिति । अहंमनुष्यइति

अहंप्रत्ययालंबनेप्रतिपन्नस्यदेहात्मभावस्य तत्रनाहंमनुष्यइति निषेधान्नसाध्यविकलोदृष्टांतः । इत्येवंयुक्तितोऽनुमानादपितत्प्रपंचमिथ्यात्वंसिद्ध्यति । एवंपदेनविमतंसदसद्विलक्षणंविवर्तत्वान्मायाव्याघ्रादिवदित्याद्यनुमानसंग्रहः ॥ ४७ ॥ अर्थापत्तिरप्यस्मिन्नर्थेप्रमाणमित्याह । जन्मनाशाविति । मिथ्यात्वंविनानुपपन्नौजन्मविनाशौमिथ्यात्वंगमयतइत्यर्थः । अन्यथोपपत्तिंनिराचष्टे । अमिथ्येति ॥ ४८ ॥ एवंप्रत्यक्षानुमानार्थापत्तिभिःप्रपंचस्यमिथ्यात्वमुक्तं तत्रब्रह्मज्ञानमपिमिथ्याज्ञानत्वाविशेषात्प्रपंचज्ञानवदित्याशंकते । नन्विति । किंतत्स्वस्वरूपमिथ्यात्वंसाध्यते किंवाविषयमिथ्यात्वं आद्येऽप्यागंतुकंज्ञानंधर्मिकिंवानागंतुकमितिविकल्प्याद्यमंगीकरोति । सत्यमागंतुकप्रपंचरूपेणज्ञानस्यमिथ्यात्वाभ्युपगमात् ॥ ४९ ॥ अनागंतुकज्ञानस्यब्रह्मस्वरूपत्वाद्विषयमिथ्यात्वस्यश्रुतिबाधितत्वादवशिष्टंप

जन्मनाशौप्रपंचस्यनस्तांमिथ्यात्वमंतरा ॥ अमिथ्याभूतयोर्ब्रह्मशून्ययोस्तददर्शनात् ॥४८॥
ननुप्रपंचमिथ्यात्वेब्रह्मज्ञानंमृषाभवेत् ॥ प्रपंचज्ञानवच्चेत्तुसत्यंतद्रूपतोमृषा ॥ ४९ ॥ तत्सत्यंच
सआत्मेतिविषयत्वेननोमृषा ॥ निषिध्यातोजगत्सर्वंब्रह्मरूपंनिरूप्यते ॥ ५० ॥ ननुतर्काप्र
तिष्ठानान्नमिथ्यात्वानुमाभवेत् ॥ मैवंविचारशास्त्रस्याप्यनारंभप्रसंगतः ॥ ५१ ॥

क्षद्वयंनसांप्रतमित्याशयेनाह । तत्सत्यमिति । तद्ब्रह्मसत्यमवितथस्वरूपं । ननुतद्वितथमात्मान्यत्वाद्घटवदित्याशंक्याह । सआत्मेति । विषयत्वेनरूपेणमृषानभवति विषयस्यप्रत्यगभिन्नस्यब्रह्मणःसत्यत्वेनश्रुतत्वादित्यर्थः । नन्वस्थूलादिवाक्येनप्रपंचस्यनिषेध्यत्वमुक्तंनयुक्तं तस्यस्थूलादिव्यतिरेकप्रतिपादनपरत्वादित्याशंक्याह । निषिध्येति । नहितद्वाक्येनस्थूलादिभ्योऽन्यत्वमात्रंप्रतिपाद्यते किंतुस्थूलादिरूपंनिखिलंप्रपंचंनिषिध्य तदन्यद्ब्रह्मस्वरूपंनिरूप्यतइत्यर्थः ॥ ५० ॥ ननु तर्ककुशलेनैकेनोत्प्रेक्षितमप्यपरेणाभासीक्रियते ततश्च मिथ्यात्वानुमानंकथंप्रमाणमितिशंकते । नन्विति । किंतर्कमात्रस्याप्रतिष्ठानत्वमुततद्विशेषस्येतिविकल्प्याद्यमंगीकृत्य द्वितीयंप्रत्याह ।

मैवमिति ॥ ५१ ॥ ननु तर्कप्रदर्शनार्थंनविचारशास्त्रंप्रवृत्तं किंतु परोत्प्रेक्षिततर्काणामद्वैतश्रुतिविरोधप्रदर्शनेनाभासत्वप्रदर्शनार्थमित्याशंक्य तर्कंविनाश्रुत्यर्थव्यवस्थासंभवात्तर्कोऽपिवक्तव्यइत्याह । श्रुतीति ॥ ५२ ॥ ननु सन्घटइतिप्रत्यक्षेणघटादेःसत्त्वप्रतीतेःकथंमिथ्यात्वमित्याशंक्यापुरोवर्तिनोऽप्युरगस्यपुरोवर्तितयाभानवदसत्यस्यापिघटादेःसतिसमारोपितत्वेनसदात्मनाप्रतिभानस्याविरुद्धत्वान्मैवमित्याह । घटइति ॥ ५३ ॥ ननु विशेषमिथ्यात्वेसदपिमिथ्यास्यान्निर्विशेषंनसामान्यमितिन्यायादित्याशंक्य सत्तायानिःसामान्यविशेषरूपत्वाभ्युपगमान्मैवमित्याशयेनाह । मिथ्यात्वमिति ॥ ५४ ॥ किमेतत्स्वरूपलक्षणमुतोपलक्षणमित्यपेक्षायामाह । तटस्थमिति ।

श्रुतिसिद्धमपिब्रह्मवेदसंमततर्कतः ॥ निश्चेतव्यमतस्तत्रानुमानंश्रुतिसंमतम् ॥ ५२ ॥ समस्त
स्यप्रपंचस्यमिथ्यात्वंसाधयिष्यति ॥ घटःसन्नितिसद्बुध्याधिष्ठानस्यैवसत्यता ॥ ५३ ॥ मि
थ्यात्वंव्यभिचारित्वाद्घटादौस्याद्विशेषके ॥ विवर्तवादमाश्रित्यहेतुत्वंब्रह्मणःश्रुतौ ॥ ५४ ॥
तटस्थंलक्षणंप्रोक्तंपृथक्तद्बोधकंयतः ॥ मृषात्वात्तस्यनाद्वैतंस्वरूपंतुविरुध्यते ॥ ५५ ॥ तथा
भूतस्यसद्ब्रह्मबोधकत्वंचयुज्यते ॥ यद्रूप्यमित्यभात्सेयंशुक्तिरित्यादिदर्शनात् ॥ ५६ ॥ अ
स्तिचात्रप्रपंचेनसंबंधोब्रह्मणःस्फुटः ॥ आध्यासिकस्तुसत्कुंभइत्यादौबुद्धिगोचरः ॥ ५७ ॥

यतोवाइमानिभूतानिजायंतइत्यादिश्रुतौ हेतुत्वंप्रपंचाभिन्ननिमित्तोपादानत्वंब्रह्मणस्तटस्थंलक्षणंप्रोक्तमित्यन्वयः । यतःप्रपंचधर्मत्वात्पृथक्भूतमेवकारणमुपलक्षयति नविशेषणत्वेनातइत्यर्थः । हेतुत्वस्यासत्यत्वान्नाद्वितीयस्वरूपलक्षणविरोधइत्याह । मृषात्वादिति ॥ ५५ ॥ नन्वसत्यत्वेकारणत्वस्यलक्षकत्वंनसंभवति असत्यस्यलक्षकत्वादृष्टेरित्याशंकांनिराचष्टे । तथाभूतस्येति ॥ ५६ ॥ ननु प्रपंचेनब्रह्मणः संबंधाभावात्कथंतत्कारणत्वं तल्लक्षणमित्याशंक्याह । अस्तीति ॥ ५७ ॥ ॥ ॥ ॥ ॥

फलितमाह । अतइति ॥ ५८ ॥ ननूक्तलक्षणलक्ष्यताप्रधानादीनांकुतोनेत्याशंक्यपरिहरति । नचेति ॥ ५९ ॥ सर्वज्ञत्वादिकमत्रसू
त्रे केनपदेनविवक्षितमित्यपेक्षायामाह । यच्छब्देनेति । तत्रकार्यलिंगकानुमानंहेतुरित्याह । प्रपंचरूपकार्यद्वारैवेति ॥ ६० ॥ नामरू
पाभ्यांव्याकृतस्येत्यादिभाष्यं स्वस्वप्रक्रियानुसारेणप्रपंचविभागकृततत्तद्वादिनिरासार्थमित्याशयेनाह । वादिनइति । गुणवद्द्रव्यंसामा
न्यवानचलात्मकःसमवायिकारणताविधुरोगुणः । संयोगविभागयोरनपेक्षकारणंकर्म । नित्यमेकमनेकसमवेतंसामान्यमितिद्रव्यादि
चतुष्टयं वार्तिककारीयाभट्टपादानुयायिनोमीमांसकाःप्राहुरित्याह । द्रव्यादीति । वैशेषिकास्तु द्रव्यगुणकर्मसामान्यविशेषसमवाया

अतःप्रपंचजन्मादिहेतुत्वेनतटस्थतः ॥ जिज्ञास्यंशुद्धब्रह्मात्मनिर्विघ्नमुपलक्ष्यते ॥ ५८ ॥ नचो
क्तलक्षणेनात्रप्रधानादेस्तुलक्ष्यता ॥ सार्वज्ञ्यसर्वशक्तित्वाभावात्तस्यजडत्वतः ॥ ५९ ॥ सर्वज्ञ
त्वादिसूत्रस्थयच्छब्देनविवक्षितम् ॥ साविवक्षाप्रपंचात्मकार्यद्वारैवलभ्यते ॥ ६० ॥ वादिन
स्तुप्रपंचंतंस्वस्वपक्षानुसारतः ॥ विभजंतितथाह्यत्रद्रव्यादिकचतुष्टयम् ॥ ६१ ॥ जगुर्वार्तिक
कारीयास्तथावैशेषिकास्तुषट् ॥ कार्यादिपंचशैवाश्चतथासप्तदिगंबराः ॥ ६२ ॥ ॥

ख्यान् षड्पदार्थान्प्राहुस्तत्र येनित्यद्रव्येष्वेववर्ततेतेतएवविशेषाः । नित्यसंबंधःसमवायः शैवास्तुकार्यकारणयोगविधिदुःखांतान्पंचप्रा
हुस्तत्र कार्यमहदादि कारणमीश्वरः योगःसमाधिः विधिस्त्रिषवणस्नानादिः दुःखांतोमोक्षः क्षपणकास्तुजीवाजीवास्रवसंवरनिर्जरबंध
मोक्षान्सप्तप्राहुस्तत्र जीवश्चेतनः । अजीवःअचेतनःपरमाण्वादिः । ज्ञानोत्पादनद्वारा पुरुषंविषयेष्वास्रवयतीत्यास्रवइंद्रियप्रवृत्तिः ॥
तत्संवृणोतीतिसंवरःशमदमादिः ॥ नितरांजरयतिकल्मषमितिनिर्जरस्तप्तशिलारोहणादिः बंधःकर्म मोक्षःसंततोर्ध्वगमनम् ॥ ६१॥६२॥

द्रव्यगुणकर्मसामान्यविशेषशक्तिपारतंत्र्यनियोगानष्टौप्राभाकराःप्राहुः। तत्रपारतंत्र्यंसमवायः। गौतमीयास्तु प्रमाणप्रमेयसंशयप्रयोजनदृष्टांतसिद्धांतावयवतर्कनिर्णयवादजल्पवितंडाहेत्वाभासच्छलजातिनिग्रहस्थानानि षोडशप्राहुः। तत्रप्रमाणंप्रमाकरणं प्रमेयःप्रमाविषयः संशयःअनवधारणाज्ञानं प्रयोजनमुद्देश्यं दृष्टांतःव्याप्तिवेदनस्थानं सिद्धांतःप्रामाणिकत्वेनाभ्युपगमः अवयवाःप्रतिज्ञादयः तर्कोव्याप्तिबलादनिष्टप्रसंजनं निर्णयस्तर्कपूर्वकस्तत्त्वाध्यवसायः। वादोवीतरागकथा जल्पःप्रत्येकसाधनवतीविजिगीषुकथा वितंडा स्वपक्षस्थापनविधुरा सा हेत्वाभासाअहेतवोहेतुवदवभासमानाः छलंविपरीतार्थकल्पनोपपत्त्यावचनविघातः स्वव्याघातकमुत्तरंजातिः निग्र

अष्टौप्राभाकरास्त्वाहुर्गौतमीयास्तुषोडश॥ सांख्याःपातंजलास्त्वाहुःस्वमतेपंचविंशतिः॥६३॥
त्रयंवेदांतिनःप्राहुर्नामरूपंचकर्मच॥ युक्तोवेदांतिनांपक्षःश्रौतत्वादेवसन्नयात् ॥ ६४ ॥ नाम
रूपमिदंकर्मनामरूपेइतिश्रुती ॥ त्रैविध्यमवलंब्यैतद्द्वैविध्यंस्वीकृतंचतैः ॥ ६५ ॥ ॥

हस्थानंकथकाशक्तिसूचकंवचनम्। सांख्याःपातंजलाश्च ज्ञानेंद्रियकर्मेंद्रियतन्मात्रमहाभूतमनोऽहंकारमहदव्यक्तपुरुषाख्यपंचविंशतितत्वानिप्राहुः। तत्रज्ञानेंद्रियंश्रोत्रत्वक्चक्षुर्जिह्वाघ्राणाख्यं कर्मेंद्रियंवाक्पाणिपादपायूपस्थाख्यं तन्मात्रंशब्दस्पर्शरूपरसगंधाख्यं महाभूतानिपृथिव्यप्तेजोवाय्वाकाशाख्यानि महत्प्रकृतेराद्यंकार्यं अव्यक्तंप्रकृतिः पुरुषआत्मा ॥ ६३ ॥ वेदांतिनस्तु नामादित्रयंप्राहुस्तत्रनामरूपशब्दाभ्यांशब्दार्थौकथ्येते तयोःसंबंधःकर्मशब्दार्थः कस्तर्हिप्रामाणिकःपक्षइत्यपेक्षायामाह। युक्तइति। एवंभूतेश्रुतीअवलंब्यतैर्वेदांतिभिस्त्रैविध्यंद्वैविध्यंचापिस्वीकृतं कर्मपदाभिधेयस्यशब्दार्थसंबंधस्यसंबंध्यंतर्भावमंगीकृत्यद्वैविध्यस्वीकारः ॥ ६४ ॥ ६५ ॥ ॥

यथाघटंचिकीर्षुःकुलालः प्रथमंघटशब्दविशेषितंपृथुबुध्नोदराकारविशेषितंचबुद्धावाविर्भाव्यपश्चाद्यथाविर्भूतंघटशब्दालंबनयोग्यंतथाभूता काररूपितंचघटंनिर्वर्तयति तथामूलकारणमपिनामरूपाभ्यांस्वबुद्धावाविर्भूतमेवसर्वंपश्चाद्व्यनक्तीत्याशयेनाह । नामरूपइति । अत्र सर्वशक्तित्वेसर्वज्ञत्वे ॥ ६६ ॥ तत्रहेतुमाह । असाधारणेति । असाधारणंप्रतिनियतंदेशादिदेशकालनिमित्तंयेषांतेषांकर्मफलानामा श्रयस्य तत्रस्वर्गाख्याग्निष्टोमादिकर्मफलस्य प्रतिनियतोदेशोमेरुपृष्ठं राजसेनादिकर्मफलस्यग्रामादेर्भूमंडलं कालोऽपिस्वर्गस्यदेहपा

नामरूपेसमुल्लिख्यसृजतिस्ममहेश्वरः ॥ सर्वशक्तिःसमस्तज्ञोविवादोनात्रसंभवेत् ॥ ६६ ॥
असाधारणदेशादिफलग्रामाश्रयस्यहि ॥ विचित्राचिंत्यरूपस्यजगतःकारणत्वतः ॥ ६७ ॥
विश्वस्योक्तविधस्यास्ययतोजन्मादिकारणात् ॥ सर्वज्ञात्सर्वशक्तेस्तत्कारणंब्रह्मलक्षितम् ॥६८॥
सर्वज्ञशब्दतःसर्वभासकत्वोपलक्षितम् ॥ शुद्धचैतन्यमात्रंतल्लक्षणेऽस्मिन्विवक्षितम् ॥ ६९ ॥
यतोवेत्यादिवाक्यंतत्समाश्रित्यैवसूत्रकृत् ॥ त्रीनुत्पत्तिस्थितिध्वंसानाहेत्थमवगम्यते ॥७०॥

तादूर्ध्वंपुत्रफलस्यवाल्यादूर्ध्वंप्रतिनियतः निमित्तमपिस्वर्गादेरुत्तरायणमरणादि ग्रामादेःराजप्रसादादिप्रतिनियतं विचित्रंचतन्मनसाप्य चिंत्यरूपंतथाभूतस्यजगतःकारणत्वात् । नचेदृशंजगदसर्वज्ञोऽसर्वशक्तिर्निर्मातुमर्हतीत्यर्थः ॥ ६७ ॥ फलितमुपसंहरति । विश्वस्येति ॥६८॥ स्वरूपलक्षणविवक्षयाभाष्येसर्वज्ञादितिविशेषणमित्याह । सर्वज्ञशब्दतइति । अस्मिंस्तटस्थलक्षणेस्वरूपलक्षणंविवक्षितम् ॥६९॥ ननु जायतेऽस्तिवर्धतेविपरिणमतेऽपक्षीयतेनश्यतीतियास्कोक्ताजन्मोत्तरभाविनोविकाराआदिपदेनकुतोनगृह्यंतइत्याशंक्याह। यतइति॥७०॥

अजातस्यास्थितस्यानष्टस्यचपरिणामाद्ययोगात्तेषांतदधीनत्वात्तद्ग्रहणेनैवग्रहणान्नैषामेवात्रोपादानमित्याशयेनाह। वृद्ध्यादीति ॥७१॥
ननुजगदुत्पत्तिकारणत्वंनसिद्धवद्ब्रह्मलक्षणत्वेनादातुंशक्यंभूतपंचकस्यकार्यत्वासिद्धेर्भौतिकस्यभूतोपादानत्वसिद्धेश्चेत्याशंक्यपृथिव्यप्तेजो
वायवोऽपिपदार्थाजन्मादिमतःपृथिव्यप्तेजोवायुबुद्धिगोचरत्वादेकदेशपृथिव्यप्तेजोवायुवदित्यनुमानेनपरिहरति। पृथ्व्यादीति ॥ ७२ ॥
ननुपृथिव्यादयोनजायंतेमहाभूतत्वादाकाशवदाकाशश्चनजायतेनिरवयवद्रव्यत्वादात्मवदितिप्रत्यनुमानेनाशंकते। नन्विति। घटादि

वृद्ध्यादीनांविकाराणामंतर्भावोयतस्त्रिषु ॥ लक्षणंत्रयमेवास्तिनिर्दोषंवेदसंमतम् ॥ ७१ ॥
पृथिव्यादिप्रपंचस्यकार्यत्वेनविवादता ॥ पृथ्व्यादिबुद्धिगम्यत्वात्तेषांभागवदेवच ॥ ७२ ॥
ननुमह्यादिकान्येवजायंतेव्योमवन्नहि ॥ महाभूतानिनाकाशोजायतेनिष्कलत्वतः ॥ ७३ ॥
क्ष्मादिधीगोचरत्वस्यबलीयस्त्वंमतंततः ॥ बाधःसामान्यशास्त्रस्यविशेषविषयाप्रथा ॥ ७४ ॥
अनुमानांतरैरेवमनुमानस्यबाधनम् ॥ श्रुतेर्विरोधादाकाशोनजन्माभाववान्भवेत् ॥ ७५ ॥
आकाशोगुणवान्नात्माद्दष्टांतोविषमस्ततः ॥ तस्मान्मह्याद्युपादानंब्रह्मसिद्धमितिस्फुटम् ॥७६॥

व्यावृत्त्यर्थंनिरवयवेत्युक्तं गुणादिव्यावृत्त्यर्थंद्रव्यत्वादिति यतःसामान्यविषयान्महाभूतत्वादितिहेतोर्विशेषविषयस्यपृथिव्यादिबुद्धिगोचर
त्वादितिहेतोर्बलीयस्त्वं ततइत्यर्थः ॥ ७३ ॥ यथासामान्यविशेषविषयशास्त्रयोः सामान्यविषयशास्त्रस्यविशेषविषयशास्त्रेणबाधस्तथानु
मानांतरैर्विशेषविषयैः सामान्यविषयस्यानुमानस्यबाधनंनविरुद्धमित्याह। बाधइति ॥ ७४ ॥ किंच तस्माद्वाएतस्मादात्मनआकाशः
संभूतइतिश्रुतिविरोधादाकाशनित्यत्वानुमानंबाधितमित्याह। श्रुतेरिति ॥ ७५ ॥ फलितमाह। तस्मादिति। इत्येवंप्रकारेण ॥ ७६ ॥

ननु सर्वेभावाःसुखादिसामान्यप्रकृतिकास्तेननियमेनान्वितस्वभावत्वात् येविकारायदन्वितस्वभावास्तेतत्प्रकृतिकादृष्टाः यथामृदन्विताघटाद्यस्तथासर्वेतेविकाराःसंसृष्टैकप्रकृतिकाः परिमितत्वादनेकत्वाद्विकारत्वाच्च यथापिंडप्रकृतिकाघटादयइतिजगन्मूलकारणंप्रधानमनुमितिमतेसांख्यास्तथाणुवादिनोवैशेषिकाः। विमतंकार्यद्रव्यंस्वपरिमाणादणुतरपरिमाणारभ्यं कार्यद्रव्यात्पटवदित्यनुमानस्यनिरवयवपरमाणुपर्यंतप्रवृत्तेः। परमाणवोमूलकारणमितिवदंति। तथाशैवाःपशुपतिं योगाहिरण्यगर्भमागमबलात्प्रपंचकारणंकल्पयंति। आदिपदेनशून्यवादिनस्तेतुसमस्तकार्यमभावपूर्वकंयोग्यत्वेसत्यनुपलभ्यमानपूर्वावस्थात्वात् यन्नैवंतन्नैवं यथापरपरिकल्पितआत्मेतिसर्वत्रशून्यमालंबनंवदंति। तथाच तत्कल्पनानांविद्यमानत्वेकथमखिलोपादानताब्रह्मणःस्फुटंसिद्ध्यतीत्याशंक्याह। सांख्याइति। प्रमाणाभासवादित्वान्नैर्दूरतएवनिरस्ताः। तथाहि सांख्यानुमानेतावत्सुखदुःखमोहान्वयोभावानामसंप्रतिपन्नः। घटादीनांबाह्यत्वेन सुखादीनामां

## सांख्यावैशेषिकाःशैवास्तथायोगादयोऽखिलाः॥ प्रमाणाभासवादित्वान्निरस्ताःसूरिभिर्नयैः॥ ७७॥

तरत्वेनोपलब्धेस्तथाचप्रत्यक्षविरोधादनुमानमेवनोत्तिष्ठति एकंचशब्दमुपलभमानानांप्रत्येकंसुखादित्रितयोपलंभप्रसंगश्च नहिवस्तुनिप्रतीयमानेदृष्टाभा तदभिन्नंसुखादिनप्रतीयतइतिवक्तुंयुक्तं वस्तुनोऽप्यभानप्रसंगात् अदृष्टातिरिक्तपुष्कलकारणेसत्यदृष्टाभावेनकार्याभावादर्शनाच्च द्वितीयानुमानेपरिमितत्वहेतौ तत्किंवस्तुतउतदेशतःकिंवाकालतः। आद्येगुणगुणिपुरुषेषुव्यभिचारः। द्वितीयतृतीययोर्घटहिमकरकादिषुप्रत्यक्षदृष्टभिन्नप्रकृतिषुद्वितीयहेतोरप्यत्रैवव्यभिचारःस्पष्टः। वैशेषिकानुमानेऽपि दीर्घविस्तीर्णदुकूलारब्धह्रस्वद्रव्यरज्जुकार्येव्यभिचारः। किंचोक्तहेतुरप्यनुमानदुष्टः। किंचिदपिकार्यद्रव्यंननिरवयवद्रव्यपूर्वकंसावयवत्वाद्घटवत्। योगानांशैवानांपक्षेसंगविनिर्मुक्तस्यजगत्कारणत्वानुपपत्तिः वैषम्यादिदोषापत्तिश्च। शून्यवादेसर्वंकार्यमभावपूर्वकमित्यत्रकिंघटादेरपिधर्मित्वमुततद्व्यतिरिक्तस्यनाद्यः। घटादेःपूर्वावस्थायाःप्रत्यक्षदृष्टत्वात्। नद्वितीयः। घटादिदृष्टांतेनेतरत्रापितदनुमानसंभवादिति॥ ७७॥ ॥ ॥

फलितमाह । परिशेषादिति ॥ ७८ ॥ ननु सत्सुश्रुतिवाक्येष्ठकिमितिसूत्रेयुक्तिःप्रदर्शितेत्याशंक्याह । अनयेति । अनयायुक्त्याब्रह्म संभावनायांसत्यांततःपरंश्रुत्यासाधयितुंब्रह्मशक्यंतथैवाभिज्ञैःप्रदर्शितम् ॥ ७९ ॥ अभिज्ञवाक्यंपठति । संभावितइति ॥ ८० ॥ नन्वनु मानेनैवजगत्कारणस्येश्वरस्यसम्यक्सिद्धौ किमागमेनेतिशंकते । नन्विति । आगमस्यतर्हिकागतिरित्याशंक्याह । आगमस्त्विति ॥८१॥ नन्वागमंविनाकथंसर्वज्ञैककारणानुमानमित्यपेक्षायामाह । उपादानेति । सर्वंजगदुपादानोपकरणाद्यखिलाभिज्ञकर्तृकंकार्यत्वात्प्रासादा

परिशेषादतःसिद्धयेत्सर्वज्ञःसर्वशक्तिकः ॥ ईश्वरःकारणंत्वित्थंयुक्तिःसूत्रेप्रदर्शिता ॥ ७८ ॥
ब्रह्मसंभावनायांचानयायुक्तयाततःपरम् ॥ शक्यंसाधयितुंश्रुत्यातथाभिज्ञैःप्रदर्शितम् ॥ ७९ ॥
संभावितःप्रतिज्ञायांपक्षःसाध्येनहेतुना ॥ नतस्यहेतुभिस्त्राणमुत्पतन्नेवयोहतः ॥ ८० ॥ नन्वी
श्वरस्यसंसिद्धावनुमानेनकिंतदा ॥ आगमेनागमस्त्वत्रतत्सिद्धार्थानुवादकः ॥ ८१ ॥ उपादा
नोपकरणाद्यखिलाभिज्ञकर्तृकम् ॥ कार्यत्वाद्विश्वमखिलंगृहादीवेतिचेन्नहि ॥ ८२ ॥ बहुक
र्तृकतापत्तेर्लाघवादेककर्तृता ॥ इतिवेदेऽमुनाकर्तृप्रकृत्यैक्यमपीष्यताम् ॥ ८३ ॥ अतःसंभा
वनाबुद्धिहेतुत्वेनागमार्थके ॥ युक्तिःप्रदर्शितास्माभिरागमार्थाविरोधिनी ॥ ८४ ॥ ॥

दिवदिति । परिहरति । नहीति ॥ ८२ ॥ प्रासादादेर्बहुकर्तृत्वदर्शनाज्जगतोऽपिबहुकर्तृकत्वंस्यादितिहेतुमाह । बहुकर्तृकतेति । ननुलाघवादेक कर्तृकत्वंसेत्स्यतीतिशंकते । लाघवादिति । अनेनैवानुमानेनात्यंतलाघवान्निमित्तोपादानैक्यमपिस्वीकर्तव्यमितिपरिहरति । अमुनेति ॥ ८३ ॥ यस्मादागमंविनानुमानंनाभिप्रेतार्थसाधकमतआगमोक्तार्थेसंभावनाहेतुत्वेनागमाविरोधिनीयुक्तिरस्माभिःप्रदर्शितानत्वागम मूलतयेत्याह । अतइति ॥ ८४ ॥ ॥ ॥ ॥ ॥ ॥ ॥

तथाचास्मदभिप्रायापरिज्ञानमेववादिनांविभ्रमप्राप्तिपुरस्सरविपरीतकथनप्रवृत्तौकारणमितिफलितमाह । वैशेषिकादयइति ॥ ८५ ॥ ननुश्रुत्यविरुद्धानुमानोपन्यासएवजन्मादिसूत्रेकृतइत्यत्रकिंबाधकमितिचेत्तत्राह। श्रुतीनामिति। तत्रहेतुः। यतइति। अत्रास्मिन्शास्त्रेता त्पर्याद्दुपक्रमोपसंहारादिषड्विधतात्पर्यात् ॥ ८६ ॥ किमर्थमित्यपेक्षायांशब्दशक्त्यनुसारिन्यायैर्वेदांतवाक्यानांब्रह्मणितात्पर्यनिर्णयादेव ब्रह्मसाक्षात्कारस्यसिद्धिर्नान्यथेत्येतदर्थमित्याह। ब्रह्मेति ॥ ८७ ॥ यतःकेवलानुमानपराणांतत्त्वज्ञानंनदृश्यतइत्याह। नवेति। नवे दविन्मनुतेतंबृहंतमितिश्रुतेः ॥ ८८ ॥ किंचापौरुषेयस्यवेदस्यानुमानमूलकताभावान्नतत्सिद्धार्थानुवादकतेत्याह। वेदस्येति। ननुब्रा

वैशेषिकादयःसर्वेवादिनोयेऽन्यथाजगुः ॥ अस्मदुक्तांतुतेयुक्तिमबुध्वासंभ्रमंगताः ॥ ८५ ॥
श्रुतीनांग्रथनेत्वेवसूत्रतात्पर्यतायतः ॥ निर्णीतान्यत्रतात्पर्याच्छ्रुतिवाक्यानिसूत्रकैः ॥ ८६ ॥
ब्रह्मज्ञानस्यवेदांतवाक्यतात्पर्यनिर्णयात् ॥ सिद्धिस्तन्निर्णस्यापिन्यायैःशब्दानुसारिभिः ॥८७॥
नवावैशेषिकादीनांमानांतरविचारिणाम् ॥ दृश्यतेब्रह्मविज्ञानंशुष्कतर्काहृतात्मनाम् ॥ ८८ ॥
वेदस्यापौरुषेयस्यमूलंनानुमितिर्भवेत् ॥ नचात्यंतानपेक्षैवानुमानस्यापिसंभवेत् ॥ ८९ ॥
आगमार्थस्यदार्ढ्यायापेक्षितंह्यविरोधियत् ॥ मेधावीपंडितोहीतिश्रुत्यैवांगीकृतंयतः ॥ ९० ॥

ह्मावगतेरनुमानानिर्वृतित्वेयुक्तिप्रतिपादकसूत्रमनर्थकमित्याशंक्यानुमानस्यस्वातंत्र्यमेवनिरस्यते नसहकारित्वमित्याशयवानाह। नचे ति। हियस्मादनुमानमपियद्वेदांतवाक्याविरोधितन्ननिवार्यते प्रत्युततदर्थदार्ढ्यापेक्षितमेवेत्यर्थः ॥ ८९ ॥ श्रुत्यैवसहायतयातर्कस्य स्वीकृतत्वादित्याह। श्रुत्यैवेति। श्रोतव्योमंतव्यइतिश्रुत्या पंडितोमेधावीगंधारानेवोपसंपद्येतैवमेवेहाचार्यवान्पुरुषोवेदेतिश्रुत्याच पु रुषबुद्धिसाहाय्यद्वारास्वसहायकार्यमंगीकृतमित्यर्थः। नहिब्रह्मजिज्ञासायांधर्मजिज्ञासायामिवश्रुतिरेवप्रमाणमपित्वनुभवादयोऽपि ब्रह्म

ज्ञानस्यानुभवावसानत्वाद्भूतवस्तुविषयत्वाच्चेतिभावः ॥ ९० ॥ फलितमुपसंहरति । अतइति । प्रपंचस्यकारणंब्रह्मैवसिद्धं महाभूतानि स्वानुगतोपादानानि भावत्वेसतिविकारत्वात् स्वानुगतंचसदेव सन्घटःसन्पटइतिसदनुरक्ततयाघटादेःप्रतीयमानत्वात् । भौतिकानां चभूतोपादानत्वंदृश्यमानंमूलप्रकृत्यधीनतामेवसर्वस्यगमयति सर्वकार्योपादानमेकमेवेतिलाघवादितिन्यायानुगृहीतानुमानानुगृहीतश्रुत्यासिद्धमित्यर्थः । विमतमभिन्ननिमित्तोपादानंप्रेक्षापूर्वकंभवति कार्यत्वात् आत्मगतसुखादिवदित्यनुमानमत्यानुगृहीतया तदैक्षतबहुस्यांप्रजायेयेतिश्रुत्यावगंतव्यं ननुकारणस्यपरिणामिनोदुग्धादेरचेतनत्वदर्शनादुपादानस्याधिष्ठातृत्वंविरुद्धमित्याशंक्यापरिणामिनो

अतोऽन्यस्यप्रधानादेःकारणत्वनिरासतः॥ ब्रह्मैवकारणंसिद्धंप्रपंचस्यात्ममायया ॥ ९१ ॥
यत्कृतंमाययातस्यसत्यत्वंनैवसंभवेत् ॥ प्रपंचस्यास्यसर्वस्यतथात्वान्नैवसत्यता ॥ ९२ ॥
एकमेवाद्वितीयंयद्ब्रह्मवेदांतसंमतम् ॥ तदेवमाययाजीवविश्वाकारेणभासते ॥ ९३ ॥ तत्त्वंव
स्तुतदेवात्रनान्यत्तस्यैवहेतुता ॥ वस्तुतोनित्यविज्ञानघनाखंडामलाक्षरम् ॥ ९४ ॥ ॥

विवर्ताधिष्ठानस्यब्रह्मणोमाययाभिन्ननिमित्तोपादानत्वसंभवादित्याशयेनाह। आत्ममाययेति। मायांतुप्रकृतिंविद्यान्मायिनंतुमहेश्वरमिति श्रुतेः ॥ ९१ ॥ मायाकृतत्वादेवास्यप्रपंचस्यमिथ्यात्वंनिश्चीयतइत्याह। यदिति। यदैंद्रजालिकनिर्मितवृक्षादि। विमतंमिथ्याविवर्तत्वान्मायाव्याघ्रादिवदितिभावः ॥ ९२ ॥ सर्वेविकाराःस्वानुस्यूतैकस्मिन्वस्तुनिपरिकल्पिताः प्रत्येकमेवस्वभावानुविद्धत्वेसतिविभक्तत्वाच्चंद्रविशेषवत् भेदोऽपिमिथ्याभेदत्वाच्चंद्रभेदवदित्याद्यनुमानेनैकस्मिन्नेववस्तुनिसर्वविकारजातंभेदश्चकल्पितइत्याशयेनाह । एकमेवेति ॥ ९३ ॥ विवर्ताधिष्ठानस्यवस्तुतोऽन्यथाभावोनास्तीत्याह। वस्तुतइति ॥ ९४ ॥ ॥ ॥ ॥

तत्रैवतथाभूतेब्रह्मण्येव । सृष्टिश्रुतीनामपिनसृष्टिप्रतिपादनेतात्पर्यमपितु तदनुवादेनतथाभूतंब्रह्मज्ञायतएवेत्याह । मुमुक्षूणामिति । सृष्टेरर्थरूपत्वान्नतत्प्रतिपादनेनमुमुक्षूणांहितंभवति नहिसत्याद्बंधान्मोक्षःसंभवतीतिभावः । एवंशाखाग्रश्चंद्रइतिन्यायेन ॥ ९५ ॥ ९६ ॥ उपसंहरति । ब्रह्मणइति ॥ ९७ ॥ एवंद्वितीयसूत्रभाष्यतात्पर्यमभिधाय शास्त्रयोनित्वादितितृतीयसूत्रभाष्यतात्पर्यंवक्तुमुपक्रमते । शास्त्रयोनित्वेति । ननुब्रह्मणोलक्षणद्वयाभिधानपदेपूर्वसूत्रेएव प्रधानादिकारणनिरासायश्रुतियुक्तिभ्यांसर्वज्ञत्वस्यप्राधान्येनसाधितत्वा

तत्रैवश्रुतिसूत्राणांतात्पर्यमितिनिश्चितम् ॥ मुमुक्षूणांहितार्थायश्रुत्यैवंबोध्यतेपरम् ॥ ९५ ॥
यःशाखाग्रःसचंद्रोऽस्तियथालोकेप्रबोधनम् ॥ दृष्टंतत्साम्यमादायबोधनंचश्रुतौकृतम् ॥ ९६ ॥
ब्रह्मणोलक्षणंसिद्धंश्रौतंजिज्ञास्यवस्तुनः ॥ सूत्रेद्वितीयकेब्रह्मजिज्ञासोर्मोक्षदंपरम् ॥ ९७ ॥
शास्त्रयोनित्वहेतोश्चसार्वज्ञ्यंब्रह्मणःपरम् ॥ साध्यतेन्यायतस्तत्रशंकाप्येवंप्रजायते ॥ ९८ ॥
श्रुतियुक्तिप्रमाणाभ्यांसर्वज्ञत्वस्यसाधनात् ॥ पूर्वसूत्रेयतस्तस्माद्व्यर्थंसूत्रमिदंत्विति ॥ ९९ ॥
मैवंयाःशक्तयोवेदेसमस्तार्थप्रकाशिकाः ॥ आसुर्ब्रह्मणिताःसर्वाःशब्दोपादानभावतः ॥ १०० ॥
घटाद्यर्थप्रकाशिन्योयथाग्नौदीपशक्तयः ॥ दीपप्रभेवसंयुक्तद्योतनैवचिदात्मनः ॥ १०१ ॥

त्किमनेनसूत्रेणेतिशंकामुत्थापयति । शंकापीति ॥ ९८ ॥ ९९ ॥ समाधत्ते । मैवमिति । सर्वार्थप्रकाशिकायाःशक्तयोवेदेदृश्यंते ताःसर्वाअपिब्रह्मणिआसुः स्थिताइतिसंबंधः । तत्रहेतुमाह । शब्दोपादानभावात् ॥ १०० ॥ तत्रदृष्टांतमाह । घटादीति । फलितमाह । यथेति । दीपप्रभायथासंयुक्तार्थंद्योतयतितथाचिदात्मनएवशक्तिःसंयुक्तार्थद्योतनेतीदानीमपरंसार्वज्ञ्यंसाध्यते । विमताशक्तिःकारणगततथाविधशक्तिपूर्विका कार्यगतप्रकाशनशक्तित्वात् दीपगतशक्तिवदित्यर्थः ॥ १०१ ॥ ॥ ॥ ॥

ननुशब्देऽर्थप्रकाशनकरणशक्तेर्दृष्टत्वात्तत्कारणेऽपि तादृश्येवशक्तिरनुमेयेत्याशंक्यपरिहरति । आगमइति ॥ २ ॥ आत्मनोज्ञातृत्वेनप्रसिद्धत्वात्तत्रकरणशक्तिमत्त्वप्रसाधनस्यविरुद्धत्वान्नसासाध्यतेऽपितु ज्ञातृत्वशक्तिरित्याशयेनाह । चेतनत्वादिति ॥ ३ ॥ ननुकारणेकरणशक्तिर्नास्तिचेत्कथंसाकार्येसमागताइतितत्राह । कार्येति । अत्रदृष्टांतमाह । मृत्तिकायामिति । तथाचार्थद्योतनशक्तिःकारणगततादृशशक्तिपुरस्सरेत्यनुमीयते नतुसर्वाअपिशक्तयःकारणगतशक्तिपूर्विकाइतिभावः ॥ ४ ॥ वेदेसर्वार्थप्रकाशनसामर्थ्यमावेदयति । इतिहासेति ।

ज्ञानशक्तिरितीदानींसार्वज्ञ्यंसाध्यतेऽपरम् ॥ आगमेकरणशक्तिर्यद्यप्यस्तितथापिच ॥ २ ॥ ब्रह्मणश्चेतनत्वाज्ज्ञातृत्वशक्तिर्विभाव्यताम् ॥ प्रोक्तशक्तिर्नवैकर्तुश्चेतनस्यविभाव्यते ॥ ३ ॥ कार्यकारणयोर्नैवसाम्यंस्यात्सर्वशक्तिषु ॥ मृत्तिकायांजलानयनस्यशक्तिर्नदृश्यते ॥ ४ ॥ इतिहासपुराणादिनानास्थानयुतेनयत् ॥ वेदेनभासितंनैवनतत्सत्वेऽस्तिचप्रमा ॥ ५ ॥ वेदोपादानतायांनोब्रह्मण्यस्तिविवादता ॥ तस्यनामप्रपंचांतःपातित्वादेवकार्यता ॥ ६ ॥ नामरूपप्रपंचस्योपादानत्वंमहेशितुः ॥ सर्ववेदांतसिद्धत्वात्तत्रवादोनधीमताम् ॥ ७ ॥ नवर्ष्यादिवदेवास्यवेदोक्ताखिलतज्ज्ञता ॥ वेदप्रोक्तादपिब्रह्माधिकंजानातिसर्ववित् ॥ ८ ॥ ॥ ॥

आदिपदेनन्यायमीमांसाधर्मशास्त्राणि शिक्षाकल्पोनिरुक्तंव्याकरणंछंदोज्योतिषमितिषडंगानि चत्वारोवेदाग्रह्यंते ॥ ५ ॥ ननुवेदस्यसर्वार्थावभासनशक्तिमत्त्वेऽपि तस्यापौरुषेयत्वेनकार्यत्वाभावाद्धेत्वसिद्धिरित्याशंक्याह । वेदेति ॥ ६ ॥ ७ ॥ ननुनैवंब्रह्मणिसार्वज्ञ्यंसाधनीयमपितु यथासकलवेदार्थज्ञतयामुनीनांसर्वज्ञताब्रह्मणोऽपितथासाधनीयेत्याशंक्याह । नवेति । तथाविधसर्वज्ञस्यजगत्कारणत्वेकस्यचिन्मुनेरेवतत्त्वं स्यादितिभावः ॥ ८ ॥ ॥ ॥ ॥ ॥ ॥ ॥

वेदःस्वविषयादधिकतरविज्ञानवत्प्रणीतः वाक्यप्रमाणत्वात्पाणिन्यादिकृतशास्त्रवदित्यनुमानेनब्रह्मणिज्ञानाधिक्यंसाधयति । वाक्येति । अनाप्तोक्तिंनिराकरोति । प्रमाणेति ॥ ९ ॥ ३१० ॥ ननुस्वविषयादधिकतरविज्ञानप्रणीतत्वंबाधितं वेदानवभास्यविषयाभावादित्याशंक्याह । गुडेति । तथाचगुडक्षीरादिमाधुर्यवैषम्यस्याभिधानागोचरत्वेऽपिप्रमाणांतरगोचरत्वंदृष्टंतद्वदत्रापीतिनबाधितत्वमितिभावः ॥११॥

वाक्यंप्रमाणरूपत्वाद्वेदःस्वविषयादपि ॥ अधिकार्थपरिज्ञानवत्प्रणीतोऽस्तिशास्त्रवत् ॥ ९ ॥
पाणिन्यादिकृतंशास्त्रंयथास्वविषयादपि ॥ अधिकार्थपरिज्ञानवत्प्रणीतंतथागमः ॥३१०॥ गुड
क्षीरादिमाधुर्यविशेषोऽप्यस्मदादिभिः ॥ अनुभूतोनशक्योऽस्तिवक्तुंज्ञानमतोऽधिकम् ॥ ११ ॥
वेदोऽपिव्यवहार्यार्थभासकत्वाचसर्ववित् ॥ तद्धेतुर्ब्रह्मचात्मानंव्यवहाराद्यगोचरम् ॥ १२ ॥
स्वचिताभिव्यनक्तीतिसार्वज्ञंतन्निरंकुशम् ॥ ब्रह्मरूपेणवेदेनाखिलंयद्यपिबोध्यते ॥ १३ ॥ तथा
पिमुख्ययावृत्त्याकिंचिल्लक्षणयाक्वचित् ॥ किंचित्सामान्यतःकिंचिद्विशेषेणापिबोध्यते ॥१४॥
ब्रह्मसर्वात्मनासर्वंसंप्रकाशयतिस्वयम् ॥ वेदादप्यधिकाभिज्ञमतोब्रह्मास्तिसर्वथा ॥ १५ ॥

तथाचवेदस्येषन्न्यूनसर्वज्ञत्वात्सर्वज्ञकल्पत्वं ब्रह्मणस्तुतत्कारणस्यवेदगोचरव्यवहार्यार्थातिरिक्ताभिव्यंजकत्वान्निरंकुशंसर्वज्ञत्वमित्याह । वेदोऽपीति ॥ १२ ॥ प्रकारांतरेणापिपरमात्मनोऽधिकतरसार्वज्ञ्यंदर्शयति । ब्रह्मरूपेणेति ॥ १३ ॥ १४ ॥ १५ ॥ ॥ ॥

ननुप्रणीतत्वंकिमुच्चारणमात्रमुतबुद्धिपूर्वकृतत्वं। नाद्यः उपाध्यायवद्ब्रह्मणःसर्वज्ञतासिद्धेः। नद्वितीयो वेदस्यपौरुषेयतापत्तेरित्याशंक्य द्वितीयपक्षमालंब्यसमाधत्ते। स्वतइति। वेदस्यपौरुषेयत्वेप्रामाण्यंनस्यात्। पौरुषेयस्योन्मत्तवाक्यस्ययथातत्त्वंनदृश्यतेतद्वत्। ननुसर्वज्ञेश्वरप्रणीतत्वादस्यप्रामाण्यंसेत्स्यतीतिचेत्सईश्वरअनुमानिकः उतागमिकः। उभयथाप्यनुपपत्तिःसर्वज्ञेश्वरसिद्धौतत्प्रणीततयावेदप्रामाण्यसिद्धिस्तत्सिद्धौचसर्वज्ञेश्वरसिद्धिः। ननु महाजनपरिग्रहाद्वेदप्रामाण्यमितिचेत्तत्रकिंकतिपयमहाजनपरिगृहीतत्वंहेतुरुतसमस्तमहाजनगृहीतत्वं नाद्यः बौद्धागमेऽव्यभिचारान्नांत्यः बौद्धैरगृहीतत्वेनासिद्धेः। ननु महाजनशब्देनसदाचारानुष्ठातारोगृह्यंतइतिचेत्तर्हिदेहात्मभावचंद्रप्रादेशकादीनांतथाविधानां प्रामाण्यापत्तिस्तस्मात्स्वतःप्रमाणभूतस्यवेदस्यप्रामाण्यनाशकंपौरुषेयत्वंनैवाभ्युपेयं स्वार्थप्रवृत्तप्रमाणांतरजन्यत्वंहिपौरुषेयत्वं तच्चवेदेनास्ति वेदःस्वार्थप्रवृत्तप्रमाणांतरजन्योनभवति असर्वज्ञवचनत्वाभावेसतिधर्माधर्मब्रह्मप्रमाणत्वात् पर

स्वतःप्रमाणंवेदोऽस्तिसर्वज्ञोऽनादिरेवच॥ नचास्यकालिदासादिग्रंथवत्पौरुषेयता॥१६॥ अना
दित्वेपुराणादेःसन्निवेशोविलक्षणः॥ यथादृष्टस्तथानास्यनित्यस्यैकस्वरूपिणः॥ १७॥

परिकल्पितेश्वरबुद्धिवदित्यनुमानात्। नन्वेवंतर्हिवेदोनप्रमाणं अन्येनप्रमाणांतरेणार्थमुपलक्ष्यपरप्रतिपत्तयेतत्राप्रयुज्यमानत्वादनाप्तवाक्यवदितिप्राप्तंवेदस्याप्रामाण्यमितिचेन्न अनाप्तवाक्याप्रामाण्यप्रयोजकभ्रांत्यादेरत्राभावात्। प्रमाणत्वेनसंप्रतिपन्नेहिवाक्येभ्रांत्याद्यमूलत्वमाप्तवाक्यत्वंचविपद्यते तत्रकस्यप्रामाण्यप्रयोजकतेतिचेन्न द्वयोरपिमध्यमवृद्धप्रवृत्तिलिंगेनतस्यार्थप्रत्ययमनुमायतस्यहेत्वाकांक्षायांशब्दप्रयोगान्वयव्यतिरेकाभ्यांशब्दस्यतत्रहेतुत्वनिर्धारणात्। अतः सर्वज्ञकल्पोवेदोऽनादिरेवेत्याह। सर्वज्ञइति॥ १६॥ नन्वेवमस्तुवेदवर्णानांनित्यत्वंतथापिपुराणवाक्यवत्कल्पांतरसन्निवेशापेक्षयान्यथातत्प्रणयनंकिंनस्यादित्याशंक्याह। अनादित्वइति। नित्यस्यैकस्वरूपिणःसर्वेषुकल्पेषुसन्निवेशविशेषशून्यस्य॥ १७॥ ॥ ॥ ॥ ॥ ॥

ननु वेदस्यनित्यत्वं अस्यमहतोभूतस्यनिःश्वसितमेतद्यदृग्वेदइतिवेदकार्यत्वप्रतिपादकश्रुतिविरुद्धमित्याशंक्याह । नियतेति । वाक्या
नामेकपदार्थबुद्ध्यवच्छेदकवर्णनियामकक्रमविशिष्टवाक्यानामादिपदेनमहावाक्यार्थबुद्ध्यवच्छेदकवाक्यनियामकक्रमविशिष्टप्रकरणानां
परिपूर्णपुरुषार्थसाधनबुद्ध्यवच्छेदकानेकप्रकरणनियामकक्रमविशिष्टप्रकरणानांशास्त्राणांसंग्रहः ॥ १८ ॥ नित्यकूटस्थशब्दाभ्यांयथापूर्व
स्मिन्कल्पेवेदानांसंनिवेशस्तथास्मिन्नपीतितिविवक्षितम् ॥१९॥ नन्वेवंतर्हिवेदस्यब्रह्मानुपादानकत्वंप्राप्तमितिशंकते । नन्विति ॥२०॥

नियतक्रमयुक्तानांवर्णवाक्यादिरूपिणाम् ॥ वेदादिशब्दवाच्यानांसृष्टिसंहारयोरपि ॥१८॥ आ
विर्भावतिरोभावमात्रभाजांहिनित्यता ॥ कूटस्थतापिचास्माभिःस्वीकृतास्तीहयुक्तितः ॥१९॥
ननुतर्हिनवेदोऽस्तिब्रह्मोपादानइत्यपि ॥ कूटस्थत्वादनादित्वान्नित्यत्वाच्चपरात्मवत् ॥ २० ॥
मैवंस्वतंत्रतोपाधेर्हेतोरव्याप्यतायतः ॥ वेदोह्यस्तिचिदायत्तोब्रह्मण्यारोपितत्वतः॥२१॥ रज्ज्वा
मारोपितःसर्पोरज्ज्वायत्तोयथाभवेत् ॥ अनिर्वाच्योह्यतोवेदोऽव्योमवत्स्वीकृतोऽस्तिनः ॥२२॥

साध्याधिकरणेब्रह्मणिस्वातंत्र्यसत्वात्तन्निष्ठात्यंताभावाप्रतियोगित्वात्साध्यव्यापकताहेत्वधिक
व्याप्यत्वासिद्ध्यापरिहरति । मैवमिति । साधनाव्यापकत्वात्स्वातंत्र्यस्योपाधितासाधनव्यापक
रणवेदनिष्ठात्यंताभावप्रतियोगित्वात्साधनाव्यापकतेति साध्यव्यापकत्वेसति साधनाव्यापकत्वात्स्वातंत्र्यस्योपाधितासाधनव्यापक
तामाशंक्याह । वेदइति ॥ २१ ॥ तत्रदृष्टांतमाह । रज्ज्वामिति । भुजंगादेर्यथाज्ञातरज्ज्वादिविवर्तता तथावेदस्याज्ञातब्रह्मविवर्तत्व
मित्यर्थः ॥ २२ ॥

ननुरज्जुसर्पवद्वेदस्यमिथ्यात्वेतस्याप्रामाण्यंस्यादित्याशंक्याह। अनिर्वाच्यइति। अयमर्थः। किंवर्णमात्रंवेदउतक्रमविशेषवंतोवर्णाः नाद्यः। अक्रमव्युत्क्रमोच्चारितवर्णेष्ववेदबुद्ध्यभावात्। द्वितीयेऽपि सक्रमः किंदेशनिमित्तउतकालनिमित्तः किंवावस्तुनिमित्तः अथवोच्चारणनिमित्तःयद्वोपलब्धिनिबंधनः। नाद्यः। सर्वगतत्वात् नद्वितीयः नित्यत्वात् नतृतीयः एकदैवराजाजरेतिजरारस्यरेफात्पूर्वापरीभावस्यायुक्तत्वात्। नचतुर्थः। पाठकगतोच्चारणतत्क्रमयोरप्रत्यक्षत्वात्प्रत्यक्षस्यक्रमविशिष्टवर्णात्मकस्यवेदस्यापिश्रोत्रग्राह्यत्वाभावप्रसंगात्। पंचमेऽपिकिमुपलब्धिगतक्रमस्तत्वतोवर्णधर्मः किंवासमारोपात्। नाद्यः। अन्यधर्मस्यान्यधर्मत्वानुपपत्तेः। द्वितीयेऽपिकिमाख्यातिवादिनश्चोद्यं किंवान्यथाख्यातिवादिनः आद्ये तन्मतेवर्णमात्रस्यवाक्रममात्रस्यवा वेदशब्दानर्हत्वाद्विशिष्टप्रत्ययाभावादविवेकमात्रमेव वे

अनिर्वाच्यस्यवेदस्यदेहाद्यात्ममतेरिव॥ अर्थक्रियासमर्थत्वमविरुद्धंतथासति॥ २३॥ परब्रह्मविवर्तत्वात्कार्यस्याप्यागमस्यच॥ अनादित्वंचनित्यत्वंप्रवाहत्वेनसंमतम्॥ २४॥ वर्णवाक्यपदादीनांप्रतिकल्पंतुसर्वदा॥ एकरूपानुपूर्वीत्वंकूटस्थत्वंमतंश्रुतौ॥ २५॥ ॥

दइत्यर्थावबोधोनस्यात् द्वितीयेऽपि तन्मतेविशिष्टप्रत्ययमात्रत्वाद्विशिष्टाभावाद्विज्ञानातिरिक्तोवेदोनस्यात्। नचविज्ञानमात्रंवेदः ब्रह्मविज्ञानेवर्णविज्ञानेच वेदबुद्ध्यभावात्। नचोपलब्धिक्रमोपलक्षितावर्णावेदो नविशिष्टाइति सांप्रतंक्रमविशिष्टवर्णप्रत्ययस्यप्रत्ययत्वात्तथाचसर्वथापिनिरूपणासंभवादनिर्वचनीयोवेदइत्यभ्युपेयम्। अर्थक्रियाकारित्वंतुमिथ्याभूतस्यापिचदेहात्मभावस्येव तुच्छव्यावृत्तस्यवेदस्यापिसुवाच्यमित्याह। अनिर्वाच्यस्येति॥ २३॥ ब्रह्मविवर्तस्यतर्हिकथमनादित्वंनित्यत्वंचेत्याकांक्षायामाह। परेति॥ २४॥ वेदेकूटस्थशब्दप्रवृत्तिनिमित्तमाह। वर्णेति। श्रुतौवेदे॥ २५॥ ॥ ॥ ॥ ॥ ॥

ननुवेदसत्तायाःपरतंत्रत्वाद्ब्रह्मवेदोपादानंचेत्तर्हिवेदस्यपौरुषेयत्वपरिहारायस्वीकृतेनोपादानत्वमात्रेण कथंब्रह्मणःपाणिन्यादिदृष्टांतेनस र्वज्ञतेत्याशंक्य नामप्रपंचस्यब्रह्मज्ञानशक्तिविवर्तत्वंस्वीक्रियते क्रमसंख्यादिभेदभाजोहिवर्णानामुपलभ्यमानमर्थप्रकाशनसामर्थ्यमुपा दानकारणधर्मएवयुक्तः प्रदीपतत्प्रकाशसामर्थ्यस्यवह्निधर्मत्वदर्शनात्कार्योपादानयोःशक्तिद्वयकल्पनायाःगादेवंसर्वार्थप्रकाशनसमर्थ त्वात्सर्वज्ञंब्रह्मेत्याशयेनाह । ब्रह्मेति ॥ २६ ॥ उपसंहरति । तस्मादिति । वेदपुरुषेतथाभूतसामर्थ्यंतदुपादानभूतस्यब्रह्मणःसिद्धं तत्त स्मात्तस्यब्रह्मणोनिरंकुशंसार्वज्ञंसिद्धमिति मध्यमणिन्यायेनसंबध्यते । अस्यमहतोभूतस्यनिःश्वसितमेतद्यदृग्वेदइत्यादिवाक्यं ब्रह्म णोवेदकर्तृत्वेनसर्वज्ञत्वंनसाधयति किंवासाधयतीतिविषये नसाधयति तथात्वेवेदस्यसापेक्षत्वप्रसंगादितिप्राप्तेसिद्धांतःसाधयति वेदार्थ

ब्रह्मवेदस्यसर्वार्थभानशक्त्याश्रयोमतम् ॥ वेदोपादानभावेनदीपशक्तेर्यथानलः ॥ २६ ॥
तस्मात्सर्वार्थविज्ञानसामर्थ्यंवेदपूरुषे ॥ तद्धेतोर्ब्रह्मणःसिद्धंसार्वज्ञंतन्निरंकुशम् ॥ २७ ॥ अथ
वापूर्वसूत्रेऽदोलक्षणंचाभिधायवै ॥ संप्रतिज्ञाप्यतेऽनेनप्रमाणंवस्तुनिर्णये ॥ २८ ॥ शास्त्रयोनि
त्वसूत्रार्थोवेदोमानंपरात्मनः ॥ नानार्थसूचकत्वंहिसूत्रेऽलंकारकारणम् ॥ २९ ॥ ॥

प्रमाणांतरेणानुभूयवेदरचनाभावात्सापेक्षत्वाभावादितिसमुदितार्थः । संगतिस्त्वाक्षेपबोध्या वेदस्यनित्यतयाब्रह्मणःसर्वकारणतानसं भवतीत्याक्षेपनिरासायास्योत्थानात् ॥ २७ ॥ लक्षणप्रमाणयोर्ब्रह्मनिर्णयार्थत्वादेकफलकत्वसंगत्याप्रवृत्तस्यवर्णकांतरभाष्यस्यतात्पर्यंव कुमुपक्रमते । अथवेति ॥ २८ ॥ तंत्वौपनिषदंपुरुषंपृच्छामीत्यादिवाक्यं ब्रह्मणोवेदैकगम्यत्वंनसाधयतिकिंवासाधयतीतिसंशयेनसा धयति विमतंकल्पितकारकशक्तिकर्तृपुरस्सरं कार्यत्वाद्घटवत्सचकर्तैकः कल्पनालाघवादितियुक्तिगम्यत्वादितिप्राप्तेराद्धांतः । कार्यमा त्रस्यकर्तृमात्रगमकत्वात् नचलाघवात्तदैक्यनिर्णयः । विचित्रप्रासादादेरनेककर्तृकत्वस्यजीवकर्तृकत्वस्यचोपलब्धत्वात्कार्यलिंगस्य स

र्वज्ञसर्वशक्तिमदेकस्मिन्नपर्यवसानात्तथाविधकारणस्यवेदैकगम्यतेत्यधिकरणरचनामभिप्रेत्य शास्त्रयोनिःकारणंप्रमाणमस्येतिसूत्रार्थमाह । शास्त्रेति । नन्वेकस्यसूत्रस्यकथमर्थद्वयनिर्णायकत्वमितितत्राह । नानेति ॥ २९ ॥ अत्रपौराणिकोक्तिंप्रमाणयति । विश्वतइति । अल्पाक्षरमसंदिग्धंसारवद्विश्वतोमुखं अस्तोभमनवद्यंचसूत्रंसूत्रविदोविदुरितिसूत्रलक्षणदर्शनात् विश्वतोमुखमितिनानार्थत्वमुक्तं तथाचसर्वथासूत्रत्वादेववाक्यभेददोषोनास्तीति फलितमाह । वाक्येति ॥ ३३० ॥ नन्नु ब्रह्मणिप्रमाणभूतंयद्वाक्यं यतोवाइमानिभूता

विश्वतोमुखमित्येवंसूत्रलक्षणदर्शनात् ॥ वाक्यदोषोनवाप्नोतिसूत्रत्वादेवसर्वथा ॥ ३३० ॥ यतो वेत्यादिवेदस्यवाक्यंब्रह्मप्रमापकम् ॥ यद्यप्युदाहृतंपूर्वसूत्रएवतथापिच ॥ ३१ ॥ नास्त्येतत्सूत्रवैयर्थ्यंयतःशास्त्रैकवेद्यताम् ॥ एतत्सूत्रोपपाद्यांतामभिलक्ष्यपरात्मनः ॥ ३२ ॥ पूर्वसूत्रस्यतात्पर्याभिधानाद्वेदनिर्णये ॥ अन्यथापूर्वसूत्रस्ययुक्त्युपन्यासमात्रके ॥ ३३ ॥ तात्पर्यं कल्पयेद्वादीतथात्वेदूषणंपरम् ॥ प्रतिकार्यंपृथग्घेतुजन्यतायास्तुसंभवात् ॥ ३४ ॥ जगतः कारणंब्रह्मसर्वज्ञंसर्वशक्तिकम् ॥ अयमर्थोनसिद्ध्येच्चेत्किमतोदूषणंपरम् ॥ ३५ ॥ ॥

निजायंतइत्यादि तत्तुपूर्वसूत्रएवोदाहृतं । तथाचब्रह्मणःशास्त्रप्रमाणकत्वस्यपूर्वसूत्रएवदर्शितत्वात्किमनेनसूत्रेणेत्याशंक्य पूर्वसूत्रेशास्त्रमुखतउपात्तंकिंतुजन्मादिकंजगतोब्रह्मणःकथमित्याकांक्षायांतात्पर्यविधयावाक्यप्रमाणकत्वंबोधितमेतत्सूत्रंविनातु जन्मादिकेवलमनुमानमेवोपन्यस्तमितिशंकास्यादतआवश्यकमिदंसूत्रमित्याशयेनाह यतइत्यादिना ॥ ३१ ॥ ३२ ॥ वेदान्निर्णयेवेदनिर्णये ॥ ३३ ॥ अस्तुतथैवेत्याशंक्याह । तथात्वेइति । संभवात्कृहादौ तद्दर्शनात् ॥ ३४ ॥ ३५ ॥ ॥ ॥ ॥ ॥

जगत्कारणस्ययथाकथंचित्सिद्धावपि तद्ब्रह्मेतिनसिद्ध्येज्जगत्कारणेब्रह्मशब्दस्यप्रयोगोवेदएवनलोकइत्याह । ब्रह्मेति ॥ ३६ ॥ नन्वेवंत र्हिपूर्वशेषतयातदंतर्गतत्वान्नेदंसूत्रंपृथक्करणीयं किंतु जन्माद्यस्ययतःशास्त्रप्रमाणकमित्येवमितिशंकते जन्मादीति ॥ ३७ ॥ तच्छेषत्वे ऽपिव्याख्यांतरेणजगत्कर्तृत्वहेतुसर्वज्ञत्वेशास्त्रकर्तृत्वहेतुसमर्थनन्यायभेदादधिकरणांतरत्वसिद्धिरित्याशयेनाह । तत्पृथक्करणमिति ॥३८॥ उपसंहरति । तस्मादिति ॥ ३९ ॥ ३४० ॥ नन्वेवंभूतब्रह्मज्ञानस्यकिंफलं नहिस्वान्यजगत्कारणज्ञानेनसमस्तानर्थोपादानस्वाज्ञाननिवृ

ब्रह्मशब्दस्यवेदेहिबृहत्यर्थस्यवाचिनः ॥ प्रयोगोऽस्तिनलोकेऽयंजगद्धेतौप्रयुज्यते ॥ ३६ ॥ ज
न्माद्यस्ययतस्तस्मात्तच्छास्त्रैकप्रमाणकम् ॥ ब्रह्मेत्येतावदेकंतत्सूत्रंस्यात्तावतापिच ॥ ३७ ॥
युक्तिमात्रत्वशंकायानिवृत्तिर्जायतेस्फुटम् ॥ तत्पृथक्करणंशास्त्रोपादानत्वेनवस्तुनः ॥ ३८ ॥
सर्वज्ञत्वंसुसंपादमितिव्याख्यांतरेणतु ॥ वक्तुंतस्माज्जगज्जन्मस्थित्यादेःकारणंपरम् ॥ ३९ ॥
यन्निमित्तमुपादानंसर्वज्ञंसर्वशक्तिकम् ॥ ब्रह्मशास्त्रैकगम्यंतत्सिद्धंसूत्रद्वयेनच ॥ ३४० ॥ स्वा
विद्ययापरब्रह्मस्वयमेवविवर्तते ॥ नानाप्रपंचरूपेणस्वप्नवच्चेतियुक्तितः ॥ ४१ ॥ सूत्रेतृतीये
वेदांतामानंब्रह्मणिसाधितम् ॥ तत्प्रामाण्यंचतुर्थेतुसन्नयादुपपाद्यते ॥ ४२ ॥ ॥

त्तिःसंभवतीत्याशंक्याह । स्वेति । तथाचस्वस्वरूपभूतब्रह्माज्ञानेनबंधस्तद्धानेनतुमोक्षोऽतस्तद्धानंसफलमितिभावः ॥ ४१ ॥ ततुसमन्व यादितिचतुर्थसूत्रस्यतृतीयसूत्रद्वितीयवर्णकेनाक्षेपलक्षणांसंगतिमभिप्रेत्याह । सूत्रइति । पूर्वसूत्रेशास्त्रप्रमाणकत्वंब्रह्मणउक्तमत्रापितदेवो च्यतइतिपौनरुक्त्यंनशंकनीयं वक्ष्यमाणाक्षेपनिरासायपूर्वसूत्रोक्तार्थउपपत्तिकथनपरत्वादस्येत्याशयेनाह । सन्नयादिति ॥ ४२ ॥

वेदांताब्रह्मणिप्रमाणंनवेतिसिद्धवस्तुबोधात्फलभावाभावाभ्यांसिद्धंरूपादिहीनंवस्तुबोधयतोवाक्यस्यसापेक्षत्वानपेक्षत्वाभ्यांवासंशयेपूर्व पक्षमाह । नन्विति ॥ ४३ ॥ किंतत्सूत्रकृतोवाक्यमित्याकांक्षायां आम्नायस्यक्रियार्थत्वादानर्थक्यमतदर्थानामितिजैमिनिसूत्रंपठति । आम्नायस्येति । वायुर्वैक्षेपिष्ठादेवतेत्यादयोऽर्थवादाविध्युद्देशार्थवादयोर्मिथोपेक्षणाद्विध्युद्देशैकवाक्यतयाधर्मेप्रमाणंनवेतिसंशयेपूर्वपक्षसू त्रमाम्नायस्येति सर्वस्यविधिनिषेधार्थवादमंत्रनामधेयात्मकस्यवेदस्यक्रियार्थत्वात्कार्यतच्छेषार्थत्वध्रौव्याददतदर्थानांकार्यतच्छेषार्थवर्जिता नांशुद्धसिद्धवस्तुपराणांवेदानामानर्थक्यंफलवदभिधेयराहित्यंविधिनात्वेकवाक्यत्वात्स्तुत्यर्थेनविधीनांस्युरितिसिद्धांतसूत्रं वायव्यंश्वेत मालभेतभूतिकामइत्येवमंतेनविध्युद्देशेनसहवायुर्वैक्षेपिष्ठेत्याद्यर्थवादानांक्षिप्रदेवतासाध्यंकर्मक्षिप्रमेवफलंदास्यतीतिप्राशस्त्यार्थेनैकवाक्य

ननुसूत्रकृतोवाक्यविरोधाद्भूतवस्तुनि ॥ नवेदांताःप्रमाणंस्युर्जैमिनेर्वेदवेदिनः ॥ ४३ ॥ आ
म्नायस्यक्रियार्थत्वादित्थंसूत्रेणसर्ववित् ॥ आनर्थक्यंवदत्येषामक्रियार्थत्ववादिनाम् ॥ ४४ ॥
आदिमध्यावसानेषुवेदांतानांचयद्यपि ॥ ब्रह्मैक्येभातितात्पर्यंनानर्थक्यस्यसंभवः ॥ ४५ ॥
तथापितेप्रमाणत्वंवेदांतानांनसंभवेत् ॥ अविज्ञातार्थताभावाद्भूतत्वाद्ब्रह्मवस्तुनः ॥ ४६ ॥

त्वात्तत्रप्रकृतमर्थंवदंतोऽर्थवादादयोऽर्थवंतःस्युरितिनखलुवेदत्वमात्रेणप्रामाण्यंनिश्चेतुंशक्यं आदित्योयूपइत्यादौव्यभिचारात्किंतूपक्रमा दिसमधिगततात्पर्येणतात्पर्यंचकार्यएवेतिसकलवेदार्थविज्जैमिनिवचनान्निश्चीयतइत्याशयेनाह । वेदवेदिनइति ॥ ४४ ॥ नन्वर्थवादा दिवेदभागस्यतथात्वेऽपि वेदांतानांनक्रियाविधिशेषत्वं उपक्रमोपसंहाराभ्यासापूर्वताफलार्थवादोपपत्तिरूपतात्पर्यलिंगैर्ब्रह्मैक्येतात्पर्यसि द्धेरित्याशंक्यपरिहरति । आदीति ॥ ४५ ॥ तथापीति । अनधिगतार्थावबोधकत्वंहिप्रमाणानांप्रामाण्यं तच्चसिद्धवस्तुनःप्रमाणांतरगो चरत्वान्नसंभवतीत्याह । अविज्ञातेति ॥ ४६ ॥ ॥ ॥ ॥ ॥ ॥

सिद्धानुवादेफलाभावाच्चेत्याह । सिद्धेति । फलितमाह । विमताइति । विमताविवादास्पदावेदांताब्रह्मवस्तुनिनप्रमाणंमानांतरार्हंतदनुप लब्धब्रह्मबोधकत्वात्स्पर्शयोग्यतदनुपलब्धचित्रगतनिम्नोन्नतांशचाक्षुषज्ञानवत् ॥ ४७ ॥ ४८ ॥ ४९ ॥ ननुब्रह्मणोमानांतरायोग्यत्वा द्विशेषणासिद्धोहेतुरित्याशंक्याह । परिनिष्ठितेति । ब्रह्ममानांतरगम्यंपरिनिष्ठितत्वात्घटादिवदितिनविशेषणासिद्धिः । ननुरसादीनांप्र तिनियतेंद्रियग्राह्यतयेंद्रियांतरागम्यत्वेऽपींद्रियांतरगोचरतायथातथापरिनिष्ठितब्रह्मणोमानांतरागम्यस्यापिशब्दगम्यत्वंकिंनस्यादितिचेन्न

मानांतराधिगम्यत्वात्सिद्धवादाफलत्वतः ॥ विमतानैववेदांताःप्रमाणंब्रह्मवस्तुनि ॥ ४७ ॥
सतिमानांतरार्हत्वेऽन्यमानानुपलब्धिमत् ॥ यद्ब्रह्मतस्यचैतेषांबोधकत्वाद्यथाकिल ॥ ४८ ॥
स्पर्शेणानुपलभ्यस्यस्पर्शयोग्यस्यबोधकम् ॥ चित्रेनिम्नोन्नतांशस्यचाक्षुषंज्ञानमप्रमा ॥ ४९ ॥
परिनिष्ठितवस्तुत्वाद्ब्रह्ममानांतरेणच ॥ योग्यंघटादिवत्त्वित्थंनासिद्धिःस्याद्विशेषणे ॥ ३५० ॥
ननुस्वाध्यायविधिनावेदांतानामपिग्रहात् ॥ अप्रामाण्यमयुक्तंस्यादितिचेत्तर्हिकर्मणि ॥ ५१ ॥
कर्तृरूपस्यजीवस्यब्रह्मणोदेवतात्मनः ॥ प्रकाशकतयाचास्तुविधिशेषत्वमेवहि ॥ ५२ ॥

रसादीनामन्योन्यविषयव्यभिचारवत्परिनिष्ठितवस्तुनिप्रमाणांतरगम्यतायांव्यभिचारादर्शनात् । ननुरूपादिहीनत्वाद्ब्रह्मणोऽपिनप्रमा णांतरयोग्यतेतिचेत्सत्यं तथापिभूतेऽर्थेमानांतरयोग्यतोपलंभाद्ब्रह्मण्यपितथात्वशंकयावेदांतानामप्रामाण्यशंकादुर्वारास्यादितिभावः ॥ ॥ ३५० ॥ ननुस्वाध्यायोऽध्येतव्यइत्यध्ययनविधिनावेदांतानामपिग्रहणादप्रामाण्यमयुक्तमितिशंकते । नन्विति । तर्हिमंत्रादीनामिवक र्मापेक्षितकर्तृस्वरूपदेवतादिप्रकाशनेनक्रियाविधिशेषत्वमस्तुवेदांतानामितिपरिहरति । नहीति ॥ ५१ ॥ ५२ ॥ ॥ ॥

नन्नु किंकर्मविशेषापेक्षितार्थप्रकाशनेनतच्छेषत्वमुच्यतेकिंवाकर्ममात्रशेषत्वं उभयथाप्यसंभवइतिशंकते । नन्विति ॥ ५३ ॥ आद्या भावेहेतुमाह । प्रकरणेति । सोऽरोदीदित्यादिवाक्यस्यकर्मविशेषप्रकरणेपठितत्वाद्यथाविधिशेषत्वंनतथावेदांतानामतइत्यर्थः । द्वितीयं निषेधति । नापीति । सर्वविधीनांशेषतावेदांतानामित्यनुषज्यते किंविधिवत्तदभिधानेनतच्छेषत्वमुततदपेक्षितप्रतिपादनेन । आद्येऽपिस र्वत्रैकाश्रेयःसाधनव्यक्तिःप्रतिपाद्यते किंवासामान्यमितिविकल्प्याद्यंप्रत्याह । भिन्नेति । सर्वेणवेदवाक्येनैकस्याव्यक्तेःप्रतिपादनासंभ वाद्भिन्नार्थप्रतिपादनात्सर्वस्यवेदांतवाक्यस्यैकवाक्यतायोगात् । द्वितीयंप्रत्याह । सामान्येति । श्रेयःसाधनत्वमात्रस्यलोकप्रसिद्धत्वेना

मंत्रार्थवादवत्तेषांप्रामाण्यंकिलसेत्स्यति ॥ नन्वेकस्यविधेस्तावद्वेदांतानांनशेषता ॥ ५३ ॥
प्रकरणपाठाभावात्सोऽरोदीदितिवाक्यवत् ॥ नापिसर्वविधीनांस्याद्भिन्नार्थप्रतिपादनात् ॥ ५४ ॥
सर्वैक्यवाक्यताभावात्सामान्याप्रतिपादनात् ॥ अथोच्येतयथासर्वक्रतोःसंबंधिनीजुहूः ॥ ५५ ॥
यस्यपर्णमयीत्यादिवचनात्पर्णतातथा ॥ तद्वाक्यमप्यनारभ्याधीतंवैसर्वशेषताम् ॥ ५६ ॥
भजतेऽत्रतथाकर्तुर्वेदांताःस्युःसमर्पकाः ॥ नैतत्सारंहिवेदांतैर्निर्विशेषप्रमाणकैः ॥ ५७ ॥

प्रतिपाद्यत्वात् । द्वितीयंशंकते । अथेति । जुह्वाःक्रतुसंबंधित्वात्तद्वारेणयस्यपर्णमयीजुहूर्भवतिनसपापंश्लोकंशृणोतीतिवचनात्पर्णता पितथाक्रतुसंबंधिनीतद्वाक्यंचानारभ्याधीतमपिसर्वक्रतुशेषतांभजते तद्वत्कर्तुःसमस्तक्रतुसंबंधिनःसमर्पकावेदांताः सर्वक्रतुशेषतांभजंतु जुह्वाजुहोतीतिहोमांगत्वेनश्रुतायाजुह्वाःप्रकृतिद्रव्याकांक्षायामाकांक्षापरिपूरणेनपर्णतायाःक्रतुप्रवेशित्वेसिद्धेनसपापमित्यस्यार्थवादत्वंयु क्तं अत्रत्वात्मस्तुतौतत्प्रतिपादनेचफलाभावान्नैवमितिपरिहरति । नेति ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ॥ ॥

आत्मनीति । कर्मणिकर्तृभूतआत्मनि॥५८॥ नहिकर्मणांकर्तानित्यशुद्धबुद्धमुक्तस्वभावोनिर्गुणोनिष्क्रियोऽनश्नन्नन्योऽभिचाकशीतीतिस्त
वःप्रतिपादनंवाकर्मसुप्रवृत्तावुपकरोत्यपित्वपकरोतीत्याह । कर्तृत्वादीति । तस्माद्विनियोजकप्रमाणाभावाद्वेदांतानांनकर्मशेषत्वमित्युपसं
हरति । तस्मादिति ॥ ५९ ॥ वेदांतानांनकर्मशेषत्वंनापिस्वार्थपरत्वंचेत्तर्हिंकिमानर्थक्यमित्याशंक्याध्ययनविधिविरोधादुपास्तिविधिशेष
त्वात्प्रामाण्यंतेषामास्थेयमित्याह । एवमिति ॥३६०॥ कार्यलिंगादनुमितकारणेसर्वज्ञत्वादिकंसमारोप्य वेदांतैस्तदुपास्तिर्विधीयतेऽतस्तत्त

आत्मनिस्तूयमानेवाप्रतिपाद्येऽथकर्मणि ॥ नोपयोगोऽत्रशक्योऽस्तिकल्पयितुंमनागपि ॥५८॥
कर्तृत्वादिनिरासस्यतत्प्रवृत्तेर्विरोधिता ॥ तस्मान्नैवक्रियाशेषावेदांताःस्युरितिस्फुटम् ॥ ५९ ॥
एवंतर्हिभवंत्वस्यसगुणोपासनाविधेः ॥ शेषाःसमस्तवेदांतानात्रदोषोहिकश्चन ॥ ३६० ॥
नित्यशुद्धत्वबुद्धत्वाद्युपास्यगुणभेदतः ॥ आरोपेणैववेदांतवाक्यानांस्यात्समन्वयः ॥ ६१ ॥
नकेवलेपरेशुद्धेभूतेब्रह्मणिमानता ॥ वेदांतानामुपासायांविधौकिंतुप्रमाणता ॥ ६२ ॥ एवंप्रा
प्तेऽथसिद्धांतंसूत्रकारोजगाविति ॥ सूत्रंवेदांतसारार्थंमुनिस्तत्तुसमन्वयात् ॥ ६३ ॥ तुनानिषि
ध्यतेपूर्वपक्षोनेतिमतंतव ॥ स्वपक्षस्यप्रतिज्ञात्रतच्छब्देनैववर्ण्यते ॥ ६४ ॥ ॥ ॥

द्गुणसमर्पणएववेदांतानांसमन्वयइत्याह । नित्येति । भेदतोभेदस्य ॥ ६१ ॥ फलितमाह । नेति ॥ ६२ ॥ पूर्वपक्षभाष्यस्यतात्पर्य
मवधायसिद्धांतभाष्यस्यतात्पर्यमभिधातुमुपक्रमते । एवमिति । सूत्रकारोमुनिर्वेदव्यासस्तत्तुसमन्वयादितिसूत्रंवेदांतसारार्थंसिद्धांतार्थं
जगावुक्तवानित्यन्वयः ॥ ६३ ॥ तत्रतुशब्दंव्याचष्टे । तुनेति । कथंनिषिध्यतइत्यपेक्षायामाह । इतीति । इत्युक्तप्रकारंतवमतंनसंभवती
तितच्छब्देनस्वपक्षःप्रतिज्ञायतइत्याह । स्वेति ॥ ६४ ॥ ॥ ॥ ॥ ॥ ॥

तद्ब्रह्मसर्वज्ञत्वादिगुणकंवेदांतशास्त्रात्प्रमीयतइतिप्रतिज्ञास्वरूपमाह । तदिति । समन्वयादितिहेतुंव्याचष्टे । सम्यगिति ॥ ६५ ॥ तदाह । तात्पर्येणेति । तात्पर्यंनामवेदांतवाक्यप्रतीयमानार्थप्रमितिजननसामर्थ्यंतस्यशब्दधर्मत्वमपौरुषेयेषुवेदेषुपुरुषधर्मतात्पर्यायोगात् ॥ ६६ ॥ तात्पर्यंचयस्मिन्नर्थेवाक्यस्योपक्रमादितद्वाक्यस्यतस्मिन्नर्थेइतिगम्यते उपक्रमादिकमेवतात्पर्यग्राहकमित्याह । तात्पर्येति । नन्रूपक्रमोपसंहारादिनतात्पर्यज्ञापकंकिंतुप्रमेयस्यसाध्यत्वंततश्चसिद्धवस्तुनिष्ठवाक्यानामप्रामाण्यमित्याशंक्याह । नेति ॥ ६७ ॥ पुत्रस्तेजातइत्यादौकार्यत्वाभावेऽपितात्पर्यदर्शनादित्याह । पुत्रइति । कार्यनिष्ठतयैवतात्पर्यप्रमितिस्तत्प्रतिपत्तौचतद्रुपेताच्छब्दात्साध्यार्थप्र

तत्परब्रह्मवेदांतप्रमाणंमीयतेकुतः ॥ सम्यक्त्वान्वितत्वेनवेदांतानांपरात्मनि ॥ ६५ ॥ तात्पर्येणैवसर्वेषांचिदानंदात्मवस्तुनि ॥ सद्विचारबलेनैववेदांतानांसमन्वयः ॥ ६६ ॥ तात्पर्यग्राहकस्यात्रोपक्रमादेश्चसंभवात् ॥ नप्रमेयस्यकार्यत्वंतात्पर्यगमकंभवेत् ॥ ६७ ॥ पुत्रस्तेजातइत्यादौविनाकार्यत्वमस्तितत् ॥ तस्मादुपक्रमादीनांतात्पर्येलिंगताभवेत् ॥ ६८ ॥ उपक्रमोपसंहारावभ्यासोऽपूर्वताफलम् ॥ अर्थवादोपपत्तीचलिंगंतात्पर्यनिर्णये ॥ ६९ ॥ वेदांतेषुसमस्तेषुलिंगषट्कविनिर्णये ॥ अतोब्रह्मणितात्पर्याद्वेदांतास्तेसमन्विताः ॥ ३७० ॥ ॥

मितिरित्यन्योन्याश्रयादुपक्रमादेरेवतथात्वमित्याशयेनाह । तस्मादिति ॥ ६८ ॥ उपक्रमोपसंहारादिलिंगानिदर्शयति । उपक्रमेति । तथाचछांदोग्ये । सदेवसोम्येदमग्रआसीदेकमेवाद्वितीयमित्युपक्रमः । ऐतदात्म्यमिदंसर्वमित्युपसंहारः । तत्त्वमसीतिनवकृत्वोपदेशोऽभ्यासः । आचार्यवान्पुरुषोवेदेत्यपूर्वता । तस्यतावदेवचिरंयावन्नविमोक्ष्यइतिफलं । येनाश्रुतंश्रुतमित्याद्यर्थवादः । मृल्लोहतप्तपरशुग्रहणादिदृष्टांतप्रदर्शनमुपपत्तिरित्येवमन्यत्रापिद्रष्टव्यम् ॥ ६९ ॥ ३७० ॥ ॥ ॥ ॥ ॥

सम्यगन्वयइतिसम्यक्पदेनक्रियाकारकसंसर्गगोचरतयापदानामन्वयंव्यावर्तयतीत्याह । वैलक्षण्येनेति । अन्यस्मात्क्रियाकारकसंसर्ग वाक्यात्तदर्थाच्चवैलक्षण्येनयदर्थप्रतिपादनमव्यतिरिक्तैकरसप्रातिपदिकमात्रप्रतिपादनंतदन्वयस्यसम्यक्त्वं तथाचपदानांपरस्परानवच्छिन्ना नामन्याकांक्षाणामव्यतिरिक्तैकरसप्रातिपदिकार्थमात्रान्वयत्वंसम्यक्त्वं उद्भिदायजेतेत्यादावुद्भिदादिशब्दस्ययजतिसामानाधिकरण्येनोद्भि द्यागमात्रगोचरयोरुद्भिद्यागशब्दयोःपरस्परानवच्छिन्नार्थत्वेऽपि नियोगाकांक्षावर्तते तद्वदत्रापिस्यादितिशंकानिवृत्त्यर्थमनन्याकांक्षाणामि ति । एतेनक्रियावाक्येभ्योवैलक्षण्यंज्ञातव्यं । क्रियाकारकसंसर्गेभ्योवैलक्षण्यबोधनायाव्यतिरिक्तेति । नीलोत्पलवद्भेदाभेदविषयत्व

वैलक्षण्येनचान्यस्माद्यदर्थप्रतिपादनम् ॥ तदन्वयस्यसम्यक्त्वंक्रियाकाव्यादिकान्मतम् ॥
॥ ७१ ॥ क्रियाकारकसंसर्गंगांनयेत्यादिशब्दकाः ॥ संप्रतिपादयंत्यन्येनवेदांतास्तुतत्पराः
॥७२॥ संसर्गंवाविशिष्टंवासाकांक्षार्थंभिदाभिदे ॥ गोचरत्वेनवेदांताःप्रवदंतिनकर्हिचित् ॥ ७३ ॥
किंतुलक्षणयावातेऽभिधावृत्त्याप्युपाधितः ॥ अखंडैकरसंब्रह्मजगत्कारणवादतः ॥ ७४ ॥ अध्या
रोपापवादाभ्यांचिदानंदात्मवस्तुतत् ॥ सम्यङ्निरूपयंतीत्थंतात्पर्येणसमन्वयात् ॥ ७५ ॥

निरासायैकरसेति नन्वत्रापिनियोगाकांक्षाकिंनस्यादित्याशंकापरिहाराय प्रातिपदिकेति । लिंगसंख्यासंबंधनिरासार्थं मात्रेति ॥ ७१ ॥ वैलक्षण्यमेवस्फोरयति । क्रियेति । गांनयेत्यादिलौकिकावैदिकाश्चवेदांतशब्देभ्योऽन्येशब्दाःक्रियाकारकसंसर्गंप्रतिपादयंति । नवेदांता स्तुतत्पराःक्रियाकारकसंसर्गपरानभवंति ॥ ७२ ॥ नतत्पराइत्येतत्स्फुटयति । संसर्गमिति । साकांक्षार्थंवाभेदाभेदौवेत्यनुषंगः ॥ ७३ ॥ ननु कारणत्वधर्मिणोज्ञानादिगुणाभिधानात्कथमुक्तसमन्वयसिद्धिरित्याशंक्यज्ञानादिशब्दानांजगत्कारणतानुवादेनाखंडैकरसवस्तुबोधक त्वान्नैवमित्याह । किंत्विति । तत्रएकसत्यानंतशब्दाः स्वगतसजातीयभेदनिषेधविजातीयभेदाभावाभिधानद्वारेणलक्षणयाज्ञानानंदश

द्वावभिधयासर्वज्ञसर्वशक्तिरित्यादिशब्दाअनिर्वचनीयप्रपंचोपाधितया ॥ ७४ ॥ ७५ ॥ एतदेवस्फोरयति । विकारेति ॥७६॥ ७७॥ नन्वत्र तौकिंवृत्तिविशिष्टबोधकौ नेत्याह । वाक्यांतरेणेति । सत्यंज्ञानमनंतमित्यादिरूपेण ॥ ७८॥ प्रतिपादयतइति । स्फुरंतींव्यक्तिंजाड्यदुःखविरोधिस्फुरदानंदव्यक्तिंज्ञानत्वमानंदनिष्ठंज्ञाननिष्ठत्वात्सत्तावदित्यनुमानेनज्ञानव्यक्तेरानंदव्यक्त्यभेदप्रतिपत्तेरानंदस्यब्रह्मस्वभावत्वात्तयोरेकत्र समन्वयः । तथाचवृत्तौलक्षणयानयोःप्रवृत्तिर्ब्रह्मणित्वभिधयेत्यतोऽभिधयाब्रह्मव्यक्तिंतौगमयतइत्याशयेनाह । तथासतीति ॥ ७९॥ एकसत्या

विकारयुक्तमनसोवृत्तौचप्रतिबिंबिते ॥ चैतन्येज्ञानशब्दोऽयंव्युत्पन्नस्तत्रवर्तते ॥ ७६ ॥ शुद्धसत्वस्यमनसोवृत्तौकस्यांचिदेवहि ॥ व्यक्तौस्फुरंत्यांलोकेऽयंसिद्धआनंदशब्दकः ॥ ७७॥ वाक्यांतरेणतावेतौनित्यत्वाद्यर्थकेनच ॥ विरोधादेववृत्त्यंशंपरित्यज्यानुकूलतः ॥ ७८ ॥ प्रतिपादयतोव्यक्तिंब्रह्मरूपांतथासति ॥ लक्षणावृत्तिरेकांशेमुख्यान्यांशेचवर्तते ॥ ७९ ॥ एकसत्यादिशब्दास्तुभेदासत्त्वादिबाधतः ॥ वर्ततेलक्षणावृत्त्याब्रह्माखंडैकवस्तुनि ॥ ३८० ॥ सर्वज्ञसर्वशक्त्यादिशब्दाब्रह्मणिकेवले ॥ मिथ्याकार्योपाधितयावर्त्ततेनतुवस्तुतः ॥ ८१ ॥ तत्त्वमस्यदिशब्दास्तुभागलक्षणयापरे ॥ तथाचसर्वेवेदांताअखंडैकपरायणाः ॥ ८२ ॥

नंतशब्दाः भेदासत्त्वद्वैतबाधाभिधानद्वारेणब्रह्माखंडैकवस्तुनिलक्षणयावर्ततइत्याह । एकेति । भेदशब्देनस्वगतःसजातीयश्चभेदोविवक्षितः । आदिपदेनविजातीयभेदार्थकंद्वैतंबोध्यम् ॥ ३८० ॥ ननुब्रह्मणिभेदाद्यभावश्चेत्तर्हि कथंसर्वज्ञादिशब्दास्तत्रवर्ततइत्याशंक्याभिधयेतिविवृणोति । सर्वज्ञेति ॥ ८१ ॥ तत्त्वमस्ययमात्मेत्यादिशब्दास्तुजहदजहल्लक्षणयापरेब्रह्मणिवर्ततइत्याह । तत्त्वेति । गंगाशब्दस्यतीरेजहल्लक्षणयावृत्तेरा

त्मादिशब्दानाजहदजहल्लक्षणयेतिवैषम्यात्तीरस्यगंगात्ववदात्मादिपदैर्लक्षितस्यब्रह्मणोनानात्मादिरूपतेतिभावः । फलितमाह । तथाचेति ॥८२॥ ननु भागलक्षणायाउदाहरणाभावात्कथंतत्त्वमस्यादिशब्दाएकंवस्तुबोधयंतीत्याशंक्याह । तत्त्वेति । पृच्छति । कथमिति । उत्तरमाह । शृण्विति ॥ ८३ ॥ सोऽयंदेवदत्तइतिवाक्यंयथासोऽयमितिविशिष्टाभिधायिपदाभ्यांस्वार्थैकदेशतत्कालैतत्कालवैशिष्ट्यपरित्यागेनैकदेशपिंडमात्रलक्षणयादेवदत्तस्वरूपैक्यमेवप्रतिपादयतितथातत्त्वमसिवाक्यंविशिष्टाभिधायितत्त्वंपदाभ्यांस्वार्थैकदेशपरोक्षत्वापरोक्षत्वादिवै

तत्त्वमस्यादिवाक्यानिसोऽयमित्यादिवाक्यवत् ॥ अखंडैकरसंवस्तुबोधयंतिकथंशृणु ॥ ८३ ॥
त्वंपदार्थैविरोध्यंशंकर्तृत्वादिविहायच ॥ तत्साक्षिमात्रमादायचैतन्यंनिर्विरुद्धकम् ॥ ८४ ॥ तत्पदार्थेपरोक्षत्वाद्यंशसंत्यागमात्रतः ॥ चिन्मात्रेणावशिष्टेनसिद्धमैक्यंश्रुतेर्मतम् ॥ ८५ ॥ तत्त्वमस्यादिवाक्यंतद्वयखंडार्थपरंभवेत् ॥ कार्यहेतुपृथग्द्रव्यनिष्ठत्वेसतिसर्वथा ॥ ८६ ॥ सामानाधिकरण्याद्धिसोऽयमित्यादिवाक्यवत् ॥ अखंडैकपरास्त्वित्थंवेदांतास्तेसमन्वयात् ॥ ८७॥
सत्यंज्ञानमनंतंचेत्यादिवाक्यमवांतरम् ॥ अखंडार्थपरंबोध्यंलक्षणप्रतिपादकम् ॥ ८८ ॥ यः प्रकृष्टःप्रकाशोऽसौचंद्रइत्यादिवाक्यवत् ॥ तत्रप्रकाशशब्दोयःप्रकाशत्वंमुखेनसः ॥ ८९ ॥

शिष्ट्यपरित्यागेनैकदेशचैतन्यमात्रलक्षणयाब्रह्मस्वरूपैक्यमेवप्रतिपादयतीत्याह । त्वंपदार्थइतिद्वाभ्यां ॥ ८४॥ ८५ ॥ तत्त्वमस्यादिवाक्यमखंडार्थंकार्यकारणव्यतिरिक्तद्रव्यमात्रवृत्तित्वेसति सामानाधिकरण्यात्सोऽयंदेवदत्तइत्यादिवाक्यवदिति । फलितमाह । तत्त्वमिति ॥ ८६ ॥ ८७ ॥ महावाक्यस्याखंडार्थत्वउदाहरणमभिधायावांतरवाक्यस्यतदाह । सत्यमित्यादिना ॥ ८८ ॥ यइति । प्रकाशशब्दःसामान्याभिधानमुखेनलक्षणयाव्यक्तिविशेषेवर्तते प्रकृष्टशब्दश्चप्रकर्षगुणाभिधानमुखेनलक्षणयाप्रकाशविशेषेवर्ततइत्याह । तत्रेति ॥ ८९ ॥

वर्ततइति ॥ ३९० ॥ प्रकृष्टंतमइतिप्रयोगदर्शनात्प्रकृष्टशब्दान्नचंद्रप्रातिपदिकार्थसिद्धिस्तथाखद्योतादावपिप्रकाशशब्दप्रयोगदर्शनात्ततोऽपि नतत्सिद्धिरित्यतोवाच्यार्थपरित्यागेनाप्रकाशाप्रकर्षविरोधिप्रातिपदिकार्थः। पदद्वयेनप्रतिपाद्यतइत्यखंडार्थसिद्धिरित्याह। गुणेति ॥ ९१ ॥ ॥ ९२ ॥ विमतमखंडार्थंलक्षणवाक्यत्वात्। प्रकृष्टःप्रकाशश्चंद्रइतिवाक्यवदितिसिद्धमित्याह । एवमिति। ननु सत्यादिपदैरेकव्यक्तेर्लक्ष्यमा णत्वेपौनरुक्त्यमित्याशंक्याह । सत्येति ॥ ९३ ॥ व्यावर्त्येति। यत्तुसिद्धेवस्तुनिवेदांताःप्रमाणमित्युक्तंतत्रकिंप्रमाणांतरयोग्यस्यतदनुत्पत्ताव भावनिश्चयादस्याप्रामाण्यंशंक्यते किंवाप्रमाणांतरसंभिन्नार्थविषयत्वादुत प्रमाणांतरयोग्यार्थविषयत्वात् । नाद्यः । अनधिगतगंतृत्वस्यै

वर्ततेलक्षणावृत्त्याव्यक्तिभेदेतथैवच ॥ प्रकृष्टशब्दोऽप्युत्कर्षगुणोक्त्यातत्रवर्तते ॥ ३९० ॥ गुण
सामान्ययोश्चंद्रपदवाच्यत्वहेतुना ॥ तच्चोभयंव्युदस्यैवतत्समवायिवस्तुनि ॥ ९१ ॥ चंद्रश
ब्दाभिधेयेनलक्ष्येसम्यक्त्वमर्पिते ॥ प्रकृष्टप्रमुखानांचशब्दानामित्थमेकता ॥ ९२ ॥ एवं
सत्यादिवाक्येस्मिन्नखंडार्थत्वऽमिष्यताम् ॥ सत्यज्ञानादिशब्दानांतात्पर्यैक्येऽपिशब्दतः
॥९३॥ व्यावर्त्यासत्यजाड्यादेरनेकत्वाद्विभिन्नता ॥ तस्माद्भूतार्थनिष्ठंसन्निरपेक्षंश्रुतेर्वचः ॥९४॥

वप्रामाण्यादन्यथेतरेंद्रियाग्राह्यरूपग्राहकचक्षुषोऽप्यसद्विषयत्वेनाप्रामाण्यापातात्सिद्धत्वमात्रकृतयोग्यतायाअत्रापिसत्त्वात् । नद्वितीयःप्र माणांतरसंभिन्नार्थत्वाभावात् । तृतीयेऽपि किंप्रमाणांतरयोग्यविषयस्यप्रमाणमात्रस्यानुवादकत्वमुतशब्दस्य । नाद्यः । स्पर्शनज्ञानयोग्यद्र व्यगोचरचक्षुषोनुवादकत्वेनाप्रामाण्यादर्शनात् । द्वितीयेऽपिकिंशब्दमात्रस्यायंस्वभावःकिंवासिद्धवस्तुगोचरस्यतस्य । नाद्यः । विधि वाक्यस्यापितथात्वप्रसंगात् लौकिककार्यस्यमानांतरयोग्यत्वात्। लौकिककार्यस्यतथात्वेऽपिवैदिकस्यतस्यातथात्वमितिचेत्तुल्यमत्रापिब्रह्म णःसिद्धत्वेलौकिकत्वात्। नद्वितीयः । शब्दावगतेप्रवर्तमानस्यप्रत्यक्षादेरनुवादकत्वप्रसंगादित्येतत्सर्वमभिप्रेत्याह । तस्मादिति ॥ ९४ ॥

प्रमाणमिति। ननुसूत्रकारप्रामाण्यादेवाम्नायस्यक्रियार्थत्वमित्याह। नन्विति ॥ ९५॥ प्रामाण्यमिति। अन्योन्याश्रयरूपंहेतुमाह। विधीति ॥ ९६ ॥ तत्सिद्धाविति । ननुप्रत्यक्षादिषुवस्तुमात्रावबोधकत्वप्रवृत्तिनिवृत्तीवस्तुस्वभावानुरोधिन्यौ नतुप्रत्यक्षादिफलंशब्दस्यतुप्रवृत्तिनिवृत्तिपर्यंतएवव्यापारःश्रोतुःपुरुषार्थमुद्दिश्यशब्दप्रयोगादतःप्रवृत्तिनिवृत्तिशून्ये न शब्दस्यप्रामाण्यमित्याशंक्याह । प्रवृत्त्यादीति ॥ ९७॥

प्रमाणमितिसंसिद्धंब्रह्माद्वैतात्मवस्तुनि ॥ नन्वाम्नायस्यसर्वस्यक्रियार्थत्वाद्विधौभवेत् ॥ ९५ ॥
प्रामाण्यंवेदवाक्यानांनेतरत्रेतिचेन्नहि ॥ विधिवाक्येषुमानत्वसिद्धेस्तेषांक्रियार्थता ॥ ९६ ॥
तत्सिद्धौचान्यसिद्धिःस्याद्दोषोऽन्योन्याश्रयस्तव ॥ प्रवृत्त्यादिविहीनस्यब्रह्मणोफलताऽनहि
॥ ९७ ॥ नरःप्रार्थयतेसाक्षादिष्टप्राप्त्यादिकंफलम् ॥ नप्रवृत्तिनिवृत्तीचतयोःकष्टात्मकत्वतः ॥
॥ ९८ ॥ अप्राप्तवस्तुनःप्राप्तौप्राप्तरोगादिनाशने ॥ यत्रायासंविनासिद्धिर्नास्तितत्रास्तुवाश्रमः ॥
॥ ९९ ॥ यत्रतुप्राप्तमेवाद्धाकंठचामीकरादिकम् ॥ अजानानोनरःप्राप्तुमिच्छत्यन्यत्रतत्तथा ॥
॥ ४०० ॥ त्यक्तुंचरज्जुसर्पादिनरःपरिजिहीर्षति ॥ तत्रतुज्ञानमात्रेणाभीष्टसिद्धौकुतोजनः ॥ १ ॥
सहेतायासमायासोऽपेक्ष्यते[illegible]वतत्रच ॥ सतिज्ञानेस्वयंपूर्वोऽप्यायासःपरिहीयते ॥ २ ॥

पुरुषोहीष्टानिष्टप्राप्तिपरिहारमात्रंप्रार्थयतेनतुत[illegible]ःप्रवृत्तिनिवृत्तिसाध्यतामपिगौरवादित्याह । नरइति ॥ ९८ ॥ द्विविधंहीष्टंप्राप्तमप्राप्तंचाद्यंग्रैवेयकादिद्वितीयंग्रामादि । तथापरिहार्य[illegible]पिद्विविधं हीनंहेयंचआद्यंरज्जूरगादि द्वितीयंरोगादि तत्राप्राप्तप्राप्तौहेयपरिहारेचास्तुप्रवृत्तिनिवृत्त्यपेक्षा नतुप्राप्तप्राप्तौहीनपरिहारइत्याश[illegible]येनाह । अप्राप्तेत्यादिना ॥ ९९ ॥ ४०० ॥ १ ॥ २ ॥ ॥ ॥ ॥

नन्वस्तुदृष्टांतेतथाब्रह्मात्मत्वप्रतिपादनेनतुनक्रियासाध्यःपुरुषार्थोनापिज्ञानलभ्यइत्याशंक्यानर्थकलुषितमिवात्मानंमन्यमानस्यभ्रांतस्यस र्वानर्थशून्यात्मतत्त्वप्रतिपादनादेवपुरुषार्थसिद्धेर्मैवमित्याह । तथाचेति ॥ ३ ॥ ४ ॥ ५ ॥ पुरुषार्थपर्यंतप्रामाण्यमित्यंगीकृत्योक्तमिदानीम स्तुशब्दस्यप्रत्यक्षवत्प्रमेयावबोधनकृतंप्रामाण्यं । ननुप्रवृत्तिनिवृत्त्युद्देशेनवाक्यप्रयोगात्कथमेवंविधंप्रामाण्यमितिचेत्किंतयोःसाक्षात्फलत्वंकिं वेप्सितफलानुगुणतया । नाद्यः । सुखदुःखप्राप्तिपरिहारयोःपुरुषार्थतयाप्रार्थनीयत्वेनतयोस्तथात्वेनाकांक्षाविषयत्वाभावात् । द्वितीयेप्र योजनपर्यंतंप्रामाण्यमितिकिंगुरुमतानुसारिणाभिधीयते किंवाभट्टमतानुयायिनेतिमनसिनिधायाद्यंप्रत्याह । पुरुषार्थस्येति । पुरुषार्थ

तथाचनित्यप्राप्तस्यसंप्राप्तौब्रह्मणस्तथा ॥ नित्यमेवनिवृत्तस्यसंसारस्यनिवर्तने ॥ ३ ॥ हेतुभू तंस्वविज्ञानंवेदांताजनयंतिये ॥ अपुमर्थैकनिष्ठत्वशंकातेषांकुतोभवेत् ॥ ४ ॥ तस्माद्वेदांतवा क्यानांप्रामाण्यंपरमात्मनि ॥ कर्मठेनापिकेनात्रवार्यतेमुनिनापिच ॥ ५ ॥ पुरुषार्थस्यमानत्व हेतुत्वेस्वीकृतेसति ॥ नित्यनैमित्तिकार्थानांवाक्यानांतत्कथंभवेत् ॥ ६ ॥ प्राभाकरेप्रमाणत्वं नहितत्रफलंकिल ॥ अनुष्ठानेप्रयासःस्यात्प्रत्यवायोऽननुष्ठितौ ॥ ७ ॥

स्यप्रामाण्यप्रयोजकत्वेप्रयोजनपर्यंतंप्रामाण्यमितिपक्षेप्राभाकरेमतेपुरुषार्थशून्यनित्यनैमित्तिककर्मार्थवाक्यानांतत्तथाभूतंप्रामाण्यंनस्यात् । हियस्मात्तत्रनित्यनैमित्तिकेकर्मणिफलंनास्तिकिलेतिप्रसिद्धम् । नन्वकरणजन्यप्रत्यवायपरिहारस्यफलत्वान्नास्तिनित्यादिकंनिष्फलमिति भट्टमतानुसारिणेदमुच्यतइतिचेन्न प्रत्यवायस्यापितद्विधिनिबंधनतयाविहितत्वसिद्धौतदकरणनिमित्तप्रत्यवायनिवृत्तिलक्षणंफलंसिद्ध्यति । फलसिद्धौचतदुद्देशेनविहितत्वसिद्धिरित्यन्योन्याश्रयादनुष्ठानेबहुतरायासाद्यनर्थप्राप्तेरननुष्ठानेलोकबहिःकरणाद्यनर्थापाताच्चाप्रामाण्यंनि त्यादिवाक्यानामित्याशयेनाह । अनुष्ठानइति ॥ ६ ॥ ७ ॥ ॥ ॥ ॥ ॥ ॥

सर्वथेति । फलितमाह । अतइति ॥ ८ ॥ अज्ञाताबाधितार्थबोधकत्वंतुप्रकृतेऽपितुल्यमित्याह । अज्ञातेति ॥ ९ ॥ तथाचवेदांतेष्वविध्येकवाक्यताकल्पनंवादिनोवृथापरिश्रमइत्याह । तथाचेति ॥४१०॥ यदिति । वर्णकार्थमुपसंहरति । तस्मादिति ॥११॥ ननु नाद्वितीयब्रह्मात्मत्वपरा वेदांतास्तत्रतात्पर्याभावादपितुजीवविलक्षणेप्रमाणांतराविरुद्धेसकलशास्त्रप्रतिपन्नेब्रह्मणिसंपदादिविषयास्तादात्म्यार्थावेदांताइतिपूर्वपक्षां

सर्वथानर्थहेतूनांतेषांनस्यात्प्रमाणता ॥ अतोऽध्यक्षादिवत्तस्यनिर्दोषस्यागमस्यच ॥ ८ ॥
अज्ञाताबाधितार्थस्यबोधकत्वनिबंधनम् ॥ प्रामाण्यंतच्चतुल्यंस्यात्कार्यब्रह्मात्मवाक्ययोः ॥९॥
तथाचवादिनापूर्वमतीवापाततोहठात् ॥ वेदांतानांप्रमाणत्वाभावायविधिकल्पनम् ॥ ४१० ॥
यत्कृतंतद्विसकलमकांडेतांडवंकृतम् ॥ तस्माद्वेदांतमानत्वंसिद्धंब्रह्मणिकेवले ॥ ११ ॥ नचा
त्रसंपदध्यासःसंस्कारोवानिरूप्यते ॥ तत्रसंपन्महद्वस्तुदर्शनंस्वल्पवस्तुनि ॥ १२ ॥ आलं
बनेयथास्वांतेवृत्त्यनंतत्वसाम्यतः ॥ अनंतंवैमनोऽनंताविश्वेदेवाइतिश्रुतेः ॥ १३ ॥ तस्मिन्सं
पादनंकृत्वानंतत्वस्याल्पमानसे ॥ जनस्योपासकस्याद्धानंतलोकजयःफलम् ॥ १४ ॥

तरनिराकरणपरवर्णकांतरभाष्यस्यतात्पर्यंवक्तुमुपक्रमते । नचेति । एतद्विवृणोति । तत्रेति । तत्रसंपन्नामाल्पमपिवस्त्वालंबनीकृत्यकिंचित्सादृश्यदर्शनमात्रादनल्पवस्तुसंपादनं यथामनसोवृत्त्यनंतत्वसादृश्येनानंतविश्वेदेवसंपादनंकृत्वानंतलोकजयः एवंजीवस्यचिद्रूपत्वेसाम्येनब्रह्मरूपसंपादनंकृत्वाब्रह्मफलावाप्तिरिति ॥ १२ ॥ १३ ॥ १४ ॥ ॥ ॥ ॥ ॥

अध्यासस्तुअब्रह्मणिमनआदित्यादौब्रह्मदृष्ट्योपासनं जीवस्यापिब्रह्मदृष्ट्योपासनमित्याह । अन्यस्मिन्निति ॥ १५ ॥ आरोप्यप्रधानासंप दधिष्ठानप्रधानोऽध्यासइतितयोर्भेदइत्याह । अविद्यमानेति ॥१६॥ आलंबनस्येति । क्रियायोगोवायोरग्न्यादीनांसंहरणात्संवर्गगुणत्वेनो पात्तमेवंजीवस्यस्वगतेनबृहत्यर्थयोगेनब्रह्मेत्युपासनमित्याह । क्रियायोगइति ॥१७॥१८॥कार्यांतरगुणभूतधान्याज्यादेःप्रोक्षणावेक्षणादि नासंस्कारइवजीवेब्रह्मदृष्टिसंस्कारइत्याह । कर्मांगस्येति । वेदांतानांसंपदादिपरत्वेंकिंप्रमाणांतरविरोधाद्धतस्वार्थेतात्पर्यविरहादितिविक

अन्यस्मिन्नन्यदृष्टिःस्यादध्यासोनामतायथा ॥ अब्रह्मरूपआदित्येब्रह्मदृष्टिःश्रुतौश्रुता॥१५॥
अविद्यमानवत्कृत्वालंबनंयत्रचिंतनम् ॥ संपाद्यस्यैवमुख्यत्वात्संपन्नामभवेत्तदा ॥ १६ ॥
आलंबनस्यमुख्यत्वमध्यासःसोऽत्रकथ्यते ॥ क्रियायोगोयथावायुर्वावसंवर्गइत्ययम् ॥ १७ ॥
अग्न्यादिसंवृणोतीतिक्रियायोगवशान्मतम् ॥ वायोरुपासनंतत्रसंवर्गात्मगुणत्वतः ॥ १८ ॥
कर्मांगस्यचधान्यादेःसंस्कारःप्रोक्षणादिना ॥ प्रसिद्धःसंपदाद्याःस्युर्वेदांतानांनगोचराः ॥१९॥
भवत्येषामतोजीवब्रह्मैक्यंविषयोनयात् ॥ संदेहोनैववेदांतप्रामाण्येब्रह्मवस्तुनि ॥ ४२० ॥
तत्परेणैवशास्त्रेणब्रह्मात्मैक्येऽवबोधिते ॥ अविद्यासहकार्येणस्वप्नवत्प्रविलीयते ॥ २१ ॥



ल्प्यजीवेशयोस्तदगोचरत्वान्नाद्यइत्याशयेनाह । संपदाद्याइति ॥ १९ ॥ अतःप्रमाणांतरविरोधाभावाद्वेदांतानांजीवब्रह्मैक्यंविषयोभ वतीत्याह । भवतीति । नयात्सद्युक्तेःसद्भावात्संदेहोनकर्तव्यः ॥ ४२० ॥ षड्विधतात्पर्यलिंगैस्तेषांस्वार्थेतात्पर्यनिर्धारणान्नद्वितीयइत्या शयेनाह । तत्परेणेति ॥ २१ ॥ ॥ ॥ ॥ ॥ ॥ ॥

फलितमाह । ततइति ॥ २२ ॥ यतएवमतो यन्मनसानमनुते येनाहुर्मनोमतं तदेवब्रह्मत्वंविद्धि नेदंयदिदमुपासतेइत्याद्याश्रुतिर्ब्रह्मण उपास्यत्वनिषेधपरा संगच्छतइत्याह । अतएवेति ॥२३॥ तदिति । ननूपास्यत्ववद्वेद्यत्वमपिनिषेधति । तथाचतदंगीकारेशांतिकर्मणिवेतालोदयइतिवच्छास्त्रयोनित्वभंगइत्याशंकते । नन्विति ॥२४ ॥ ब्रह्मणोऽवेद्यत्वेऽयंनास्तिदोषइत्याह । सत्यमित्यादिना । प्रत्यगात्मतया

ततोब्रह्माद्वयेशिष्टेसंपदाद्याउपास्तयः ॥ संभवंतिकथंकुत्रतासामवसरोभवेत् ॥ २२ ॥ अतएवश्रुतिर्ब्रह्मण्युपास्यत्वंनिषेधति ॥ मनसामनुतेयन्नोयेनैवाहुर्मनोमतम् ॥ २३ ॥ तदेवब्रह्मविद्धित्वंनेदंयदिदमुपासते ॥ ननूपास्यत्ववत्तस्यवेद्यत्वंचनिषेधति ॥ २४ ॥ सत्यंब्रह्मण्यवेद्यत्वंसंमतंतद्व्यवस्थया ॥ अवेद्यत्वेऽप्यखंडैकब्रह्मात्माकाररूपया ॥ २५ ॥ स्वांतःकरणवृत्त्याचचिदभिव्यक्तियुक्तया ॥ सर्वभ्रांतिप्रमार्जिन्याविद्ययाशास्त्रजन्यया ॥ २६ ॥ सविलासमहामोहोच्छेदाद्ब्रह्मणिकेवले ॥ अवेद्येशास्त्रवेद्यत्वंकेवलंतूपचर्यते ॥ २७ ॥ अतःसर्वत्रवेदांतेवृत्तिव्याप्यत्वलक्षणम् ॥ विषयत्वमभिप्रेत्यब्रह्मणोबुद्धिदृश्यताम् ॥ २८ ॥ ॥

ऽविषयत्वेनप्रतिपादकेनशास्त्रेणजन्ययाप्रमयाऽविद्याकल्पितवेद्यवेदितृवेदनादिभेदस्योच्छेदनाद्वेद्यत्वमुपचर्यतइत्याह । अवेद्यत्वेऽपीति । इदंतयाविषयीकृतत्वाभावेऽपि ॥ २५ ॥ २६ ॥ २७ ॥ अतएवमनसैवानुद्रष्टव्यं दृश्यतेत्वग्र्ययाबुद्ध्येत्यादिश्रुतयो वृत्तिव्याप्यत्वलक्षणं वेद्यत्वमभिप्रेत्य बुद्धिदृश्यतांजगुरित्याह । अतइति ॥ २८ ॥ ॥ ॥ ॥ ॥ ॥

मनसैवेति। एवमावरणभंगफलकवृत्तिव्याप्यत्वेनवेद्यत्वंव्यवस्थाप्यवृत्तिप्रतिफलितचैतन्याव्याप्यत्वेनावेद्यत्वमाह। यथेति। नहिप्रकाशगुणेपुनःप्रकाशगुणोदयइतिभावः॥२९॥४३०॥३१॥ ननु किंतत्फलंयद्व्याप्यताब्रह्मणिनिषिध्यते चैतन्यमितिचेन्न तस्यनित्यत्वाज्जन्यस्यच फलत्वप्रसिद्धेरित्याशंक्यपरिहरति। नचेति। चैतन्यस्यनित्यत्वेऽपिवृत्तेर्जन्यत्वेनतदभिव्यक्तचैतन्येऽपितदभिव्यक्तित्वोपाधिकंतज्जन्यत्वोपचारमादायतत्रफलत्वोपचारोमतइत्याह। यतइति॥३२॥ फलत्वस्येति। प्रमाणेनविषयीकृतघटादिगतवृत्त्यभिव्यक्तचैतन्यस्यैवफलत्वव्य

मनसैवानुद्रष्टव्यमित्याद्याःश्रुतयोजगुः॥ यथाजडेज्ञाततारव्योऽतिशयोऽस्तिप्रमाणजः॥२९॥
नतथास्वप्रकाशेऽतःफलव्याप्यत्वमानजम्॥ अफलव्याप्यतारूपाविषयत्वंपरात्मनः॥४३०॥
अभिप्रेत्यैवसर्वत्रप्रवृत्ताःश्रुतयोऽखिलाः॥ यतोवाचोनिवर्तंतइत्याद्याभ्रांतिबाधकाः॥ ३१॥
नचाशंक्यःफलाभावोयतोब्रह्मचितोभवेत्॥ अंतःकरणवृत्त्याभिव्यक्तत्वोपाधिनामतः॥३२॥
फलत्वस्योपचारोहितस्यैवास्तिघटादिषु॥ फलत्वव्यवहारोऽपितदुक्तंवार्तिकेस्फुटम्॥ ३३॥
परागर्थप्रमेयेषुयाफलत्वेनसंमता॥ संवित्सैवेहमेयोऽर्थोवेदांतोक्तिप्रमाणतः॥ ३४॥ अतोऽत्र
ब्रह्मचैतन्यंभूत्वोपांत्येक्षणेफलम्॥ स्वावच्छेदकवृत्तिंतन्नाशयत्यंतिमेक्षणे॥ ३५॥ ॥

वहारइत्याह। तस्यैवेति। प्रमाणफलभूतंचैतन्यंवेदांतप्रमेयचैतन्यरूपमेवनतुततोऽतिरिच्यतइतिवार्तिककारोक्त्यास्फुटयति। तदुक्तमिति॥३३॥ परागिति। परागर्थप्रमेयेषुबाह्यार्थेषुघटपटादिरूपेषुप्रमाविषयेषु॥३४॥ यस्माद्वेदांतजनितापरोक्षज्ञानस्याकारसमर्थकत्वेनव्यावर्तकत्वंशास्त्रप्रमेयत्वं ज्ञानजन्यप्रकाशातिशयशून्यत्वमवेद्यत्वमतउक्तफलचैतन्यंस्वावच्छेदकवृत्तिमपिनिवर्तयतीत्याह। अतइति। ननु कथं स्वस्यस्वंनिवर्तकमित्याशंक्यावच्छेदनिवृत्त्योःपूर्वोत्तरक्षणतयाविरोधाभावादित्याह। उपांत्यइति॥ ३५॥ ॥ ॥

ननुतर्हिफलस्यनिवृत्तिर्नभविष्यतिनिवर्तकत्वेननिवर्त्यानंतर्भूतत्वादित्याशंक्याह। ततइति ॥३६॥ नन्वविद्यानिवृत्तेरपिज्ञानसाध्यत्वान्मोक्षस्यानित्यतेत्याशंक्य ज्ञानस्यनित्यमुक्तस्वस्वरूपसमर्पकत्वान्मैवमित्याह । सर्वदेति ॥ ३७ ॥ स्वेति । तस्माज्ज्ञानमेकंमुक्त्वाक्रियायागंधमात्रस्यापिप्रवेशइहनोपपद्यतइतिफलितमाह। क्रियेति । नचज्ञानमपिमानसीक्रिया वस्तुस्वरूपानपेक्षत्वचित्तव्यापाराधीनत्वरूपक्रियालक्षणानाक्रांतत्वादितिभावः ॥ ३८ ॥ ३९ ॥ नन्वहंप्रत्ययावसेयःकर्त्रादिरूपआत्मावेदांतप्रतिपाद्यःकिंवातद्व्यतिरिक्तः नाद्यःतस्यक्रियांगत्वेनविधिवाक्यैर्वेदांतानामेकवाक्यतापत्तेर्द्वितीयेऽपिसचेतनोऽचेतनोवा नाद्यः तस्याहंप्रत्ययगम्यत्वेनतद्व्यतिरेकानुपपत्त्याकर्मांग

ततोऽवच्छेदकाभावात्त्यक्त्वेमांफलरूपताम्॥ निर्विकल्पात्मचैतन्यमात्रंमोक्षेऽवशिष्यते॥३६॥ सर्वदामुक्तएवात्मास्वाविद्याप्रतिबिंबितम् ॥ जीवभावंसमापद्यसंसारंप्रतिपद्यते ॥ ३७ ॥ स्वविद्ययासएवात्रनित्यमुक्तोविमुच्यते ॥ क्रियाकारकसंसर्गशून्यब्रह्मात्मवस्तुनि ॥ ३८ ॥ अनन्यवेद्येवेदांताःपर्यवस्यंतिसर्वथा ॥ विध्यसंस्पृष्टरूपत्वात्तेषांयुत्तयागमोक्तया ॥ ३९ ॥ येतुसिद्धार्थकोवेदोनास्तीत्युच्चैर्वदंतिते ॥ तंत्वौपनिषदश्रुत्याबाध्याःस्मृत्याचसंविदा ॥ ४४० ॥

तापत्तेः नद्वितीयः सिद्धांतविरोधात्तस्मात्कर्मण्येवाखिलवेदप्रामाण्यं तदुक्तं अग्निहोत्रफलावेदाःशीलवृत्तफलंश्रुतमित्याशंक्यपरिहरति। येत्विति। नाहंप्रत्ययविषयात्क्रियाकारकसंबंध्यात्मनोव्यतिरिक्तःसमएकोऽहंप्रत्ययसाक्षीकेनचिदपिप्रमाणेनसिद्धोयेनक्रियाशेषतांनीयेत। ननु सचेतनःप्रमाणांतरागम्यश्चेच्छास्त्रगम्योऽपिकथंभविष्यतीतिचेन्न तत्प्रतिपादनोपनिपतपदसमन्वयस्यदर्शितत्वात्। ननुसर्वोवेदःस्मृतिकारैर्धर्मेविनियुक्तत्वात्तत्रैवप्रमाणमितिचेन्न। तंत्वौपनिषदंपुरुषंपृच्छामि सर्वेवेदायत्पदमामनंति वेदैश्चसर्वैरहमेववेद्यइतिश्रुतिस्मृतिभ्यां

विद्वदनुभवाच्चवेदांतानांब्रह्मपरत्वावगमात्तथाचयेतथावादिनस्तेश्रुत्यादिनाबाध्याइत्याशयेनाह। तइति। आम्नायस्यक्रियार्थत्वादान र्थक्यमतदर्थानाम्। दृष्टोहितस्यार्थः। कर्मावबोधनमितिसूत्रभाष्यवचनंतुकर्मकांडविषयवेदभागपरं नतुसमस्तवेदपरमन्यथाभूतोपदे शानर्थक्यप्रसंगात् ॥ ४० ॥ ननु सूत्रकारभाष्यकाराभिप्रायज्ञानस्यवार्तिकाधीनत्वंवार्तिककारैश्चाभिहितान्वयएवस्वीकृतइत्याशंक्या ह। भाट्टेति। प्रपन्नानांपदार्थानांसंसृष्टपरस्परार्थावबोधनमभिहितान्वयोनामेत्येवंरूपाभिहितान्वयवादिनांतेषांसैषाअर्थैःसंसर्गधीर्याप दसंगतिंप्राहुस्तत्रश्रोतुःप्रवृत्त्याविशिष्टसंसर्गज्ञानंशब्दकार्यत्वेनानुमाय शब्दनिचयस्वार्थनिकायेशक्तिंप्रतिपद्यते तत्राश्वमानयाश्वंबधा नेत्यादिप्रयोगभेदेष्वावापोद्वापाभ्यामानयनतत्संसर्गव्यभिचारेऽप्यश्वमात्रान्वयादश्वशब्दस्याश्वमात्रेसंबंधंप्रतिपद्यतइति तथाचपदेभ्यःप

भाट्टपादाजगुःस्पष्टंशुद्धार्थैपदसंगतिम् ॥ अर्थैःसंसर्गधीरेषाभिहितान्वयवादिनाम् ॥ ४१ ॥

दार्थप्रतिपत्तिःपदार्थेभ्यश्चसंसर्गप्रतिपत्तिरित्यभिहितान्वयवादिमतं तत्राक्रियाभिधायिपदानामालंबनाभावउच्यते किंवाप्रयोजनाभा वः। नाद्यः। पश्यतुभवान्देवदत्तगामभ्यानयशुक्लांदंडेनेतिप्रवर्तकवाक्यएवाप्रवर्तकानामपिदेवदत्तादिभूतार्थाभिधायिनां भूत वस्तुविषयसामर्थ्यावगमात् नद्वितीयः। क्रियायाःप्रयोजनत्वाभावात्तदर्थानामानर्थक्यप्रसंगात् क्रियाद्वारमेवप्रयोजनमितिचेत्तर्हि तदर्थक्रियानुपयोग्यर्थवादिनासोऽरोदीदित्यादिपदानामानर्थक्यापत्तिः ननु तेषामपिपरंपरयाक्रियाद्वारासप्रयोजनतातथाचसर्वप्रयो जनंक्रियाद्वारमेवेतिचेन्न ब्रह्मात्मावगतिसमन्वितानांपरमपुरुषार्थफलानांनिष्प्रयोजनतायाद्दुर्निरूप्यत्वात्तथाचवार्तिककारीयप्रस्थानता त्पर्यालोचनायांभूतेऽप्यर्थैपदानांसामर्थ्यंसिद्धमितिभावः ॥ ४१ ॥ ॥ ॥ ॥ ॥

अत्रप्राभाकराःप्रत्यवतिष्ठंते कार्यसंसृष्टस्वार्थप्रतिपादनेपदसामर्थ्यंनपदार्थमात्रइत्याह । प्राभाकराइति । अयंभावः । गामानयशुक्लांदंडेने तिशब्दश्रवणानंतरंमध्यमवृद्धस्यगवानयनेप्रवृत्तिमुपलक्ष्यैतच्छब्दादनेनश्रोत्रागवानयनकर्तव्यताबुद्धेतिबालोभूतार्थसंसृष्टेकार्येशब्दकदंब स्यशक्तिंप्रतिपद्यते। पुनश्चगांबधानाश्वमानयेत्यादिप्रयोगांतरेषुगोशब्दस्यान्वयेकार्यसंसृष्टगवाकृतेऽन्वयात्तदुद्धारेचसंसृष्टगवाकृतेरेवोद्धारा त्कार्यसंसृष्टायांगविपदसामर्थ्यंकल्प्यते आनयनतत्संसर्गव्यभिचारेऽपि कार्यसंसर्गाव्यभिचारात्तथाचप्रथमावगतसंसर्गबुद्धिहेतुत्वानपवा दाच्छब्दानांमध्येपदार्थतच्छक्तिव्यवधानकल्पनापेक्षयापदानामेवसंसर्गप्रतिपादनसामर्थ्यकल्पनालाघवाच्च कार्यसंसृष्टस्वार्थेशब्दशक्तिरि तिनैतत्सारं नहिप्रयोगभेदेषुकार्यसंसर्गएवगवाकृतेर्नियमेनप्रतीयते किंतुशुक्लांगामानयेत्युक्तेगुणव्यक्तिक्रियाकारकसंसर्गाःप्रतीयंते क्रि याद्वारश्चकार्यसंबंधः तत्राव्यवहितसंबंधोपादानसिद्धयेऽन्यान्वितस्वार्थेसामर्थ्यंगृह्यते क्रमेणचगुणक्रियादिसंसर्गोयथायथमवभासमानो

प्राभाकरास्तुकार्येणसंसृष्टेशक्तिवादिनः ॥ अस्माकमन्वितेशक्तिर्लाघवाद्युपपत्तिभिः ॥ ४२ ॥
पदजातंश्रुतंसर्वंस्मारितानन्वितार्थकम् ॥ न्यायसंपादितव्यक्तिपश्चाद्वाक्यार्थबोधकम् ॥ ४३ ॥

यावदंत्योच्चारणसमाप्तिःपश्चात्संभूयसर्वैरेवपदैरेकप्रयोजनावच्छिन्नोमहावाक्यार्थःप्रमीयते नचास्तिकार्येणाखिलपदार्थानामव्यवहितसंबं धोयेनतत्संसृष्टेसामर्थ्यंस्यात् । गुणानांहिद्रव्यैरन्वयस्तेषांविभक्त्यर्थसंसृष्टानांक्रिययान्वयस्तस्याश्चकार्येणेतिव्यवधानात् । कार्यस्यकार्यांत रान्वयाभावाल्लाघवाच्चान्यान्वितस्वार्थेसामर्थ्यकल्पनमेवसमंजसमित्याशयेनाह । अस्माकमिति ॥ ४२ ॥ ननुमास्तुप्रभाकरमतंतथाप्यन्या न्वितस्वार्थेपदसामर्थ्यंनाभ्युपेयंगोपदस्यानयनसंसर्गादिवदर्थप्रतिपादकत्वादानयतिपदस्यापिगोसंसर्गाद्यनेकार्थाभिधायित्वात्पदाभ्याम नेकसंसर्गप्रतिपत्तेर्गामानयेतिवाक्यश्रवणान्नियतप्रवृत्त्यनुपपत्तेरित्याशंक्यपदस्मारितपदार्थमात्रसंसर्गस्यप्रतिपाद्यत्वान्मैवमित्याह । पद जातमिति । अयमर्थः । क्रमेणोच्चार्यमाणेषुपदेषुक्रमेणाव्यभिचारिणःपदार्थाःप्रतीयंतेअंत्येयदोच्चारणानंतरंसंभूयैकस्मृतिगम्यानिपदा

न्यभिहितानेवपदार्थान्संसृष्टतयाप्रतिपादयंतीत्यभिहितेनैवान्वयोपपत्तेरविरोधस्तस्माच्छ्रुतंपदजातंसर्वंस्मारितानन्वितार्थकंन्यायसंपादित न्यक्तिसत्पश्चाद्वाक्यार्थबोधकमिति ॥ ४३ ॥ ननुअभिहितान्वयवादेऽन्विताभिधानवादेचपदानांयथार्थप्रतीतिजनकत्वसाम्यात्सांकर्यमि त्याशंक्याह । नचेति ॥ ४४ ॥ यदाभिहितपदार्थानामेवसंसर्गबोधकताभिहितान्वयमतेपदान्येवपदार्थस्मृत्युपादानद्वारासंसर्गबोधकानीत्य न्विताभिधानवादइति ततःसादृश्याभावान्नसांकर्यमित्याशयेनाह। पदार्थेभ्यइति। हियस्मादितिभाट्टाभिमताभिहितान्वयेपदप्रतिपादिता

नचभाट्टमतेनातिसाम्यंत्वभिहितान्वये ॥ पदानांविनियोगोऽस्तिपदार्थप्रतिपादने ॥ ४४ ॥ प दार्थेभ्यस्तुवाक्यार्थप्रतिपत्तिरितिस्फुटम् ॥ अत्रान्विताभिधानाख्येवादेयानिपदानिहि॥४५॥ तान्येवसर्ववाक्यार्थप्रतिबोधकराणितु ॥ अतोऽन्विताभिधानाख्येवादेदोषोनकश्चन ॥ ४६॥ फ लितोद्रुमइत्यादिकार्यशून्यार्थवाचिनाम् ॥ प्रयोगाणांहिलोकेऽपिभूयसामुपलंभतः ॥ ४७ ॥ वे देऽप्यस्तिवषट्कर्तुःप्रथमोभक्षइत्यपि ॥ कार्यशून्यार्थवाक्यानामुपलंभोह्यनेकधा ॥ ४८ ॥ अन्वि तस्वार्थमात्रेवैशब्देसामर्थ्यमस्त्यतः ॥ सूत्रकारेणयत्त्वत्रवृद्धानांव्यवहारतः ॥ ४९ ॥

र्थप्रतिपाद्योवाक्यार्थः ॥ ४५ ॥ अन्विताभिधानवादेतुपदबोध्यएववाक्यार्थः ॥ ४६ ॥ अन्विताभिधानवादेलौकिकाअपिभूयांसःप्रयोगा अनुकूलाःसंतीत्याह । फलितइति ॥ ४७ ॥ ननुलोकेतथात्वेऽपिवेदेक्रियाशून्यानांनास्तिक्वचिदपिसमन्वयइत्याशंक्य वषट्कर्तुःप्रथमभक्ष स्तस्मात्पूषाप्रपिष्टभागइत्येवमादौक्रियाशून्यानामपिसमन्वयदर्शनान्नैवमित्याह। वेदेऽपीति॥ ४८॥ उपसंहरति। अन्वितेति । ननुजैमि निनातद्भूतानांक्रियार्थेनसमाम्नायइतिसूत्रयतावृद्धानुसारिणाकार्यान्वितस्वार्थेसामर्थ्यंदर्शितं तत्कथंसंगच्छतइतिचेत्तत्राह । सूत्रकारेणे

ति । अनादिवृद्धव्यवहारानुसारेणजैमिनिनासूत्रंप्रणीतं नतत्प्रेक्षामात्रेणेत्याशयेनोक्तं वृद्धानांव्यवहारतइति यत्तुभूतानामितिसूत्रेणात्र वेदेवृद्धव्यवहारात्कार्यान्वितस्वार्थमात्रेस्फुटंशब्दशक्तिःसूत्रकारेणप्रदर्शितेत्यन्वयस्तेषुसिद्धार्थेषुभूतानांवर्तमानानांपदानां कार्येणवाक्यार्थेनतत्प्रतिपत्त्यर्थत्वेनसम्यक्तयासंभूय वाक्यत्वेनोच्चारणमितिसूत्रार्थः ॥ ४९ ॥ ४५० ॥ धर्मविचारस्यप्रक्रांतत्वात्तदनुरोधेनतत्प्रतिपादकवाक्यसमन्वयमेवोक्तवान्नतुवेदांतानांब्रह्मणिसमन्वयाभावाभिप्रायेणेत्याह । तदिति ॥ ५१ ॥ किंच । नेति । युक्तिसद्भावाद्वेदांतानांकार्य

कार्यान्वितस्वार्थमात्रेशब्दशक्तिःप्रदर्शिता ॥ तद्भूतानांक्रियार्थेनसमाम्नायस्त्वितिस्फुटम् ॥४५०॥ तत्तत्रधर्मजिज्ञासोपक्रमात्प्रकृतस्यच ॥ उपयोगतयैवात्रक्रियार्थेनेतिकीर्तितम् ॥५१॥ नसिद्धार्थेहिसामर्थ्याभावाभिप्रायतस्तथा ॥ यदीदंजैमिनेःसूत्रंतथाकल्प्येतवैतदा ॥ ५२ ॥ अखंडैकरसेसर्ववेदांतानांसमन्वयः ॥ बादरायणसूत्रैर्योदर्शितःसविरुद्ध्यते ॥ ५३ ॥ अतोऽखंडार्थचिद्ब्रह्माद्वैतपर्यवसायिषु ॥ वेदांतेषुक्रियागंधोनशंक्योऽस्तिविवेकिना ॥ ५४ ॥ क्रियायामेवमत्यंतभक्तेनापिसमन्वयः ॥ ब्राह्मणोनैवहंतव्यइत्यादिवचनेषुतु ॥ ५५ ॥

निष्ठताभ्युपगम्यतेभवद्भिराप्तजैमिनीयसूत्रप्रामाण्यान्नाद्यः युक्त्यभावस्यनिरूपितत्वान्नद्वितीयस्ततोऽपिपरमाप्तबादरायणसूत्रसंदर्भवैयर्थ्यप्रसंगभयात्तत्सूत्रस्योक्तार्थपरत्वौचित्यादित्याशयेनाह । यदीति ॥५२॥ अखंडैकरसेप्रातिपदिकार्थमात्रे ॥५३॥ फलितमाह । अतइति ॥५४॥ किंच क्रियाभिधानवादिनापिब्राह्मणोनहंतव्यइत्यादिनिषेधवाक्यानांभूतार्थएवावश्यंसमन्वयोऽभ्युपेयइत्याह । क्रियायामिति ॥ ५५ ॥

भूतेति। भूतार्थेष्वेवसमन्वयोवक्तव्यइतिसंबंधः। कुतइत्यपेक्षायामाह। क्रियासंभवहेतुनेति। उक्तवाक्यार्थस्यनिवृत्तिरूपस्यक्रियातत्साधनत्वासंभवात्। ननुत्रयोऽर्थाअत्रप्रतीयंतेब्राह्मणोहननंप्रत्ययाभावश्चफलप्रार्थनाचप्रवृत्तिहेतुरतःस्वभावप्राप्तहंत्यर्थानुवादेनतद्विरोधिनीसंकल्पक्रियैवनञाप्रतिपाद्यतेसाचप्रत्ययेनविधीयतेनचाभावोनामास्तिभावांतरव्यतिरिक्तःकश्चिद्येनतत्पर्यवसितवाक्यंस्यादतोऽवांतरविधिपरंवाक्यमित्याशंक्याह । प्राप्तेति । अयमर्थः। नह्यभावस्तद्बुद्धिविषयोनिवर्तयितुंशक्यते नचभावांतरव्यतिरिक्तोऽभावोनास्तीतिवाच्यं तस्यसप्रतियोगिकत्वेनपृथक्त्वसिद्धेरर्थांतरविरोधिनोरभावसंबंधितयातत्रनञोलक्षणयापिप्रवृत्तिसंभवेनसद्विकल्पनायोगादभावएवमुख्योऽर्थ

भूतार्थेष्वेववक्तव्यःक्रियाऽसंभवहेतुना ॥ प्राप्तक्रियानिवृत्त्यात्माहननाभावएवहि ॥ ५६ ॥
ननिवृत्तेःक्रियात्वंस्यादौदासीन्यस्वरूपतः ॥ नचात्रहननाभावोह्यनुष्ठेयोऽपिसंभवेत् ॥ ५७ ॥
अनादेःप्रागभावस्यनैवानुष्ठेयताऽर्हता ॥ नोचेद्विधिनिषेधाख्योव्यवहारोविलुप्यते ॥ ५८ ॥
तथाचशब्दसामर्थ्यंनकार्यान्वितएवहि ॥ यतोनिषेधवाक्यानांभूतार्थेऽपिसमन्वयः ॥ ५९ ॥

स्तथाचस्वसंबंध्यभावबोधनस्वभावेननञाप्राप्तहननक्रियानिवृत्तिरेवबोध्यतेनत्वप्राप्तक्रियेति ॥ ५६ ॥ ननुनिवृत्तेरपिक्रियात्वात्तत्परस्यवाक्यस्यकथमक्रियार्थतेतितत्राह । नेति। औदासीन्यस्वरूपायानिवृत्तेःक्रियात्वंनास्तिऔदासीन्यस्यप्रागभावरूपत्वात् । नच हननप्रागभावस्यानुष्ठेयतासंभवतितस्यानादित्वेनसाध्यत्वाभावादित्याह । नचेति ॥ ५७ ॥ अनादेरिति। किंच निषेधवाक्येऽपिविधिकल्पनेविधिनिषेधव्यवहारोऽपि लुप्येतेत्याह। नोचेदिति ॥ ५८ ॥ फलितमाह। तथाचेति। प्रकृतेकिमायातमित्यपेक्षायामाह। यतइति ॥ ५९ ॥

तथेति। यद्यप्युक्तंकर्तव्यविधिप्रवेशमंतरेणवस्तुमात्रमुच्यमानमनर्थकमितितत्राह। वेदांतेति। अशरीरंवावसंतंनप्रियाप्रियेस्पृशतइतिश्रुतेः।
ननुशरीरेपतितेऽशरीरत्वंस्यान्नतुजीवतइतिचेन्नात्मनोदेहादिसंबंधस्याविद्यकत्वात्तत्त्वज्ञानादविद्यानिवृत्तौजीवतोऽप्यशरीरत्वसंभवात्तथा
भूतामुक्तिःसंभवतीतिभावः॥ ४६०॥ ६१॥ नन्वात्मनःशरीरादिसंबंधोनाविद्याकृतःकिंतुतत्कृतधर्माधर्मनिबंधनस्तथाचकथंतन्निवृत्त्यातन्नि
वृत्तिरितिचेतत्राह । शरीरादेरिति । देहसंबंधप्रयुक्तमात्मनोधर्मादिकर्तृत्वंस्वतोवा आद्येतस्यदेहयोगः स्वतउतपरतः नाद्यस्तत्कृतधर्मा
दिनिमित्तत्वोक्तिविरोधात् । द्वितीयेऽपिकिमविद्यानिबंधनःसउतधर्मादिनिमित्तकः नाद्यः । तदनभ्युपगमात् । नद्वितीयः । देहयोग
सिद्धौतत्संसृष्टात्मकृतधर्मादिसिद्धिस्तत्सिद्धौचतन्निबंधनादेरसंबंधसिद्धिरित्यन्योन्याश्रयादतोनदेहादिसंबंधःकर्मकृतइतिभावः । ननुप्राक्

तथावेदांतवाक्यानांभूतार्थेस्यात्समन्वयः ॥ वेदांतवाक्यजब्रह्मविज्ञानंमोक्षसाधनम् ॥ ४६० ॥
सकार्यायामविद्यायांनिवृत्तायामशेषतः ॥ ब्रह्मात्मावस्थितिर्मुक्तिःसिद्धास्तिज्ञानतःस्वतः॥६१॥
शरीरादेस्तुसंबंधोनात्रकर्मकृतोभवेत् ॥ किंत्वविद्याकृतःसाचज्ञानेनविनिवर्त्यते ॥ ६२ ॥

तकर्मनिबंधनंसंप्रतितनंशरीरंतच्चकर्मप्राक्तनशरीरसंबंधायत्तं सोऽपिप्राचीनकर्माधीनइतिनान्योन्याश्रयः । नचानवस्था बीजांकुरवदना
दित्वादित्याशयेनशंकते । किंत्विति। एवंभूतानादित्वकल्पनायाअंधपरंपरारूपत्वात्कूटस्थानंतचिद्धातोरक्रियत्वात्तस्यस्वतोधर्मादिकर्तृ
त्वासंभवेनस्वकृतकर्मकृतसशरीरत्वायोगाच्चाविद्याकृतएवदेहादिसंबंधइत्यवश्यमभ्युपेयमित्याशयेनाह । अविद्याकृतइति । अस्त्वविद्या
कृतत्वंतथापिकथंनिवृत्तिरित्याशंक्य तमसःप्रकाशनिवर्त्यत्ववदज्ञानस्यज्ञाननिवर्त्यत्वप्रसिद्धेरविद्यायांविद्ययानिवृत्तायांतत्कार्यशरीरादिसं
बंधनिवृत्तावुक्तमुक्तिःसिद्ध्यतीत्याशयेनाह । सेति ॥ ६२ ॥ ॥ ॥ ॥ ॥

अत्रब्रह्मसमश्नुते तद्यथाअहिर्निल्वयनीवल्मीकेमृताप्रत्यस्ताशयीतैवमेवेदंशरीरंशेते अथायमशरीरोऽमृतःप्राणोब्रह्मैवतेजएवेतिसचक्षुरच
क्षुरिवसकर्णोऽकर्णइवसवागवागिवसमनाअमनाइवसप्राणोऽप्राणइवेत्यादिश्रुत्यावगतब्रह्मात्मभावत्वंयथापूर्वंसंसारित्वंनास्तीत्यतएवसंसा
रस्याविद्यकत्वाद्विद्ययाऽविद्यानिवृत्त्यातन्निवृत्तिसंभवादेवंवोध्यतइत्याशयेनाह। अतएवेति। श्रवणात्पराधीनयोर्मनननिदिध्यासनयोःप्रति
पादनंतुश्रवणांगतयाब्रह्मात्मावगत्यर्थमित्यविरोधः॥ ६३ ॥ ननुदेहादिकारणस्याविद्यायानिवृत्तौ कथंदेहाद्यवस्थानमित्याशंक्यवाधितानुवृ
त्त्याप्रारब्धकर्मशेषेणदेहाद्याभासमात्रस्यावस्थितिमप्युक्तश्रुतिरेवब्रूतइत्याह। प्रारब्धेति। ननुचविद्याकार्यत्वाविशेषात्तन्निवृत्तौकथंप्रारब्धक
र्मावशेषइत्याशंक्यपरिहरति। यद्यपीति॥ ६४ ॥ अज्ञानमिति। कर्मणामुपादानमज्ञानंब्रह्मविद्योच्छिनत्ति तथाचकारणनिवृत्त्याकर्मनिवृत्तेः

अतएवश्रुतिस्तत्त्वज्ञानिनोऽत्रयथापुरा॥ संसारित्वंनचास्तीतिब्रूतेवाक्यैरनेकधा॥ ६३॥ प्रार
ब्धकर्मशेषेणदेहाभासस्थितिंतथा॥ यद्यपिब्रह्मविज्ञानमुपादानंहिकर्मणाम्॥ ६४॥ अज्ञानमु
च्छिनत्तीतितथाप्यारब्धकर्मणः॥ ज्ञानंनिवर्तकंनास्तिस्वयंतस्यफलत्वतः॥ ६५॥ प्रारब्ध
स्यफलेह्येतेभोगोज्ञानंततस्तयोः॥ अविरोधस्तदन्यस्यसंचितादेर्विरोधितत्॥ ६६॥

कथंतत्त्वविदोऽद्वैतदर्शनं क्षीयंतेचास्यकर्माणीतिश्रुतेः यद्यप्येवंतथापितस्यतावदेवचिरं यावन्नविमोक्ष्येअथसंपत्स्त्यइतिश्रुत्या तत्त्वविदोविदे
हकैवल्यप्राप्तौविलंबबोधनात्कर्मस्थितिरवगम्यते तथाचश्रुतिप्रामाण्यान्यथानुपपत्त्याप्रारब्धकर्मफलभूतज्ञानस्यतन्निवर्तकत्वे उपजीव्यविरो
धापत्त्याचसर्वकर्मक्षयश्रुतेःसंकोचोपपत्तिरित्याह। तथापीति॥ ६५॥ प्रारब्धस्येति। नचपरोक्षज्ञानेनसमग्राज्ञाननिवृत्तावनुपपन्नंकर्माव
स्थानंश्रुत्यापिकथंप्रतिपादयितुंशक्यमित्याशंक्यतत्त्वज्ञानमेवस्वकारणेभ्योजायमानंश्रुत्यवगतप्रारब्धकर्मावस्थानप्रतिबंधात्तदपेक्षितद्वैत
प्रतिभासोपादानभूताविद्यालेशनिवर्तितपाटवशून्यमितरसमस्तकर्मादिकार्यसहिताविद्यानिवर्तकमुत्पद्यते अतःस्वोत्पत्त्यनुकूलप्रारब्धाति

रिक्तद्विरोधिकर्मनिवर्तयतीत्याशयेनाह । अविरोधइति । तदन्यस्यप्रारब्धकर्मान्यस्य ॥६६॥ नन्वेवमपिसंतमसबहुलालोकयोःसाहित्यं
यथानोपपद्यतेतथाऽद्वैतज्ञानद्वैतदर्शनयोःसाहित्यानुपपत्तिरित्याशंकते । नन्विति । नवयंसाहित्यंब्रूमःकिंतुकदाचिदसंप्रज्ञातात्मैकत्वदर्श
नं कदाचित्प्रारब्धकर्मोपस्थापितदोषनिबंधनंद्वैतदर्शनंच तथाचपर्यायेणाविर्भावतिरोभावानुभवान्नोक्तदोषइत्याह । तत्रेति । ननुसश
रीरस्योत्पन्नपरोक्षज्ञानस्यप्रमाणकालएवापरोक्षज्ञानमभ्युपेयंकिमर्थमेवंक्लिष्टकल्पनाक्रियतेइत्याशंक्यानेकश्रुतिस्मृतिविरोधाज्जीवन्मुक्तिसि
द्ध्यर्थमारब्धकर्मव्यतिरिक्तपूर्वोत्तरकर्मविनाशनिमित्तज्ञानाभ्युपगमादपरोक्षदर्शनमंतरेणतन्निवृत्त्यसंभवाद्व्यासादीनांसशरीराणामेवापरो

ननुचानुभवोद्वैतदर्शनंतत्त्वदर्शिनाम् ॥ युगपत्संभवेन्नैवतत्रक्रमोयतस्तयोः ॥ ६७ ॥ उद्भवा
भिभवौस्यातांपर्यायेणानुभूतितः ॥ नवादेहमृतेःपूर्वंज्ञानापारोक्ष्यमेवनो ॥ ६८ ॥ व्यासा
दीनांसदेहानांविज्ञानावगतेःश्रुतेः ॥ स्यादेतज्ज्ञानिनःपुंसःकदाचिद्द्वैतदर्शनम् ॥ ६९ ॥ य
थातथैवयज्ञादिकर्मानुष्ठानमस्त्विति ॥ मैवंनैवास्त्यनुष्ठानंतस्ययज्ञादिकर्मणा ॥ ४७० ॥ कर्तृ
त्वाध्यासविध्वंसान्नष्टमोहस्यतद्विदः ॥ नात्मनोव्यतिरिक्तंवाफलंतस्येप्सितंयतः ॥ ७१ ॥

क्षज्ञानश्रवणादारब्धवतएवतत्संभवान्नेति परिहरति ॥ ६७ ॥ ६८ ॥ व्यासेति । ननुतत्त्वज्ञानिनोद्वैतदर्शनमभ्युपगम्यतेचेत्तर्हिनियो
गानुष्ठानमपिस्वीकार्यमित्यतिप्रसंगंशंकते । स्यादेतदिति । नियतदेशकालाधिकारकर्तृप्रयत्नायत्तत्वादनुष्ठानस्य तत्त्वविदस्तुप्रारब्ध
कर्मनिमित्तदोषोद्भवस्यदेशकालादिनियमाभावात्प्रारब्धानुष्ठानसमाप्तिपर्यंतमवस्थानासंभवात्पुनःपुनस्तत्त्वदर्शनेनानुष्ठितकर्मणांबाधसं
भवाच्चनेत्याह । मैवमिति ॥ ६९ ॥ ४७० ॥ कर्तृत्वाद्यध्यासनिवृत्त्याविर्भूतस्वस्वरूपभूतानंदस्यकर्मानुष्ठानेप्रयोजनाभावादपिनेत्या
ह । कर्तृत्वेति ॥ ७१ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

ननुविहितकर्मानुष्ठाननिमित्तप्रत्यवायपरिहारार्थंतस्यतदनुष्ठातृत्वमस्त्विततत्राह। नवेति ॥ ७२ ॥ आगामिपापनिवृत्त्यर्थमस्तुतस्यत दितितत्राह। आगामिनामिति। तदधिगमउत्तरपूर्वाघयोरश्लेषविनाशौतद्व्यपदेशादितिन्यायादितिभावः ॥ ७३ ॥ तत्रभगवद्वाक्यं प्रमाणयति। अपिचेदिति ॥ ७४ ॥ इत्यादीति। ज्ञानमेवनिष्कृतिःप्रायश्चित्तंज्ञाननिष्कृतिः। ननुयथेष्टचेष्टानिरासायतस्यशास्त्रीयो



नवास्यपापविध्वंसःफलंयज्ञादिकर्मणाम् ॥ ज्ञानेनैवनिवृत्तानितस्यपापान्यशेषतः ॥ ७२ ॥
आगामिनांनसंबंधःकर्तृत्वादेरभावतः ॥ ब्रह्माद्वैतात्मसंस्थस्यकुतःपापस्यसंभवः ॥ ७३ ॥
अपिचेदसिपापेभ्यःसर्वेभ्यःपापकृत्तमः ॥ सर्वंज्ञानप्लवेनैववृजिनंसंतरिष्यसि ॥ ७४ ॥ इत्या
दिभगवद्गीताप्रमाणंज्ञाननिष्कृतौ ॥ नवायथेष्टाचरणंतस्यचान्यनिमित्तता ॥ ७५ ॥ येषां
हिताहितप्राप्तिपरिहारार्थताभवेत् ॥ तेषामाचरणंसिद्धंयथेष्टाचरणंतथा ॥ ७६ ॥ जीवन्मुक्त
स्यपुंसस्तुहिताहितविकल्पनाः ॥ उच्छिन्नाःसर्वथाब्रह्मानंदमग्नस्यतद्विदः ॥ ७७ ॥ साध्या
भावान्नवातस्याचरणंसंभवेद्यतः ॥ यथेष्टाचरणंतस्यतत्त्वज्ञस्यकुतस्तराम् ॥ ७८ ॥ ॥

नियमःस्वीकार्यइतितत्राह। नवेति। हिताहितप्राप्तिपरिहारनिमित्ताहिसर्वाश्चेष्टानचस्वात्मन्येवनिरतिशयानंदमशेषानर्थनिवृत्तिंसाक्षा दनुभवतस्ताःसंभवंति साध्यपुरुषार्थप्रार्थनाविनिर्मुक्तत्वात्तथाचयथेष्टाचरणंतुदूरापास्तमेवेत्याह। तस्येत्यादिना ॥ ७५ ॥ यथेष्टाचर णस्येतरनिमित्तत्वंविवृणोति। येषामिति ॥ ७६ ॥ ७७ ॥ ७८ ॥ ॥ ॥ ॥

नन्वेवंतर्ह्यशनादिप्रवृत्त्यसंभवाच्छरीरयात्रानिर्वाहात्सद्योदेहपातापत्तिरित्याशंक्याह । देहेति । ननुप्रारब्धकर्मैवपुण्यपापोत्पादनद्वारादे हांतरारंभकमप्यस्त्वित्याशंक्य प्रारब्धकर्मणांस्वफलहेतुतयातत्त्वायोगान्नैवमित्याह । फलहेतोरिति ॥ ७९ ॥ ननुकर्मांतरमेवास्तुदेहा रंभकमित्याशंक्याह । अविद्येति । अविद्याकामरागादिरूपंपुण्यपापयोर्निमित्तंयत्तत्सर्वंतत्त्वज्ञानेनसमूलंप्रविनाशितम् ॥ ४८० ॥ फ लितमाह । तस्मादिति । विश्वंसर्वं ॥ ८१ ॥ ८२ ॥ ८३ ॥ नेति । किंचवेदांतानांविधिनिरपेक्षभूतवस्तुप्रतिपादनपरत्वस्वीकारेणशास्त्रारं

देहयात्रातुतस्येयंस्याद्दैप्रारब्धकर्मणः ॥ फलहेतोर्नपुण्यादिहेतुत्वंसंभवेन्नयात् ॥ ७९ ॥ अ
विद्याकामरागादिनिमित्तंपुण्यपापयोः ॥ तत्त्वज्ञानेनतत्सर्वंसमूलंप्रविनाशितम् ॥ ४८० ॥
तस्मादद्वैतवादेऽस्मिन्वास्तवंब्रह्मचिद्घनम् ॥ अद्वितीयमतोऽन्यत्तुविश्वंमायाप्रकल्पितम् ॥८१॥
वेदाब्रह्मपराःसर्वेसफलत्वादिहेतुभिः ॥ प्रमाणत्वाद्धिवेदानांमेयंब्रह्माद्वयंपरम् ॥ ८२ ॥ ब्रह्म
विज्ञानमात्रेणमूलाविद्यानिवर्तते ॥ ततःसिद्धःस्वयंमोक्षोब्रह्मात्माद्वैतलक्षणः ॥ ८३ ॥ नवेदां
तेषुलेशोऽपिविधेःशंक्योऽस्तिकश्चन ॥ यदिस्याद्विधिलेशोऽत्रतर्ह्येकाषोडशात्मिका ॥ ८४ ॥
आरभ्याधर्ममीमांसानपृथग्व्यासकर्तृका ॥ नवादेहेंद्रियैःसाध्योमीमांसायांनिरूपितः ॥८५॥

भोऽपिसिद्ध्यतिनत्वन्यथेत्याशयेनाह । यदीति । षोडशात्मिकाषोडशाध्यायस्वरूपा व्यासकर्तृकामीमांसेत्यनुषज्यते ॥ ८४ ॥ आर भ्येति । ननुशरीरेंद्रियनिर्वर्त्यविधिभेदाःकर्मकांडेसंतिनिरूपिताः अत्रतुमनोमात्रनिर्वर्त्योविधिर्निरूप्यतइत्येवंशास्त्रभेदोऽस्त्वित्याशंक्य परिहरति । नवेति ॥ ८५ ॥ ॥ ॥ ॥ ॥ ॥ ॥

॥ ८६ ॥ क्रत्वर्थेति। एवंचेत्तर्हिअथातःपरिशिष्टधर्मजिज्ञासेत्येवमथातःक्रत्वर्थपुरुषार्थयोर्जिज्ञासेतिचतुर्थादौप्रतिज्ञासूत्रवदारभ्येत नचैवमा रभ्यतेततोनैवोक्तंन्याय्यमित्यर्थः । ननुत्वन्मतेऽपिकथंपृथक्शास्त्रारंभइत्याशंक्यविषयफलभेदादित्याह । धर्मेति ॥ ८७ ॥ उपसंहरति । तदेवमिति ॥ ८८ ॥ सिद्धइत्यस्यपूर्वेणान्वयःसर्वस्यशारीरकस्यशास्त्रस्यायंनिर्णयः सूत्रचतुष्टयेयुक्त्याभाष्यकारेणकृतइत्यन्वयः ॥ ८९ ॥

अत्रमानससाध्योऽस्तिविधिरित्यपिसांप्रतम् ॥ आरभ्येततदाथातोजिज्ञासाशिष्टधर्मगा ॥८६॥
क्रत्वर्थादेर्यथारब्धानैवमारभ्यतेततः ॥ धर्मब्रह्मभिदायास्तुभेदोमीमांसयोर्द्वयोः ॥ ८७ ॥
तदेवंविधिशंकायाअप्यभावाद्विचारतः ॥ निर्विघ्नोब्रह्मचैतन्येवेदांतानांसमन्वयः ॥ ८८ ॥
सिद्धोऽयंभाष्यकारेणयुक्त्याशास्त्रस्यनिर्णयः ॥ शारीरकस्यसर्वस्यकृतःसूत्रचतुष्टये ॥ ८९ ॥
एवंसर्वश्रुतीनांचब्रह्मण्यद्वैतवस्तुनि ॥ समन्वयोयतीशेनाध्यायआद्येप्रदर्शितः ॥४९०॥ ततो ऽध्यायेद्वितीयेऽपिविरोधंपरिहृत्यच ॥ स्मृतीनांसांख्यकाणादप्रणीतानांयथाविधि ॥ सर्वानेव कुपक्षान्वैचखंडागमयुक्तिभिः ॥ ९१ ॥ ततस्तृतीयकेऽध्यायेसाधनंसंनिरूपितम् ॥ उपासन विधिस्तत्रगुणानांचोपसंहृतिः ॥ ९२ ॥ चतुर्थेश्रवणादीनामावृत्त्यादिप्रदर्शनम् ॥ कृत्वाफलं यथावद्विक्रममुक्त्यादिदर्शितम् ॥ ९३ ॥ ॥ ॥ ॥ ॥ ॥

एवंसूत्रचतुष्टयस्थभाष्यतात्पर्यंविस्तरेणाभिधाय समन्वयाविरोधसाधनफलाख्याध्यायचतुष्टयार्थंसंक्षिप्यदर्शयति । एवमित्यादिना ॥ ॥ ४९० ॥ ९१ ॥ गुणानामुपसंहृतिःशाखांतरस्थानामपिसत्यज्ञानानंतानंदादिगुणानामेकत्रप्रधानेब्रह्मण्युपसंहारः ॥ ९२ ॥ ९३ ॥

एवंभूतंशब्दतोऽर्थतःप्रसन्नंन्यायतोगंभीरंभाष्यंशिष्यानध्यापयामासेत्याह । भाष्यमिति ॥ ९४ ॥ तदेतत्स्तौति । विमलेति ॥ ९५ ॥ स्वमुखेनस्वस्यलघुतोक्त्यास्वस्यमहत्तांसूचयति । विवरणेति ॥ ९६ ॥ नन्वुकिमित्येवमुच्यतइत्याशंक्यदुराराध्यलोकाराधनासंभवादित्याह । कविभिरिति । एवंचेत्तर्हिकिमर्थंप्रवृत्तोऽसीतिचेन्नाहंतदर्थंप्रवृत्तःकिंत्वेतदर्थमित्याह । अहमिति ॥ ९७ ॥ अपारसंसारगभीरनी

भाष्यंप्रसन्नगंभीरंशब्दतोन्यायतोऽर्थतः ॥ शिष्यानध्यापयामासभाष्यकारोविधानतः ॥ ९४ ॥
विमलपदविशिष्टंस्वच्छगंभीरभावंश्रुतिशिखरगिरायन्निर्णयाधारमद्धा ॥ यतिवरकृतमीड्यंभाष्यमद्वैतनिष्ठंजयतिकलिमलघ्नंमोक्षदंसन्मतंतत् ॥ ९५ ॥ विवरणमतरीत्याभाष्यसिद्धांतएव श्रुतिनययुतवाक्यैर्दर्शितोऽसौमयात्र ॥ स्खलितमिहयदस्तिश्रीशभक्त्यामहांतस्तदपिकरुणयातेशोधयंत्वार्यभावात् ॥ ९६ ॥ कविभिरपिकृतंयन्नप्रशंसंतिलोकेकिमुमितमतिनेहाहंप्रवृत्तस्तथापि ॥ श्रुतिविषयविचारेमेऽस्तुचित्तंकथंचिदितिमनसिनिधायक्षंतुमर्हंतिसंतः ॥ ९७ ॥
इति श्रीशांकरदिग्जयसारेश्रीमन्मुकुंदपदारविंदमकरंदाभिलाषिसदानंदाख्यविदुषाविरचिते शारीरकभाष्यप्रमेयकथनंनामचतुर्थःसर्गः ॥ ४ ॥ ॥ ॥ ॥

रसंतारिसंसारिविचारकंदम् ॥ वंदारुवृंदारकवृंदवंद्यपादारविंदंप्रणमाम्यमंदम् ॥ १ ॥ इतिश्रीमत्परमहंसपरिव्राजकाचार्यबालगोपालतीर्थश्रीपादशिष्यदत्तवंशावतंसरामकुमारसूनुधनपतिसूरिकृतेश्रीशंकराचार्यविजयडिंडिमेचतुर्थः सर्गः ॥ ४ ॥ ॥ ॥

श्रीगणेशायनमः ॥ अथव्यासदर्शनादिकमुपवर्णयितुमुपक्रमते । अथेत्यादिना । शारीरकेव्यासकृतशारीरकसूत्रसंदर्भेस्वेनकृतंभाष्यम् ॥ १ ॥ २ ॥ यतेःश्रीशंकरस्यशिष्याःनोऽस्माकम् ॥ ३ ॥ ४ ॥ अहोत्वांभाष्यकर्तारंकिमित्याहुः ॥ ५ ॥ तत्तस्मिन्सूत्रेयद्व्यासमान



अथश्रीशंकराचार्योगंगातीरेव्यवस्थितः ॥ भाष्यमध्यापयामासशिष्याञ्शारीरकेकृतम् ॥ १ ॥
मध्याह्नेचैकदाभाष्यपाठांतेसमुपस्थिते ॥ तावद्वृद्धोद्विजःकश्चित्समागत्येदमब्रवीत् ॥ २ ॥
कस्त्वंभोःकिमिदंशास्त्रमध्यापयसिमेवद ॥ शिष्याऊचुर्यतेर्विप्रंगुरुर्नोभगवानसौ ॥ ३ ॥ शा
रीरकेकृतंभाष्यमनेनाद्वैतवादिना ॥ तत्राद्वैतमतंसम्यङ्निर्णीतंवेदसंमतम् ॥ ४ ॥ इत्थंवृद्धो
द्विजःश्रुत्वाभाष्यकारमथाब्रवीत् ॥ शिष्याएतेकिमाहुस्त्वांभाष्यकर्तारमित्यहो ॥ ५ ॥ आ
स्तांतद्भाष्यकर्तृत्वंसूत्रमेकमुदीर्यतत् ॥ भाष्येवर्णितमाचक्ष्वममाग्रेव्यासमानसम् ॥ ६ ॥
एवंश्रुत्वावचस्तस्यभाष्यकारोऽब्रवीदिदम् ॥ आचार्येभ्योनमोब्रह्मविद्भ्योमेऽस्तुनमोनमः ॥ ७ ॥
नमेसूत्रज्ञताहंताप्टच्छत्वंयद्यदिच्छसि ॥ ब्रवीम्यहंयथाशक्तिश्रुत्वैवंप्राहसद्विजः ॥ ८ ॥ तृती
याध्यायकस्यादौन्यायमुच्चारयादिमम् ॥ तदंतरेतिसम्यक्त्वंमुनेवेत्थार्थतोयदि ॥ ९ ॥

संस्वकृततद्भाष्येत्वयावर्णितंतत्त्वात्पर्यंममाग्रेकथय ॥ ६ ॥ ७ ॥ ८ ॥ तदंतरप्रतिपत्तौरंहतिसंपरिष्वक्तःप्रश्ननिरूपणाभ्यामितितृतीया ध्यायादिमंसूत्रमुदीरय ॥ ९ ॥ ॥ ॥ ॥ ॥ ॥ ॥

भाष्यकारइति । जीवोमुख्यप्राणसचिवःसेंद्रियःसमनस्कोविद्याकर्मपूर्वप्रज्ञापरिग्रहःपूर्वदेहंविहाय देहांतरंप्रतिपद्यतइत्येतदवगतं अथैनमेते प्राणाअभिसमायांतीत्येवमादेरन्यन्नवतरंकल्याणतरंरूपंकुरुतइत्येवमंतात्संसारप्रकरणस्थाच्छब्दाद्धर्माधर्मफलोपभोगसंभवाच सकिंदेहवी जैर्भूतसूक्ष्मैरसंपरि[illegible]क्तोगच्छत्याहोस्वित्परिष्वक्तइतिसंशयमाह । देहांतरस्येति ॥ १० ॥ करणोपादानवद्भूतोपादानस्याश्रुतत्वात्सएता स्तेजोमात्राःसमभ्याददानइतिह्यत्रतेजोमात्राशब्देनकरणानामुपादानंसंकीर्तयतिनतथासूक्ष्मभूतोपादानसंकीर्तनमस्तियत्रदेहारंभस्तत्रै वतेषांसत्वेनसर्वत्रसुलभत्वात्तत्रनयनंप्रयोजनशून्यमितिपूर्वपक्षमाह वेष्टितइत्यादिना ॥ ११ ॥ १२ ॥ नेति । समाधानंप्रतिजानीते ।

भाष्यकारोऽब्रवीद्विप्रंश्शृणुभूत्वासमाहितः ॥ देहांतरस्यसंप्राप्तौजीवःकिंभूतसूक्ष्मकैः ॥ १० ॥ वेष्टितोयातिवानेतिसंशयेसतिचोच्यते ॥ पूर्वपक्षेनयात्येववेष्टितोभूतसूक्ष्मकैः ॥ ११ ॥ तेषां सर्वत्रसौलभ्यादुपादानंवृथाभवेत् ॥ करणानामुपादानंयथावेदेश्रुतंतथा ॥ १२ ॥ नभूता नामुपादानंमृत्युकालेश्रुतोश्रुतम् ॥ अतस्तैरहितोगच्छत्येवंप्राप्तेऽभिधीयते ॥ १३ ॥ जीवोदे हांतरप्राप्तौदेहबीजैरपेक्षितैः ॥ भूतसूक्ष्मैःपरिष्वक्तोगच्छतीत्याहसूत्रकृत् ॥ १४ ॥ कुतःप्र श्नोत्तराभ्यांतुश्रुतौतस्यविनिर्णयः ॥ इत्थंपंचाग्निविद्यायांयथातत्त्वंतथाशृणु ॥ १५ ॥

अभिधीयतइति ॥ १३ ॥ तदंतरप्रतिपत्तौदेहांतरप्राप्तौदेहबीजैर्भूतसूक्ष्मैःसंपरिष्वक्तोवेष्टितोरंहतिगच्छतीतिप्रतिज्ञात्मकसूत्रभागंव्याचष्टे । जीवइति ॥ १४ ॥ कुतःप्रश्ननिरूपणाभ्यांतांडिश्रुतौगौतमजैवलिप्रश्नोत्तराभ्यांप्रश्नस्तावद्वेत्थयथापंचम्यामाहुतावापःपुरुषवचसोभवंतीति प्रतिवचनंद्युपर्जन्यपृथिवीपुरुषयोषित्सुपंचस्वग्निषुश्रद्धासोमवृष्ट्यन्नरेतोरूपाःपंचाहुतीर्दर्शयित्वाइतितुपंचम्यामाहुतावापःपुरुषवचसोभवं तीतिहेतुभागंव्याचष्टेकुतइति । तत्प्रश्नोत्तरनिरूपणंयथा ॥ १५ ॥ ॥ ॥ ॥ ॥

गौतमोजैवलिंपृच्छति । पंचम्यामिति ॥ १६ ॥ जैवलिराह । द्युपर्जन्येति ॥ १७ ॥ १८ ॥ यस्मादेवंतस्माज्जीवोऽद्भिःपरिवेष्टितोयातीति गम्यतइत्याह । ततइति ॥१९॥ नन्वदाहृताभ्यांप्रश्नप्रतिवचनाभ्यांकेवलाभिरद्भिःसंपरिष्वक्तोरंहतीतिप्राप्नोत्यप्शब्दश्रवणसामर्थ्यात्तत्रचा यंसर्वैरेवभूतसूक्ष्मैःसंपरिष्वक्तोरंहतीतिप्रतिज्ञायतइतिविप्रःशंकते । नन्विति ॥ २० ॥ त्र्यात्मकत्वात्तुभूयस्त्वादितिसूत्रेणपरिहरत्याचा र्यः । मैवमिति । त्रिवृतंत्रिवृतमेकैकांकरवाणीतिश्रुतेस्त्र्यात्मिकाह्यापस्त्वारंभकास्तास्वभ्युपगतास्वितरदपिभूतद्वयमवश्यमभ्युपगंतव्यं

पंचम्यामाहुतावापोयथापुरुषशब्दिताः ॥ भवंतिवेत्थतत्त्वंत्वमितिप्रश्नोनिरूपितः ॥ १६ ॥
द्युपर्जन्यादिरूपेषुपंचस्वेवाग्निषुश्रुतम् ॥ श्रद्धाशशांकावृष्ट्यन्नरेतोरूपाश्चपंचताः ॥ १७ ॥ आ
हुतीर्दर्शयित्वाथपंचम्यामाहुतौपुनः ॥ आपःपुरुषवचसोभवंतीत्येवमुत्तरम् ॥ १८ ॥ ततोग
म्यतइत्येषजीवोऽद्भिःपरिवेष्टितः ॥ व्रजतीत्यत्रनभ्रांतिर्वेदांतार्थविचारिणाम् ॥ १९ ॥ ननुप्र
श्नोत्तराभ्यांतुकेवलाद्भिश्चसंयुतः ॥ गच्छत्यप्शब्दकथनान्नसर्वैर्भूतसूक्ष्मकैः ॥ २० ॥ मैवं
भोआत्मिकात्वापस्त्रिवृत्करणवाक्यतः ॥ त्रयाणामुपलब्धेश्चकार्यमात्रेप्रपंचके ॥ २१ ॥ भू
तांतरैर्विनात्वद्भिर्नारब्धुंशक्यतेवपुः ॥ किंचसर्वेषुदेहेषुभूयस्त्वंदृश्यतेह्यपाम् ॥ २२ ॥ रस
लोहितरूपाणांतत्प्रश्नोत्तरवाक्ययोः ॥ अपांभूयस्त्वमादायपुरुषत्वमपांश्रुतम् ॥ २३ ॥ ॥



त्र्यात्मकश्चदेहस्त्रयाणामपितेजोबन्नानांतस्मिन्कार्योपलब्धेरित्यर्थः ॥ २१ ॥ वातपित्तश्लेष्माख्यधातुत्रयात्मकोदेहोभूतांतराणिप्रत्या ख्यायकेवलाभिरद्भिरारब्धुमेवनशक्यतइत्याह । भूतांतरैरिति । तत्तस्मादापःपुरुषवचसइतिप्रश्नप्रतिवचनवाक्ययोरप्शब्दस्तद्भूयस्त्वापे क्षोनतुतत्कैवल्यापेक्षइत्याह । तदिति ॥ २२ ॥ २३ ॥ ॥ ॥ ॥ ॥ ॥

विप्रःशंकते । नन्विति । आचार्यःसमाधत्तेनैषदोषः । अन्योऽग्निः ॥ २४ ॥ किंचदेहबीजेपांऽभूयस्त्वदर्शनातन्निमित्तेकर्मण्यपितद्भू
यस्त्वमस्त्वित्याह । दृश्यतइति ॥ २५ ॥ कर्मणांचाग्निहोत्रादीनांसोमाज्यपयःप्रभृतिद्रवद्रव्यव्यपाश्रयत्वाच्छ्रद्धाशब्दोदितानांकर्मसं
मवायिनीनामपांद्युलोकाख्याग्नौहूयमानत्वाच्चतासांबाहुल्यमभ्युपेयमित्याह । अग्निहोत्रादीति ॥ २६ ॥ तमुत्क्रामंतंप्राणोऽनूत्क्रामति प्राण
मनुत्क्रामंतंसर्वेप्राणाअनूत्क्रामंतीत्यादिनाप्राणानांदेहांतरप्रतिपत्तौगतिःश्राव्यते । साचप्राणानांगतिराश्रयमंतरेणनसंभवतीत्यतःप्राणगति
प्रयुक्तानांतदाश्रयभूतानामपिभूतांतरोपसृष्टानांगतिरवगम्यते । नहिनिराश्रयाःप्राणाःक्वचिद्गच्छंतितिष्ठंतिवाजीवतोदर्शनादितिप्राणग

**नन्वेवंपार्थिवोधातुर्भूयिष्ठोदृश्यतेतनौ ॥ नैषदोषोह्यपामन्यापेक्षयाधिक्यमुच्यते ॥ २४ ॥**
**दृश्यतेदेहबीजेऽपिशुक्रशोणितलक्षणे ॥ द्रवभूयस्त्वमप्यस्तुकर्मण्यारंभकेतथा ॥ २५ ॥ अग्नि**
**होत्रादिकर्माणिसोमाज्याद्याश्रयाणिच ॥ तत्रापिद्रवभूयस्त्वंबाहुल्यंस्यादपामतः ॥ २६ ॥**
**किंचदेहांतरप्राप्तौप्राणागच्छंतितत्रच ॥ भूतांतरोपसृष्टानामपामाधारतायतः ॥ २७ ॥ नि**
**राश्रयानतिष्ठंतिप्राणागच्छंतिवाक्वचित् ॥ ननुदेहांतरप्राप्तौप्राणादीनांलयःश्रुतः ॥ २८ ॥ वा**
**गप्येतिमृतस्याग्निंवातंप्राणइतिश्रुतौ ॥ मैवंगौणीश्रुतिस्तत्रलोमकेशादिकेष्विव ॥ २९ ॥**

तेश्चेतिसूत्रार्थमाह । किंचेति ॥२७॥ निराश्रयाइति । ननुयत्रास्यपुरुषस्यमृतस्याग्निंवागप्येतिवातंप्राणःइत्यादिश्रुत्याप्राणादीनांमरणकाले
स्वस्वदेवतासुगत्यभिधानात्तेषांजीवेनसहगमनंश्रुतिविरुद्धमितिविप्रःशंकते । नन्विति ॥ २८ ॥ वागिति । अग्न्यादिगतिश्रुतेरितिचेन्न
भाक्त्वादितिसूत्रसमाधीनभागेनपरिहरति । मैवमिति । नागादीनामग्न्यादिश्रुतिर्गौणीलोमसुकेशेषुचादर्शनादोषधीर्लोमानिवनस्पती
न्केशाइतिहितत्रतत्राम्नायते । नहिलोमानिकेशाश्चोत्प्लुत्यौषधीर्वनस्पतींश्चगच्छंतीतिसंभवति नचजीवस्यप्राणोपाधिप्रत्याख्यानेगमनम

वकल्पते नापिप्राणैर्विनादेहांतरोपभोगउपपद्यतइत्याह । गौणीति ॥ २९ ॥ ३० ॥ यस्मादेवमतःसहैवगच्छतीत्याह । अतइति । तस्माद्वागाद्यधिष्ठात्रीणामग्न्यादिदेवतानांवागाद्युपकारिणीनांमरणकालेतदुपकारनिवृत्तिमात्रमपेक्ष्यवागादयोऽग्न्यादीन्गच्छंतीत्युपचर्यतइत्याह । तस्मादिति ॥ ३१ ॥ ३२ ॥ उपसंहरति । अतइति ॥ ३३ ॥ इतीति । इत्युक्तार्थंश्रुत्वातिवक्ताविप्रस्त्वनेकधाविकल्प्याखंडयत् तथाहि । व्यापिनांकरणानामात्मनश्चदेहांतरप्रतिपत्तौकर्मवशाद्वृत्तिलाभस्तत्रभवति यद्वा केवलस्यैवात्मनोवृत्तिलाभस्तत्रभवतींद्रियाणितुदेहवद

नहिदेहात्पृथग्भूत्वाकेशायांतिवनस्पतीन् ॥ नहिप्राणैर्विनाजीवेदेहोऽन्यउपपद्यते ॥ ३० ॥
अतःसहैवजीवेनप्राणागच्छंतिनिश्चितम् ॥ तस्माद्वागादियानंतद्गौणमेवश्रुतौश्रुतम् ॥ ३१ ॥
वागादेरिंद्रियस्यात्रदेवावन्ह्यादयस्तदा ॥ प्राणांतसमयेनोपकारंकुर्वंतिपूर्ववत् ॥ ३२ ॥ अतो
जीवःपरिष्वक्तोभूतसूक्ष्मैःसगच्छति ॥ इत्थंतृतीयेऽध्यायेऽस्मिन्सिद्धांतोऽस्माभिरूहितः ॥ ३३ ॥
इत्युक्तार्थंनिशम्याथवावदूकस्त्वनेकधा ॥ विकल्प्याखंडयद्विप्रोविस्मयंजनयन्नृणाम् ॥ ३४ ॥

भिनवान्येवतत्रतत्रभोगस्थानउत्पद्यंते यद्वा मनएवकेवलंभोगस्थानमभिप्रतिष्ठते यद्वा जीवएवोत्प्लुत्यदेहाद्देहांतरंप्रतिपद्यते शुकइववृक्षाद्वृक्षांतरं किंच प्रथमेऽग्नावपांश्रवणाभावात्पंचम्यामाहुतावापःपुरुषवचसोभवंतीतिनिर्धारयितुंनशक्यते अत्रहिद्युलोकप्रमुखाःपंचाग्नयः श्रद्धादीनांपंचानामाहुतीनामाधारत्वेनाधीतास्तत्रप्रथमेऽग्नौश्रुतांश्रद्धांपरित्यज्याश्रुतानामपांपरिकल्पनंसाहसमात्रं श्रद्धायाःप्रत्ययविशेषत्वप्रसिद्धेः किंचास्त्वपांश्रद्धादिक्रमेणपंचम्यामाहुतौपुरुषाकारप्रतिपत्तिस्तथापितत्परिष्वक्तस्यजीवस्यगमनंतुनवाच्यंतद्गमनस्याश्रुतत्वादित्येवमादिनेति ॥ ३४ ॥ ॥ ॥ ॥ ॥ ॥ ॥

ततइति । नतावत्सांख्यबौद्धवैशैषिकदिगंबराणांकल्पनाआदर्तव्या उदाहृतश्रुतिविरोधात् यत्तुप्रथमेऽभावित्यादितदपिनदोषावहं यतस्त त्रापिप्रथमेऽमौताएवापःश्रद्धाशब्देनाभिप्रेयंतेएवंहिसत्यादिमध्यावसानसंगादनाकुलमेतदेकंवाक्यमुपपद्यतेऽन्यथापुनःपंचम्यामाहुतावपां पुरुषवचस्त्वप्रकारेपृष्टे प्रवचनावसरेप्रथमाहुतिस्थानेयद्यनयोर्हौम्यद्रव्यंश्रद्धांनावतारयेत्ततोऽन्यथाप्रश्नोयथाप्रतिवचनमित्येकवाक्यतान स्यान्नचश्रद्धाख्यःप्रत्ययःमानसोजीवस्यवाधर्मःसन्धर्मिणोनिष्कृष्यहोमायोपादातुंशक्यते पश्वादिभ्यइवहृदयादीनि तस्मादापएवश्रद्धा शब्देनोपादेयाः श्रद्धावाआपइतिवैदिकप्रयोगदर्शनादपिश्रद्धाशब्दस्याप्सूपपत्तिः । गच्छंतीनामपांवांतरूपतयासूक्ष्मत्वगुणयोगेनमाण

ततःश्रीशंकराचार्यःसर्वंतत्फणितंक्रमात् ॥ चखंडशतधायुक्त्याविवादोऽष्टदिनान्यभूत् ॥३५॥ तयोर्विवादेसंवृत्तेपद्मपादोऽब्रवीद्गुरुम् ॥ विप्रोऽयंभगवान्व्यासोगुरूणांपरमोगुरुः ॥ ३६ ॥ शंक रःशंकरःसाक्षाद्व्यासोनारायणोहरिः ॥ तयोर्विवादेसंवृत्तेकिंकरःकरवाणिकिम् ॥ ३७ ॥ आ कर्ण्येत्थंवचोभाष्यकारःसूत्रकृतंगुरुम् ॥ दिदृक्षुस्तंप्रणम्याथस्तुवन्नेवंजगादतम् ॥ ३८ ॥ भा वत्कसूत्रसंदर्भेप्रतिपाद्यंयदद्वयम् ॥ मतमद्वैतभाष्यंचेत्तेतदापुरतोमम ॥ ३९ ॥ ॥ ॥

वकेसिंहशब्दवत्तासुश्रद्धाशब्दोवोपपन्नः श्रद्धापूर्वककर्मसमवायाच्चाप्सुश्रद्धाशब्दउपपद्यते । पुरुषेषुमंचशब्दइव आपोहास्मैश्रद्धासन्नमंतेपु ण्यापकर्मणइतिश्रुतेः श्रद्धाहेतुत्वाच्चतासुश्रद्धाशब्दोपपत्तिर्यद्यप्यत्रजीवानांश्रवणंनास्तितथापियइष्टापूर्तादिकारिणःपितृयानेनगंतारः श्रुतास्तएवेहप्रतीयंतइत्यादिनाश्रीशंकराचार्यः शतधाचखंड ॥ ३५ ॥ संवृत्तेसम्यक्प्रवृत्तेसति ॥ ३६ ॥ अहंकिंकरः ॥ ३७ ॥ ३८ ॥ भावत्केति । भवदीयसूत्रसंदर्भेयद्यद्वयंप्रतिपाद्यंममाद्वैतभाष्यंचतवसंमतंचेत्तर्हिममाग्रेभव ॥ ३९ ॥ ॥ ॥

नन्नुस्थितोऽस्म्येवतवाग्रइतिचेत्सत्यं तथापिभगवद्विष्णववतारभूतंस्वविग्रहंममपुरतःप्रकटीकुर्वित्याह स्वेति । अंशावतारकमितिस्वार्थेकः ॥ ४० ॥ ४१ ॥ ४२ ॥ अष्टादशेति । ब्राह्मंपाद्मंवैष्णवंचशैवंलैंगंसगारुडम् । नारदीयंभागवतमाग्नेयंस्कांदसंज्ञितम् । भविष्यंब्रह्मवैवर्तंमार्कंडेयंसवामनम् । वाराहंमात्स्यकौर्म्येचब्रह्मांडमितिचत्रिषडित्युक्तानि । इतिहासोमहाभारतादिः ॥ ४३ ॥ अर्यमासूर्यः ॥ ४४ ॥ नराणांस



स्वस्वरूपंभगवतोविष्णोरंशावतारकम् ॥ प्रकाशयाद्यकृपयापैलादिमुनिसेवितम् ॥ ४० ॥
एवंवदन्ददर्शाग्रेश्रीमद्व्यासंस्वरूपतः ॥ जटाभिर्भ्राजमानंतंसशिष्यःप्रणनामसः ॥ ४१ ॥
स्वागतंतेगुरोभाग्यंमदीयंफलितंदृढम् ॥ दृष्ट्वाभवंतमाचार्यंकृतकृत्यावयंप्रभो ॥ ४२ ॥ अष्टा
दशपुराणानिसेतिहासानिकृत्स्नशः ॥ कृतानिभवतात्वत्तःकोऽन्यःकर्तुमलंधिया ॥ ४३ ॥ ऽव्य
स्तोवेदश्चतुर्धावैकृतोभारतसागरः ॥ धर्मज्ञानार्यमासाक्षादुदितस्त्वंमहीतले ॥ ४४ ॥ यमाम
नंतिवेदांताःसच्चिदानंदविग्रहम् ॥ सएवभगवान्साक्षान्नारायणइतिश्रुतः ॥ ४५ ॥ यतोब्रह्मा
दयोदेवाःसृष्टिकालेभवंत्यमी ॥ सएवभगवान्व्यासोनास्तिमेतत्रसंशयः ॥ ४६ ॥ एकमेवा
द्वितीयंयत्सृष्टेःपूर्वंश्रुतौश्रुतम् ॥ तत्त्वमेवकृपासिंधोबादरायणसंज्ञया ॥ ४७ ॥ मायाशक्तिं
वशीकृत्ययःसर्वज्ञःस्वयंप्रभः ॥ अलुप्तदृक्परानंदःसभवान्नःपरोगुरुः ॥ ४८ ॥ ॥



मूहोनारःनरस्येदंनारंतस्यजडाजडप्रपंचस्याधिष्ठानभूतःपरमात्मासत्वमेवासि ॥ ४५ ॥ महामायानटीनर्तको जगज्जन्मादिकर्तापित्वमे वेत्याह । यतइति ॥ ४६ ॥ ४७ ॥ सर्वज्ञेश्वरावतारत्वात्सर्वज्ञस्त्वमित्याह । मायेति ॥ ४८ ॥ ॥ ॥ ॥

॥ ४९ ॥ प्रवृत्तिनिवृत्तिमार्गप्रवर्तकोऽपित्वमेवेत्याह । मरीच्यादीति ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ तनोषिविस्तारयसि ॥ ५५ ॥

अपएवविसृज्यादौतासुशय्यांविधायच ॥ यःशेतेयोगनिद्रेशःसत्वमीशोहरिःस्वयम् ॥ ४९ ॥
मरीच्यादिमुनीन्सृष्ट्वाग्राहयामासयोहरिः ॥ प्रवृत्तिलक्षणंधर्मंविश्वपालस्त्वमेवसः ॥ ५० ॥ स
नकादिमुनीन्सृष्ट्वाग्राहयामासयोविभुः ॥ निवृत्तिलक्षणंधर्मंमोक्षदातात्वमेवसः ॥५१ ॥ वेदमेकं
चतुर्धात्वमृग्यजुःप्रमुखात्मकम् ॥ कृतवानसिलोकार्थंवेदव्यासाभिधानतः ॥५२॥ वेदेऽधिकार
शून्यायेशूद्रस्त्रीवर्णसंकराः ॥ सेतिहासपुराणानितेषामर्थेकृतानितु ॥ ५३ ॥ वेदार्थंगूढमालो
च्यभारतंसर्वसाधनम् ॥ कृतंत्वयागुरोलोकहितार्थंवेदबृंहणम् ॥५४॥ यदाधर्मक्षतिर्लोकेऽधर्मवृ
द्धिर्यदाभवेत् ॥ तदालोकेऽवतीर्यत्वंवेदमार्गंतनोषिच ॥ ५५ ॥ इत्थंस्तुतोगुरुर्व्यासोभाष्यकारेण
वेधसा ॥ उपविश्यासनेश्रीमान्प्राहशंकरमादरात् ॥ ५६ ॥ धन्योऽसित्वंकृतार्थोऽसिप्रियोऽसि
शिववन्मम ॥ अद्वैताध्वप्रकाशायलोकेजातोऽसिशंकर ॥ ५७ ॥ भाष्यंशंभुसभायांतेश्रुत्वाश्रो
तुंसमागतः ॥ त्वन्मुखात्तत्समाकर्ण्यहर्षसीमामितोऽस्म्यहम् ॥ ५८ ॥ इत्थंव्यासवचःश्रुत्वागु
रुंप्रोवाचशंकरः ॥ क्वभवत्सूत्रमार्तंडःक्वमद्भाष्याल्पदीपकः ॥ ५९ ॥ तथापिकरुणार्द्रेणचेतसे
त्थंप्रभाषसे ॥ शिष्याणांगुरुशुश्रूषाकर्तव्येतिकृतंमया ॥ ६० ॥ ॥ ॥

॥ ५६ ॥ ५७ ॥ हर्षस्यसीमांपरमकाष्ठामितःप्राप्तः ॥ ५८ ॥ ५९ ॥ ६० ॥ ॥ ॥ ॥ ॥

साहसंयन्मयाकारिभाष्येबुद्ध्यास्वयंक्वचित् ॥ तत्त्वंविचार्यशिष्यस्यसमीकर्तुंगुरोर्हसि ॥ ६१ ॥ इत्थंनिगदतस्तस्यहस्ताद्भाष्यंसचाग्रहीत् ॥ प्रसन्नंचातिगंभीरंतन्निरैक्षतसन्मुनिः ॥ ६२ ॥ सूत्रानुकारिभिर्वाक्यैर्युक्तंसिद्धांतयुक्तिभिः ॥ दृष्ट्वाभिनंद्यसंतोषवशादाहसशंकरम् ॥ ६३ ॥ नसाहसंभवान्काप्यकार्षीद्भाष्येमहत्तरे ॥ मीमांसायांनयेवेदेव्याकरणेचकापिले ॥ ६४ ॥ योगेनास्तिसमोलोकेभवताभूतलेदिवि ॥ कथंतेवदनात्सौम्यदुरुक्तंनिःसरेद्यतः ॥ ६५ ॥ प्राक्तोनासिगोविंदस्वामिशिष्यःस्वयंशिवः ॥ अहोतेकौशलंभिक्षोतुलयेकेनभूतले ॥ ६६ ॥ यानिबह्वर्थगर्भाणिसूत्राण्यस्मत्कृतानिवै ॥ कस्त्वामृतेहितानीष्टेव्याख्यातुंश्रुतियुक्तिभिः ॥ ६७ ॥ मदीयभावविज्ञानंविज्ञायत्वामृतेऽजसा ॥ कःप्रणेतुमलंभाष्यंदेवासुरनरर्षिषु ॥ ६८ ॥ व्याख्यातंबहुभिःपूर्वमितोव्याख्यास्यतेपरम् ॥ नैवसंभावयेत्वित्थंत्वद्व्याख्यानेनयत्समम् ॥ ६९ ॥ व्याख्याहित्वंपुनर्वेदशिरोवाक्यानियुक्तिभिः ॥ जित्वाभेदमतीन्मूढानाख्यापयमतंस्वकम् ॥ ७० ॥ ब्रह्मविष्णिंद्ररुद्राणांसंमतंहिमतंतव ॥ कृतकृत्योऽधुनाहंतुगमिष्यामियथेप्सितम् ॥ ७१ ॥ गुरुणोक्तंवचःश्रुत्वाभाष्यकारोऽब्रवीद्गुरुम् ॥ मयाकृतानिभाष्याणिपाठितानिनयोक्तिभिः ॥ ७२ ॥ ॥ ॥

॥ ६६ ॥ ईष्टेसमर्थः ॥ ६७ ॥ कःसमर्थः ॥ ६८ ॥ इतःपरम् ॥ ६९ ॥ ७० ॥ ७१ ॥ नयोक्तिभिरित्यस्योत्तरेणान्वयः ॥ ७२ ॥

निर्णीतोवेदमार्गोऽपियाथातथ्येनकृत्स्नशः ॥ कर्तव्यंनापिमेशिष्टंदृश्यतेजगतीतले ॥ ७३ ॥ मु
हूर्तंसंप्रतीक्षस्वमणिकर्ण्यांत्वदंतिके ॥ आयुषोंऽतेत्यजाम्यद्ययावद्धेयंकलेवरम् ॥ ७४ ॥ इत्याक
र्ण्यवचोव्यासःक्षणंध्यात्वाब्रवीदिदम् ॥ इत्थंतेनैवकर्तव्यंशिष्टंकर्तव्यमस्तिते ॥ ७५ ॥ बहवो
वादिनःसंतिवेदोयैरन्यथाकृतः ॥ तेषांमतनिरासार्थंवस्तव्यंभूतलेत्वया ॥ ७६ ॥ नोचेल्लोकेमुमु
क्षास्मिन्दुर्लभास्याद्यथार्थतः ॥ भूतलेत्वयिसंत्यक्तेवेदांताःस्युर्निराश्रयाः ॥ ७७ ॥ अष्टौवर्षाणि
दैवेनासंस्तथाष्टौधियास्वया ॥ अधुनेशवराद्भूयःसंतुतेऽब्दानिषोडश ॥ ७८ ॥ इत्युक्तवंतमाचार्यं
व्यासंप्राहाथशंकरः ॥ भाष्यंत्वत्सूत्रसंबंधात्प्रचारंसंप्रयातुमे ॥ ७९ ॥ इत्युक्त्वाव्यासचरणौववं
देभाष्यकृद्यतिः ॥ अभिनंद्यततोव्यासोयतिमंतर्धिमागतः ॥ ८० ॥ ततस्तिरोहितेव्यासेनियो
गात्तस्यशंकरः ॥ दिग्जयंकर्तुकामोऽसौचिंतयन्नित्थमैक्षत ॥ ८१ ॥ कुमारिलेनविदुषासंबंधस्ता
वदस्तुमे ॥ भाष्येऽहंकारयिष्यामिवार्तिकंतेनसुंदरम् ॥ ८२ ॥ एवंमनसिसंचिंत्यकाश्यानिर्गत्य
शिष्यकैः ॥ तीर्थराजंप्रयागाख्यंप्रस्थितोविंध्यमार्गतः ॥ ८३ ॥ ततःप्रयागंसंप्राप्यदृष्ट्वावेणीमु
दारधीः ॥ स्तुत्वानत्वाविधानेनस्नानंचक्रेऽतिहर्षतः ॥ ८४ ॥ ॥ ॥ ॥

कृताह्निकोविशश्रामवेणीतीरेऽथभाष्यकृत् ॥ अशृणोद्विविधावाचोजनानांतत्रतत्रच ॥ ८५ ॥ भट्टपादेकृतिश्रेष्ठेबौद्धसंताननाशके ॥ यस्यप्रसादमाश्रित्ययज्ञभागंसुराअपि ॥ ८६ ॥ प्रपेदिरेसवैभट्टपादोवेदाध्वभास्करः ॥ तुषाग्नौप्राविशद्विद्वान्कर्ममार्गप्रवर्तकः ॥ ८७ ॥ एवंलोकगिरःश्रुत्वाभाष्यकारस्त्वरान्वितः ॥ आजगामाथतत्रैवभट्टपादंददर्शह ॥८८॥ शिष्यैःप्रभाकराद्यैश्चसंवृतंतेजसांनिधिम् ॥ तुषाग्नौसंस्थितंदृष्ट्वाप्रसन्नमुखपंकजम् ॥८९॥ विस्मयंप्रापभगवान्शंकरःशंकरःसताम् ॥ अहोधैर्यमहोतेजःसंचिंत्यैवंव्यवस्थितः ॥९०॥ दृष्ट्वैवशंकराचार्यंभट्टपादोऽपिदूरतः ॥ प्रणनामाथसंपूज्यपाद्याघ्यादिभिरादरात् ॥९१॥ भाष्यकारोऽथसंहृष्टोभाष्यमस्माअदर्शयत् ॥ भट्टपादोगृहीत्वातद्भाष्यंसम्यग्विचारतः ॥ ९२ ॥ अवलोक्याब्रवीद्वाक्यंशंकरंप्रतिहर्षतः ॥ अष्टौश्लोकसहस्राणिवार्तिकाख्यानिचादिमे ॥ ९३ ॥ अध्यासभाष्यसंदर्भेभांतीदानींकरोमिकिम् ॥ मृतावुपात्तदीक्षोऽस्मिकालोहिदुरतिक्रमः ॥ ९४ ॥ अद्यमेदर्शनंजातंदुर्लभंभवतांसताम् ॥ असारेखलुसंसारेमहत्पुण्यनिदानतः ॥ ९५॥ कृतोमयानिबंधोऽयंवेदमार्गःप्रवर्तितः ॥ भुक्ताभोगाःसतांमध्येसन्मानंप्राप्तइत्यपि ॥ ९६ ॥ ॥ ॥ ॥

सर्वंघस्मरः समस्तभक्षकः ॥ ९७ ॥ एवंविधादीक्षात्वयाकिमर्थंगृहीतेत्याकांक्षानिवृत्त्यर्थंपीठिकारचयति । मदीयइति ॥ ९८ ॥ तथागतैः सु

नृणामपरिहार्योऽयंयःकालःसर्वघस्मरः ॥ प्राप्तोऽस्माकमपिस्वामिन्परिहर्तुंनशक्यते ॥९७॥ मदीयःपूर्ववृत्तांतःश्रोतव्यस्तेमयोच्यते ॥ इतःपूर्वंप्रवृत्तास्तेबौद्धाःसन्मार्गदूषकाः ॥ ९८ ॥ तथागतैर्धराक्रांताविरलोवैदिकोऽभवत् ॥ नास्तिक्यमीश्वरेवेदेधर्मेचासीन्नृणांतदा ॥ ९९ ॥ समाविश्यगृहेराज्ञांतान्वशीकृत्यसौगताः ॥ वेदोऽप्रमाणमित्यादिमिथ्यालापमचीकरन् ॥ १०० ॥ विजिगीषुरहंबौद्धानुद्यतोऽभूवमादरात् ॥ तन्मतंनमयाबुद्धंनिषेध्यंवेददूषकम् ॥ १ ॥ ततस्तेषांमतंबोद्धुंतएवशरणीकृताः ॥ तेषांसिद्धांतमश्रौषंवेदमार्गमदूदुषम् ॥ २ ॥ एकदातन्मतेनाहंदत्तवान्दूषणंश्रुतौ ॥ अश्रुपातोमहांस्तत्रजातोमेदुष्टकर्मणः ॥३॥ लक्षितोऽहंतदातैस्तुमद्वधार्थंसमुद्यताः ॥ विपक्षपातीबलवान्दूषयिष्यतिनोमतम् ॥ ४ ॥ यथाकथंचिन्नाश्योऽयमित्यामंत्र्यपरस्परम् ॥ एकदातेप्रमत्तंमांज्ञात्वासौधाग्रसंस्थितम् ॥ ५ ॥ व्यपातयन्नथतदापतन्सन्नुक्तवानहम् ॥ यदिवेदाःप्रमाणंस्युर्जीवेयमितिचेतसि ॥ ६ ॥ यदीतिसंशयस्योक्तेर्गुरुद्रोहात्तथामम ॥ चक्षुरेकंप्रनष्टंसंपततस्तूच्चदेशतः ॥ ७ ॥ एकाक्षरप्रदातास्याद्गुरुःकिंबहुपाठकः ॥ तेभ्योऽधीत्यपुनस्तेषांमतंसंदूषितंमया ॥ ८ ॥ ॥ ॥ ॥ ॥ ॥

गतैः ॥ ९९ ॥ १०० ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ॥ ॥ ॥ ॥

आघातयमिति । एकंपातकमुक्त्वाद्वितीयंतदाह । जैमिनीयइति ॥ ९ ॥ ११० ॥ ११ ॥ वार्तिकंद्वारंयस्यतद्यशः ॥ १२ ॥ १३ ॥ १४ ॥

आघातयंकुलंतेषामपराधःकृतोमहान् ॥ जैमिनीयेप्रविष्टेनदूषितंमतमैश्वरम् ॥ ९ ॥ निष्कृतिंदोषयुग्मस्यविधिनाकर्तुमुद्यतः ॥ प्राविक्षमनलेजातंभवत्पादनिरीक्षणम् ॥ ११० ॥ जानेभवंतमद्वैतसंप्रदायकृतेशिवम् ॥ कृतावतारंप्रागेवनप्राप्तोमेदृशोःपथि ॥ ११ ॥ भाग्यंनतादृशंजातमधिगंतुंयशोमहत् ॥ अद्वैतनिष्ठेभाष्येऽस्मिन्वार्तिकद्वारमादृतः ॥ १२ ॥ इत्येवंभाषमाणंतंभट्टपादंजगादसः ॥ जानेत्वांसौगतान्हंतुंजातंभुविषडाननम् ॥ १३ ॥ कृतेपातकसंबंधःसज्जनाःशिक्षितास्त्वया ॥ भवंतंजीवयेभाष्येमदीयेकुरुवार्तिकम् ॥ १४ ॥ इत्युक्तःशंकरंप्राहनेशेलोकविरुद्धकम् ॥ कर्तुंशुद्धमपिस्वामिन्योग्योक्तिर्भवतांत्विह ॥ १५ ॥ तवेश्वरस्यमाहात्म्यंमुनेवेद्मिनिरंकुशम् ॥ त्वंसंहृत्यजगद्भूयःस्रष्टुंशक्तोऽसितादृशम् ॥ १६ ॥ किमुमज्जीवनेचित्रंनोत्सहेऽहंतथापिच ॥ व्रतंभंक्तुमिदानीत्वंब्रह्माद्वैतंदिशाशुभे ॥ १७ ॥ यतोमेसंसृतेर्मोक्षःसंसिध्येतावबोधनात् ॥ अयमद्वैतमार्गस्तेप्रकाश्योयदिसंमतः ॥ १८ ॥ मंडनाख्यःकविर्जेयोजितेयस्मिञ्जितंजगत् ॥ वेदवेदांगशास्त्रेषुवक्तानान्योऽस्तितादृशः ॥ १९ ॥ कर्मिणांमुख्यआचार्योगृहस्थानांप्रवर्तकः ॥ वशमानीयतांसोऽद्यनिवृत्तावक्तृतादरः ॥ १२० ॥ ॥ ॥ ॥ ॥

॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ १२० ॥ ॥ ॥ ॥ ॥ ॥

॥ २१ ॥ २२ ॥ मंडितमलंकृतम् ॥ २३ ॥ २४ ॥ २५ ॥ विस्तरेणप्रतिपादितमर्थंसंक्षिप्याहपद्यद्वयेन । मुनिवरेति । मुनिवरश्चासौगुरुश्चमुनिवराणांवागुरुःश्रीवेदव्यासः ॥ २६ ॥ निगमेति । पूष्णासूर्येणप्रकटितःस्वकृतभाष्यैर्विशदीकृतोनिगमांतोवेदांतसिद्धांतोयेन ॥ १२७ ॥

दुर्वाससाभिशप्तावाकृतश्चित्कारणांतरात् ॥ मंडनस्यगृहेभार्यासाचसाक्षात्सरस्वती ॥ २१ ॥ सचसर्वेषुशास्त्रेषुमत्तोऽधिकतरःकृती ॥ साक्ष्येतत्प्रेयसींकृत्वाजित्वातंवशमानय ॥ २२ ॥ सकर्तातावकेभाष्येवार्तिकंवेदसंमतम् ॥ ब्रह्माद्वैतोपदेशेनमंडनंमंडितंकुरु ॥ २३ ॥ मुहूर्तंसंप्रतीक्षस्वयावत्प्राणांस्त्यजाम्यहम् ॥ श्रुत्वेत्थंभाष्यकारोऽपिब्रह्माद्वैतमुपादिशत् ॥ २४ ॥ सतस्मैभट्टपादायसोऽपिश्रुत्वाथतत्क्षणे ॥ साक्षात्कृत्यस्वमात्मानंदेहंतत्याजमोक्षभाक् ॥ २५ ॥ मुनिवरगुरुणासौसंगमंप्राप्यभिक्षुःश्रुतिवरनयभाष्यंदर्शयित्वाथतस्मै ॥ श्रुतिशिखरमतंतद्भूतलेख्यापयन्यद्विधिहरिहरहृद्यंतीर्थराजंददर्श ॥ २६ ॥ निगमकमलपूष्णाभट्टपादाभिधेनप्रकटितनिगमांतस्तेनसंगम्यभिक्षुः ॥ कृतिनमपिततोऽसौमंडनाख्यंनिशम्यप्रवरगुणगणाढ्यंताद्दिदृक्षुर्बभूव ॥ १२७ ॥ इति श्रीशांकरदिग्जयसारेश्रीमन्मुकुंदपदारविंदमकरंदाभिलाषिसदानंदाख्यविदुषाविरचितेव्यासभट्टपादसमागमोनामपंचमःसर्गः ॥ ५ ॥ ॥ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यबालगोपालतीर्थश्रीपादशिष्यदत्तवंशावतंसरामकुमारसूनुधनपतिसूरिकृतेश्रीमच्छंकराचार्यविजयडिंडिमौपंचमः सर्गः ॥ ५ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

श्रीगणेशायनमः ॥ एवंव्यासदर्शनादिकंनिरूप्यमंडनसंवादंसपरिकरंवर्णयितुमुपक्रमते । अथेति । योगबलेनाकाशमार्गगमनसामर्थ्ये
न ॥ १ ॥ पुरोपवनंनगरसमीपस्थवनंमिश्रगृहदासीः ॥ २ ॥ ३ ॥ ताभिर्दत्तमुत्तरमुदाहरति । स्वतइतित्रिभिः । वेदवाक्यंस्वतःप्र
माणमितिमीमांसकमतावलंबिन्यः परतःप्रमाणमितिनैयायिकमतावलंबिन्यः । यत्रमंडनालयेद्वारस्थानांनीडानांपंजरादिरूपाणामंतरेम

अथप्रतस्थेभगवान्प्रयागान्माहिष्मतींनामपुरींप्रशस्ताम् ॥ अवाप्यतांयोगबलेनभिक्षुर्ददर्श
सन्मंडलमंडनार्हाम् ॥ १ ॥ पुरोपवनमाश्रित्यस्नात्वापुष्करिणीजले ॥ गच्छन्कृताह्निकोमि
श्रालयदासीर्ददर्शसः ॥ २ ॥ पप्रच्छमांडनंधामजलगंत्रीस्ततस्तुताः ॥ हसंत्योऽन्योन्यमानं
दाद्ददुरुत्तरमादरात् ॥ ३ ॥ स्वतःप्रमाणंपरतःप्रमाणंकीरांगनायत्रगिरंगिरंति ॥ द्वारस्थनी
डांतरसन्निरुद्धाजानीहितन्मंडनपंडितौकः ॥ ४ ॥ फलप्रदंकर्मफलप्रदोऽजःकीरांगनायत्रगिरंगि
रंति ॥ द्वारस्थनीडांतरसन्निरुद्धाजानीहितन्मंडनपंडितौकः ॥ ५ ॥ जगद्ध्रुवंस्याज्जगदध्रुवं
स्यात्कीरांगनायत्रगिरंगिरंति ॥ द्वारस्थनीडांतरसन्निरुद्धाजानीहितन्मंडनपंडितौकः ॥ ६ ॥
इत्थंतासांगिरःश्रुत्वागत्वातत्सद्मनोंऽतिके ॥ दुष्प्रवेशंगृहंदृष्ट्वाव्योममार्गेणसोऽगमत् ॥ ७ ॥

ध्येसम्यक्निरुद्धाःकीराणांशुकादिपक्षिणामंगनाअपितथाभूतांगिरंवाचंगिरंतिउच्चारयंतितत्तादृशंमंडनपंडितस्यौकोगृहंजानीहि ॥ ४ ॥
फलप्रदंकर्मेत्यध्वरमीमांसकमतावलंबिन्यःफलप्रदोऽजईश्वरइतिब्रह्ममीमांसावलंबिन्यः ॥ ५ ॥ जगद्ध्रुवंस्यादितिजैमिन्यादिपक्षावलंबि
न्यः । जगदध्रुवंस्यादित्यौपनिषदपक्षावलंबिन्यः ॥ ६ ॥ तद्दत्तोत्तरश्रवणानंतरंश्रीशंकराचार्योयत्कृतवांस्तदाह । इत्थमिति ॥ ७ ॥

॥ ८ ॥ ९ ॥ तत्रैवयत्रव्यासजैमिनीस्थितौ ॥ १० ॥ तयोर्मुन्योरंतिसमीपेस्थितंसंन्यासिनंदृष्ट्वा ॥ ११ ॥ तयोर्मुन्योरंतिकेसमीपेशं करस्यमंडनस्यचसंगमेसतिअथोत्तरोत्तरंप्रश्नोत्तराणिबभूवुः ॥ १२ ॥ प्रश्नोत्तराण्युदाहरन्नादौमंडनकर्तृकंप्रश्नमुदाहरति । कुतइति । मुं डीकुतः गृहद्वाराणांकपाटैःपिहितत्वात् । मुंडीश्राद्धकर्मणिद्रष्टुमयोग्योभवान्केनमार्गेणप्रविष्टः । एवंमंडनोक्तंश्रुत्वातद्वचनस्यकिंपर्यंतं भवान्मुंडीत्यर्थंप्रकल्प्याहभगवान् । आगलादिति । गलपर्यंतंमुंडी । मत्प्रश्नार्थएतेननबुद्धइत्यवगत्यमंडनआह । पंथाःमार्गस्तेतवमया पृच्छयते नतुकिंपर्यंतंभवान्मुंडीति । एवमुक्तस्तद्वचनस्यतवपंथानंप्रतिमयाप्रश्नःकृतइत्यर्थंप्रकल्प्याहभगवान् । किमाहपंथास्त्वयापृष्टः

योगशक्त्याथसौधाग्रेसमागत्यसमीपगम् ॥ विद्ययालंकृतंमिश्रंमंडनाख्यंददर्शसः ॥ ८ ॥ आ गतंतत्क्षणेदृष्ट्वाश्रीमद्व्यासंसजैमिनिम् ॥ संनिमंत्र्यार्चयंततत्पादपद्मानिहर्षतः ॥ ९ ॥ तत्रैवाग त्ययतिराट्समागम्ययथार्हतः ॥ व्यासंसजैमिनिंताभ्यामभूत्सप्रतिनंदितः ॥ १० ॥ आका शादवतीर्णंतंदृष्ट्वासंन्यासिनंद्विजः ॥ प्रवृत्तिशास्त्रसंसक्तश्चुकोपांतिस्थितंतयोः ॥ ११ ॥ अथ मंडनमिश्रस्यशंकरस्यचसंगमे ॥ तयोःप्रश्नोत्तराण्यासुरुत्तरोत्तरमंतिके ॥ १२ ॥ कुतोमुंडया गलान्मुंडीपंथास्तेपृच्छ्यतेमया ॥ किमाहपंथास्त्वन्मातामुंडेत्याहतथैवहि ॥ १३ ॥ ॥

पंथास्त्वांप्रतिकिमाहकिमुक्तवान् । एवंविपरीतंश्रुत्वाकुपितःसन्मंडनआह । त्वन्मातेति । मयापृष्टःपंथास्त्वन्मातामुंडाइत्याह । एवमा कृष्टेभगवानुवाच । तथैवेति । त्वयापृष्टेनयथात्वांप्रतित्वन्मातामुंडेतियदुक्तंतत्तथैव । हियस्मात्पंथानंप्रतित्वमपृच्छस्त्वांप्रष्टारंप्रत्येवपंथा स्त्वन्मातामुंडेत्याह । मंडनेतिसंबोधयन्पंडितशिरोमणिस्त्वमिदंज्ञातुंयोग्योऽसीतिसूचयति । तस्मात्त्वन्मातेत्यत्रायंत्वच्छब्दःमामपृच्छकं नब्रूयात्मद्वाचकोनभवतीत्यर्थः । वक्रोक्तिःश्लेषकाकुभ्यामपरार्थत्वकल्पनम् ॥ १३ ॥ ॥ ॥ ॥

॥ १४ ॥ एवमुक्तोऽतिरुष्टःसन्मंडनआह । अहोइति । किमुसुरामदिरापीताकिंत्वयामद्यपानंकृतं । अन्यथाविपरीतभाषणंकथंस्यात् । एवमा
क्रुष्टोभगवान्तद्वचनस्यसुराकिमुपीतापीतवर्णेत्यर्थंप्रकल्प्याह । नैवेति । सुरापीतापीतवर्णानैवभवति । यतःकारणात्श्वेताश्वेतवर्णा स्वा
नुभूतमप्यर्थं कुतोनस्मरसीत्याशयेनाह । स्मरेति । स्मरणंकुरु । सुरेतिक्वचित्पाठः । एवमुक्तोमंडनआह । किमिति । तस्याःसुरायावर्णंत्वं
यतिःकिंजानासितद्वर्णज्ञानंयतेस्तवात्यंतानुचितमित्यर्थः । एवमाक्षिप्तोभगवानुवाच । अहमिति । अहंवर्णंजानामिभवांस्तुरसंजाना
ति तथाचतद्वर्णज्ञानवानप्यहंनप्रत्यवायी त्वंतुतद्रसानुभविताप्रत्यवायार्हः । नसुरांपिबेदितिनिषेधेनपानस्यप्रत्यवायजनकत्वबोधनात् न
तुतद्वर्णज्ञानस्येतिभावः ॥ १५ ॥ एवंविपरीतानिवचनानिश्रुत्वातिरुष्टोमंडनआह । मत्तइति । कलंजंविषलिप्तबाणेनहतस्यमृगस्यमां

त्वंपंथानमपृच्छस्त्वांपंथाःप्रत्याहमंडन ॥ त्वन्मातेत्यत्रशब्दोऽयंनमांब्रूयादपृच्छकम् ॥ १४ ॥
अहोपीताकिमुसुरानैवंश्वेतायतःस्मर ॥ किंत्वंजानासितद्वर्णमहंवर्णंभगवान्रसम् ॥ १५ ॥
मत्तोजातःकलंजाशीविपरीतानिभाषते ॥ सत्यंब्रवीतिपितृवत्त्वत्तोजातःकलंजभुक् ॥ १६ ॥
कंथांवहसिदुर्बुद्धेगर्दभेनापिदुर्वहाम् ॥ शिखायज्ञोपवीताभ्यांकस्तेभारोभविष्यति ॥ १७ ॥

सं कलंजंनभक्षयेदितिवाक्येन निषिद्धमशितुंभोक्तुंशीलमस्येतिसकलंजाश्यभक्ष्यभक्षणशीलोमत्तउन्मत्तोजातः । यतोभवान्विपरीतानि
भाषतेएवमत्याक्रुष्टोभगवांस्तद्वाक्यस्य मत्तोमत्सकाशाज्जातःकलंजाशीविपरीतानिभाषतइत्यर्थंप्रकल्प्याह । सत्यमिति । यथापितात्वं
कलंजाशीविपरीतानिभाषसे तथात्वत्तस्त्वत्सकाशाज्जातउत्पन्नःकलंजभुक्विपरीतानिब्रवीतिभाषतइतिसत्यंयथार्थमेवेत्यर्थः ॥ १६ ॥
एवंपुनःपुनर्विपरीतंभगवद्वाक्यंश्रुत्वाप्रकारांतरेणाक्षिपति । कंथामिति । गर्दभेनापिदुर्वहांवोढुमशक्यांकंथांवहसि तथाचातिभारभूतां
कंथांवोढुंसमर्थस्यतेतव शिखायज्ञोपवीताभ्यांकोभारोभविष्यतिनकोऽपीत्यर्थः । स्वल्पभारभयादनल्पभारवाहकस्यतवाहोदुर्बुद्धितेतिसूच

यन्संवोधयति । हेदुर्बुद्धेइति ॥ १७ ॥ एवमाक्षिप्तोभगवानपिकौतुकादाक्षेपंप्रतिक्षिपन् शिखायज्ञोपवीताभ्यामित्यादेरुत्तरमाह । कंथा मिति । तवपित्रापिदुर्भरांस्त्रीभिस्तिरस्कृतेनपुनश्चतास्वेवप्रीतिमतागर्दभेनतवपित्रापिदुर्वहांकंथांशिखायज्ञोपवीतेविहायवहामि यतस्ता भ्यांपरीक्ष्यलोकान्कर्मचितान्ब्राह्मणोनिर्वेदमायात्यदहरेवविरजेत्तदहरेवप्रव्रजेत्ब्रह्मचर्याद्वागृहाद्वावनाद्वासंन्यस्यश्रवणंकुर्यात् । नकर्म णानप्रजयाधनेनत्यागेनैकेअमृतत्वमानशुः । अथपरिव्राडविवर्णवासामुंडोऽपरिग्रहइत्यादिश्रुतेर्भारोभविष्यति । सचवैदिकेनावश्यंमयाव रणीयः । पाठांतरे तु विधिनिषेधात्मिकाश्रुतिर्भारोभविष्यतीत्यर्थः । अतस्तद्भारविमोक्षणायकंथावाहकस्यममस्तुबुद्धित्वमविदित्वाहदुर्बुद्धि

कंथांवहामिदुर्बुद्धेतवपित्रापिदुर्भराम् ॥ शिखायज्ञोपवीताभ्यांश्रुतेर्भारोभविष्यति ॥ १८ ॥ त्य
क्त्वापाणिगृहीतींस्वामशक्त्यापरिरक्षणे ॥ शिष्यपुस्तकभारेप्सोर्व्याख्याताब्रह्मनिष्ठता ॥१९॥
गुरुशुश्रूषणालस्यात्समावर्त्यगुरोःकुलात् ॥ स्त्रियःशुश्रूषमाणस्यव्याख्याताकर्मनिष्ठता॥२०॥
स्थितोऽसियोषितांगर्भेताभिरेवविवर्धितः ॥ अहोकृतघ्नतामूर्खकथंताएवनिंदसि ॥ २१ ॥

त्वंवदतस्तवाहोदुर्बुद्धितेतिध्वनयन्संवोधयतिहेदुर्वद्धेइति ॥ १८ ॥ संन्यासंविनाब्रह्मनिष्ठतानसिद्ध्यतीतिशिखायज्ञोपवीतेमयात्यक्ते इति बोधकंभगवद्वाक्यंश्रुत्वामंडनआह । त्यक्त्वेति । स्वांस्वीयांपाणिगृहीतींभार्यांपरिरक्षणेऽशक्त्याविहायशिष्यपुस्तकभारेच्छोस्तवयाब्रह्म निष्ठतासाव्याख्याताऽहोलोकेप्रथिता ॥ १९ ॥ एवमाक्षिप्तस्तंप्रत्याक्षिपति । गुर्विति । गुरुशुश्रुषणेआलस्यात्गुरोःकुलात्समावर्त्यसमा वर्तनंविधायस्त्रियःशुश्रूषमाणस्यतवयाकर्मनिष्ठतासाव्याख्याता ॥ २० ॥ मंडनआह । स्थितइति । योषितांस्त्रीणांगर्भेस्थितोऽसिता भिरेवविवर्धितस्त्वंताएवकथंनिंदसीत्यहोहेमूर्ख तादृशस्त्रीकृतोपकारनाशकस्यतवकृतघ्नता ॥ २१ ॥ ॥ ॥

भगवानुवाच । यासामिति । यासांयोषितांस्तन्यंस्तनभवंपयस्त्वयापीतं यासांचयोनितोजातोऽसि तासुस्त्रीषुहेमूर्खतम पशुवत्कथंरमसे ॥ २२ ॥ मंडनआह । वीरेति । गार्हपत्याहवनीयदक्षिणाख्यान्वह्नीन्यत्नतःप्रयत्नेनोद्वास्य वीरस्येन्द्रस्यहत्यामवाप्तोऽसिप्राप्तोऽसि तथाचश्रुतिः वीरहावाएषदेवानांयोऽग्नीनुद्वासयति । एवमाक्रुष्टोभगवानुवाच आत्मेति । परंपदंपरमात्मस्वरूपमविदित्वाआत्महत्यामवाप्तःप्राप्तः । असन्नेवसभवति । असद्ब्रह्मेतिचेद्वेद असुर्यानामतेलोकाअंधेनतमसावृताः । तांस्तेप्रेत्याभिगच्छंतियेकेचात्महनोजनाः । अन्यथासंतमात्मानंयोऽन्यथाप्रतिपद्यते । किंतेननकृतंपापंचौरेणात्मापहारिणाइत्यादिश्रुतिस्मृतिभ्यः॥ २३ ॥ एवंवाक्यचातुर्येणप्रतिबद्धोमंड

यासांस्तन्यंत्वयापीतंयासांजातोऽसियोनितः ॥ तासुमूर्खतमस्त्रीषुपशुवद्रमसेकथम् ॥ २२ ॥
वीरहत्यामवाप्तोऽसिवह्नीनुद्वास्ययत्नतः ॥ आत्महत्यामवाप्तस्त्वमविदित्वापरंपदम् ॥ २३ ॥
दौवारिकान्वंचयित्वाकथंस्तेनवदागतः ॥ भिक्षुभ्योऽन्नमदत्वात्वंस्तेनवद्भोक्ष्यसेकथम् ॥ २४ ॥
कर्मकालेनसंभाष्यस्त्वहंमूर्खेणसंप्रति ॥ अहोप्रकटितंज्ञानंयतिभंगेनभाषिणा ॥ २५ ॥

नः प्रकारांतरेणाक्षिपति । दौवारिकानिति । द्वारपालान्वंचयित्वाचोरवत्कथमागतः । प्रत्याक्षिपतिभगवान् । भिक्षुभ्यइति । भिक्षुभ्योऽन्नंतेषांभागमदत्वास्तेनवत्कथंभोक्ष्यसे ॥ २४ ॥ एवंप्रत्युत्तरैःपराजितोवक्तुमशक्तःसन्मंडनआह । कर्मेति । संप्रतीदानींकर्मकालेऽहंमूर्खेणत्वयासंभाषणयोग्योनभवामि । एवमुक्तोभगवानुवाच । अहोइति । यतौपाठविच्छेदेभंगेनभेदेनविसंधिनाभाषणकर्त्रात्वयाहोज्ञानंप्रकटितम् ॥ २५ ॥ ॥ ॥ ॥ ॥ ॥ ॥

मंडनआह। यतीति। यतेस्तवभंगेप्रवृत्तस्यममतत्सूचकोयतिभंगोनदोषभाक्दोषयुक्तोनभवतीत्यर्थः। एवमुक्तोभगवानुवाच। यतिभंगइति। यतिभंगेप्रवृत्तस्येत्यत्रयतेःसकाशाद्भंगइतिपंचम्यंतंसमस्यतां नतुषष्ठ्यंतं तथाचयतेःसकाशाद्भंगेजयविपर्ययेसतिप्रवृत्तस्ययतिभंगोदोषभाग्नभवतीतित्वद्वाक्यार्थः ॥ २६ ॥ मंडनआह। क्वेति ॥ २७ ॥ भगवानुवाच। क्वस्वर्गइति ॥ २८ ॥ उपसंहरति। इत्यादीति। दुर्वाक्यगणंसाहंकृतिविश्वरूपेरोषेणब्रुवाणे श्रीशंकरेचतस्यतस्यवचनस्योत्तरंचारुसुंदरंकौतुकादेवनतुकोपाद्वक्तरिसति तंमंडनंव्या

यतिभंगेप्रवृत्तस्ययतिभंगोनदोषभाक् ॥ यतिभंगेप्रवृत्तस्यपंचम्यंतंसमस्यताम् ॥ २६ ॥ क्व ब्रह्मक्वचदुर्मेधाःक्वसंन्यासःक्ववाकलिः ॥ स्वाद्वन्नभक्षकामेनवेषोऽयंयोगिनांधृतः ॥ २७ ॥ क्व स्वर्गःक्वदुराचारःक्वाग्निहोत्रंक्ववाकलिः ॥ मन्येमैथुनकामेनवेषोऽयंकर्मिणांधृतः ॥ २८ ॥ इत्यादिदुर्वाक्यगणंब्रुवाणेमंडनेरुषा ॥ तथाश्रीशंकराचार्येकौतूहलयुतेकिल ॥ २९ ॥ मंडनंतंतथादृष्ट्वास्मितवज्जैमिनीक्षितम् ॥ व्यासःप्राहवदत्वंमादुर्वचोवत्सयोगिनम् ॥ ३० ॥ अभ्यागतःस्वयंविष्णुरतएनंनिमंत्रय ॥ अथतोयमुपस्पृश्यमंडनोव्यासशासनात् ॥ ३१ ॥ भैक्षार्थंसयथाशास्त्रंयतिवर्यंन्यमंत्रयत् ॥ सचाहविश्वरूपंतंमंडनाख्यंयतीश्वरः ॥ ३२ ॥ ॥

सोऽब्रवीदितिपरेणान्वयः। आदिपदेन किंजडोजडतादेहेभौतिकेनचिदात्मनि। किमभाग्योऽसियत्यर्चारहितोऽभाग्यउच्यते। किंदूपकोऽसिपापेनदूषितोजायतेनरः। चोरैरुपाश्रितःकिंत्वंसतुषड्वर्गपीडितः। अप्रार्थितःकिमर्थंत्वंसमायातोगृहेमम। तवभाग्यवशाद्विष्णुरहमत्रसमागत इत्यादिवाक्यजातंग्राह्यम् ॥ २९ ॥ ३० ॥ ३१ ॥ एवंभैक्षार्थंनिमंत्रितोयतिवरःकिमुक्तवानित्यपेक्षायामाह। सचेति ॥ ३२ ॥

॥ ३३ ॥ ननु वादवादांस्त्यजेत्तर्कान्नपक्षंकंचनाश्रयेदितिनिषिद्धांवादभिक्षांकथंयाचसइतिचेत्तत्राह । नेप्सितमिति । तथाचस्वरूया त्याद्यर्थवादाद्याश्रयणनिषेधपरमुदाहृतवाक्यंनतूक्तप्रथितवादाश्रयणनिषेधपरम् एतादृशवादस्यलोकोपकारकत्वादितिभावः॥३४॥३५॥



इच्छन्विवादसद्भिक्षांभवत्सन्निधिमागतः ॥ सान्योन्यशिष्यभावत्वपणादेयानलौकिकी ॥३३॥
नेप्सितंमेविनाम्नायशिरःसिद्धांतमंगसः ॥ तिरस्कृतस्त्वयेदानींकर्मठेनप्रियोमम ॥ ३४ ॥
तमेवप्रथयाम्यद्यजित्वाहंसर्ववादिनः ॥ आश्रयस्वत्वमप्यद्यब्रह्माद्वैतमतंमम ॥ ३५ ॥ साम
र्थ्यंचेत्तवब्रह्मन्विवादंकुरुयुक्तिभिः ॥ नोचेत्त्वयाजितोऽस्मीतिवदत्वंमेऽग्रतःस्फुटम् ॥ ३६ ॥
इत्थंवचःसमाकर्ण्यमंडनोवाक्यमब्रवीत् ॥ अपिशेषेणकाणादगौतमाभ्यांसहैवचेत् ॥ ३७ ॥
विवादःस्यात्तथाप्यद्यनजितोऽस्मीत्यहंवदे ॥ वेदमार्गपरित्यज्यनान्यंपंथानमाश्रये ॥ ३८ ॥
अपिलोकेभवेत्कश्चित्कोविदःश्रुतिनिर्णये ॥ तेनसार्धंभवेद्वादोवांछासीदितिमेसदा ॥ ३९ ॥
अस्तुवादकथेदानीमावयोःफलतुश्रमः ॥ शृण्वंतुकोविदालोकेवेदवाक्यार्थनिर्णयम् ॥ ४० ॥
अत्यल्पंभवताप्रोक्तंसाहसान्नविचारतः ॥ भिक्षांवादकथांदेहीत्येवंनाहंश्रुतस्त्वया ॥ ४१ ॥
संप्रवृत्तेमयावादेनवदिष्यसिपूर्ववत् ॥ विधेहित्वंप्रतिज्ञांस्वांविधास्येऽहमपिध्रुवम् ॥ ४२ ॥



॥ ३६ ॥ ३७ ॥ ३८ ॥ इदंतुममाभिलषितमेवसिद्धमित्याशयेनाह । अपीति ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ॥ ॥

वाद्रीतिंदर्शयति । विधत्तइति ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ आदिपदेन्चोष्यग्रहः ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ सःश्रीशंक

विधत्तआत्मनःपक्षंद्वौवादिप्रतिवादिनौ ॥ मध्यस्थोऽत्रभवेत्कोवासपणौनौजयाजयौ ॥ ४३ ॥
विवादानंतरंनित्यंवदावःसुस्मितौमुने ॥ श्वोभविष्यतिवादोऽयंकुर्यामद्याह्निकींक्रियाम् ॥४४॥
अस्त्वेवंशंकरेणोक्तोमिश्रोऽप्याहमुनिद्वयम् ॥ व्रजतंसाक्षितांवांनौविवादेव्यासजैमिनी ॥ ४५ ॥
इत्थंश्रुत्वोचतुर्विप्रंतवभार्यासरस्वती ॥ साभविष्यतिमध्यस्थासदस्याहीविनिर्णये ॥ ४६ ॥
तदुक्तमभिनंद्याथचिकीर्षुःप्रकृतंद्विजः ॥ समभ्यर्च्यमुनीन्भोज्यैर्भक्ष्यैर्लेह्यादिसंयुतैः ॥ ४७ ॥
भोजयित्वासविधिवद्धर्षेणमहतान्वितः ॥ भुक्तोपविष्टमुनिभिर्मुहूर्तंकथयन्कथाः ॥ ४८ ॥
मंडनोऽपिमुनीनांचानुज्ञामादायभुक्तवान् ॥ व्यासोजैमिनिनासार्धंतत्रैवांतर्बभूवह ॥ ४९ ॥
भाष्यकारोऽपिरेवायास्तटेदेवालयंययौ ॥ तद्दिनंविश्वरूपोऽपिस्वगृहेनीतवान्मुदा ॥ ५० ॥
ततोद्वितीयदिवसेप्रातःकृत्यंविधायसः ॥ सशिष्योमंडनगृहंययौशिष्यसमन्वितः ॥ ५१ ॥
भाष्यकारंप्रणम्यादौमंडनश्चातिहर्षतः ॥ स्थितस्तत्रैवबोधाब्जभास्करःशंकरोऽपितम् ॥ ५२ ॥
अभिनंद्यसभामध्येसशिष्योहर्षसंयुतः ॥ वेदार्थनिर्णयेतस्थौकौतूहलकरोमुनिः ॥ ५३ ॥ ततो
द्वयोर्मिथोवार्ताःप्रवृत्तावेदगर्भिताः ॥ सदस्यत्वेस्थितासाध्वीसर्वज्ञासासरस्वती ॥ ५४ ॥

रः ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ॥ ॥ ॥ ॥ ॥ ॥

॥ ५५ ॥ ५६ ॥ श्रुतीनासम्यगन्वयात्तात्पर्येणतत्रैवपर्यवसानान्महात्मनांब्रह्मविदास्वानुभूत्या ॥ ५७ ॥ ५८ ॥ ५९ ॥ एतत्संभावयितुंदृष्टांतत्रयमाह । शुक्तीति ॥ ६० ॥ एवंस्वदर्शनविषयंप्रतिज्ञायतत्फलंप्रतिजानीते । सदिति ॥ ६१ ॥ एकमेवाद्वितीयं सत्यंज्ञा

तयोर्विवादेसंवृत्तेसाविवेक्तुंमुदान्विता ॥ यतेर्महत्त्वंसंचिंत्यस्थितावेदपरायणा ॥ ५५ ॥ ततः श्रीशंकराचार्यःप्रतिजज्ञेस्वयंमुदा ॥ ब्रह्माद्वैतमतंसम्यक्परिष्कर्तुंसमन्वयात् ॥ ५६ ॥ श्रुतीनांयुक्तिभिःस्वानुभूत्यासिद्धंमहात्मनाम् ॥ उवाचाथसभामध्येविश्वरूपंप्रतिप्रभुः ॥ ५७ ॥ शृणुत्वंभोद्विजश्रेष्ठवेदार्थंप्रवदाम्यहम् ॥ ब्रह्मैकंसच्चिदानंदंस्वात्मभूतंनिरंजनम् ॥ ५८ ॥ सर्वेषांवेदवाक्यानांप्रतिपाद्यंयदद्वयम् ॥ तदज्ञानावृतंभूत्वाभातिविश्वात्मनास्वयम् ॥ ५९ ॥ शुक्तीरूप्यात्मनायद्वद्रज्जुःसर्पात्मनायथा ॥ स्वपर्यंकेयथासुप्तोराजारंकात्मनातथा ॥ ६० ॥ सच्चिदानंदब्रह्मैक्यबोधानंतरमेवहि ॥ अज्ञानंसहकार्येणनासीदस्तिभविष्यति ॥ ६१ ॥ इत्थंजीवजगद्भ्रांतिबाधकालेस्वयंभवेत् ॥ स्वरूपावस्थितिर्मुक्तिर्वेदांतामानमत्रहि ॥ ६२ ॥ यथा सत्यंपरंब्रह्मप्रमाणंश्रुतयोयथा ॥ तथाजयेविवादेऽस्मिन्नत्रमेनास्तिसंशयः ॥ ६३ ॥ ॥

नमनंतं विज्ञानमानंदंब्रह्म सर्वंखल्विदंब्रह्म वाचारंभणंविकारोनामधेयंमृत्तिकेत्येवसत्यं तरतिशोकमात्मवित् तत्रकोमोहःकःशोकएकत्वमनुपश्यतः विमुक्तश्चविमुच्यत इत्यादिवेदांताअत्रप्रमाणम् ॥ ६२ ॥ अत्रममैवविजयइतिनिर्धारयति । यथेति ॥ ६३ ॥ ॥



१. स्वपर्यंकेयथासुप्तः सार्वभौमोऽसपत्नकः ॥ रंकात्मनादरिद्रेण भातिदुःखयुतोभ्रमात् ॥ तथात्मरूपमेवात्रस्वेमहिम्निप्रतिष्ठितम् ॥ भूत्वाज्ञानावृतंब्रह्मजीवरूपेणभासते ॥ इतिपाठांतरम् ।

॥ ६४ ॥ एवमाचार्यकृतप्रतिज्ञांसपणामुदाहृत्यमंडनकृतांतांसपणामुदाहर्तुमाह । भाष्यकारेति ॥ ६५ ॥ कथमितिचेत्परब्रह्मणःसिद्धत्वेन कार्यरूपत्वाभावात्तद्विषयत्वाभावादित्याह । साध्याभावादिति । ननु ब्रह्मणःकार्यरूपत्वाभावेऽपिवेदांतविषयताकिंनस्यादिदिततत्राह । आनर्थक्यमिति ॥ ६६ ॥ इदमपिकुतइत्यतआह । शब्दानामिति । प्रमाणतःमध्यमवृद्धप्रवृत्तिलिंगरूपात्प्रमाणात् ॥ ६७ ॥ मुक्तिस्तर्हि कथंभविष्यतीतितत्राह । मोक्षइति । तथाचातिक्लेशेनतदर्थेब्रह्मज्ञानाभ्युपगमोऽपार्थइत्याह । अतइति । अतोभवदभिमतंज्ञानंव्यर्थंप्रयो

पराजयोयदिभवेत्तदापिशृणुमंडन ॥ वसीयवसनंशुक्लंपरिहृत्यकषायकम् ॥ ६४ ॥ भाष्यकारवचःश्रुत्वामंडनोवाक्यमब्रवीत् ॥ ब्रह्माद्वयेप्रमाणंनोवेदांताःस्युःकथंचन ॥ ६५ ॥ साध्याभावात्परंब्रह्मविषयोऽत्रकथंभवेत् ॥ आनर्थक्यंहिवाक्यानामक्रियाणांभवेद्यतः ॥ ६६ ॥ शब्दानांकार्ययुक्तेऽधिगताशक्तिःप्रमाणतः ॥ कार्यहीनंपरंब्रह्मप्रतिपाद्यंकथंश्रुतेः ॥ ६७ ॥ मोक्षःकर्मभ्यएवस्याज्ज्ञानंव्यर्थमतोमतम् ॥ यावज्जीवंत्यजेन्नैवकर्मवेदप्रचोदितम् ॥ ६८ ॥ फलप्रदंयतःकर्मनेश्वरोऽप्यस्तिकश्चन ॥ वेदस्यसर्वथाधर्मेप्रामाण्यंनेतरत्रच ॥ ६९ ॥ एवंवादेकृतेस्वामिन्वेदवाक्यैर्नयान्वितैः ॥ पराजयोयदिस्यान्मेतदात्यक्त्वागृहाश्रमम् ॥ ७० ॥

जनशून्यं । तस्यान्यथासिद्धत्वात् । किंचयावज्जीवमग्निहोत्रंजुहुयादितिश्रुत्यासाधनांतरानवसरप्रतिपादनाद्यावज्जीवंतदेवानुष्ठेयंनतु तद्विहायान्यदित्याह । यावदिति ॥ ६८ ॥ ननुकर्मणईश्वराराधनरूपत्वात्तस्यवेदप्रतिपाद्यत्वेकर्मस्वरूपमपिनसिध्येत्फलदातृत्वंचतस्यदुर्घटमित्याशंक्यवैषम्यादिदोषविनिर्मुक्त्यर्थंकर्मानुसरणस्यावश्यकतया तेनैवस्वतंत्रतयावेदबोधितेनगतार्थत्वईश्वराभ्युपगमोऽप्यनर्थकइत्याशयेनाह । फलप्रदमिति । उपसंहरति । वेदस्येति ॥ ६९ ॥ ७० ॥ ॥ ॥ ॥ ॥

॥ ७१ ॥ ७२ ॥ एवंवादिकृत्यमुक्त्वासाक्षिकृत्यमाह । एवमिति ॥ ७३ ॥ ७४ ॥ ७५ ॥ ७६ ॥ अथेति । वेदाःसाक्षिणोयत्रसवेद साक्षी प्रमोदेत्यादेरुत्तरेणान्वयः । अभिप्रायांतरेणप्रयुक्तस्यशब्दस्यार्थांतरंप्रकल्प्यदूषणाभिधानंछलम् ॥ ७७ ॥ ७८ ॥ किंचवादात्मक



त्वच्छिष्यत्वमुपादायकरिष्येदंडधारणम् ॥ अत्रमेसाक्षिणीभार्याजयाजयफलप्रदा ॥ ७१ ॥ एवंकृतपणौतौद्वौवेदवादेसमुद्यतौ ॥ प्रत्यहंद्व्याह्निकंकृत्वावादंव्यतनुतांसमम् ॥ ७२ ॥ एवंवि जेतुमनसोर्गलेमालांनिबध्यसा ॥ अब्रवीद्भारतीमालामयावद्धायदात्वियम् ॥ ७३ ॥ म्लाना कंठेभवेद्यस्यतदातस्यपराजयः ॥ एवमुक्त्वागृहंसापिगताकर्मरताभवत् ॥ ७४ ॥ मध्याह्नेत त्रसागत्यसंबोध्याहयतिंपतिम् ॥ स्वामिन्भिक्षार्थमागच्छभोजनायार्यपुत्रक ॥ ७५ ॥ एवं तयोःसदावादंश्रोतुंब्रह्मादयोऽमराः ॥ अंतर्धायस्वमात्मानंसभायांतत्रसंस्थिताः ॥ ७६ ॥ अ थवेदविदोरासीत्तयोर्मीमांसयोर्द्वयोः ॥ विषयेसमहावादोवेदसाक्षीरसान्वितः ॥ ७७ ॥ प्रमो दपूर्वकंवाक्यंछलक्रोधविवर्जितम् ॥ तयोर्वादेऽभवद्वेदसिद्धांतनयसंयुतम् ॥ ७८ ॥ नानायुक्तियु तंश्रौतंमहद्विस्मयकारकम् ॥ अभूद्दिव्यमलंवादशास्त्रमेवमहात्मनोः ॥ ७९ ॥ एवंदिवसषट्कं चयदावादःसमोऽभवत् ॥ तदामंडनमिश्रेणसप्तमेदिवसेगृहे ॥ ८० ॥ आहूतोभाष्यकारोऽपि सभायांतस्थिवान्मुदा ॥ अथमिश्रोऽब्रवीद्वाक्यंपरसिद्धांतखंडने ॥ ८१ ॥ ॥ ॥

मेकंशास्त्रमेवाभूत् ॥ ७९ ॥ ८० ॥ परसिद्धांतखंडनार्थम् ॥ ८१ ॥ ॥ ॥ ॥ ॥

भोभोइति । नन्वुक्तएवसिद्धांतइत्याशंक्य तत्रमानाभावात्सनसंभवतीत्याह । जीवेशयोरिति ॥ ८२ ॥ तत्रेति । ननुवेदांतास्तत्रप्रमाणमित्युक्तमेवतन्नश्रुतंचेत्तर्हिपुनर्वदामि सावधानतयाश्रृण्वित्याह । श्रृण्विति ॥ ८३ ॥ अत्रेति । मुखपदेननचिकेताग्राह्यस्तथाचाहोद्दालकस्तत्त्वमसिश्वेतकेतोइति प्रभृतिपदेनयमोग्राह्यः ॥ ८४ ॥ ८५ ॥ एवमुक्तोमंडनश्चाह । मैवमिति ॥ ८६ ॥ कुतोनास्तीतिचेत्तत्राह । स्वाध्यायेति । स्वाध्यायोऽध्येतव्यइतिविधिनागृहीतोवेदःफलवदर्थाववोधकएवयुक्तोऽन्यथाविधिवैयर्थ्यप्रसंगात् । फलवांश्चात्रसर्वेषुपदा

भोभोयतीश्वरत्वंमेवदसिद्धांतमात्मनः ॥ जीवेशयोर्भवद्भिस्तुयदैक्यंस्वीकृतंद्वयोः ॥ ८२ ॥
तत्रमानंनपश्यामोह्यस्तिचेद्वदमेऽग्रतः ॥ प्रत्युवाचद्विजंभिक्षुःश्रृणुवेदवचांसिभोः ॥ ८३ ॥ अ
त्रप्रमाणमेवाद्धाश्वेतकेतुमुखान्मुनीन् ॥ उद्दालकप्रभृतयोह्यैक्यंसंग्राहयंतितत् ॥ ८४ ॥ स्प
ष्टमेतद्धिछांदोग्यकाठकादौश्रुतिव्रजे ॥ कथंमानंनवास्तीतित्वमप्यत्रवदस्वनः ॥ ८५ ॥ मैवं
वेदांतवाक्यानांप्रामाण्यंब्रह्मवस्तुनि ॥ नैवास्त्यतोनपश्यामोमानमैक्येपरात्मनोः ॥ ८६ ॥
स्वाध्यायविधिनावेदःफलवत्स्वार्थबोधकः ॥ फलवानत्रधर्मोऽस्तिप्रामाण्यंतत्रतस्यच ॥८७॥
ब्रह्मणःसिद्धरूपत्वान्निष्फलत्वेनसर्वथा ॥ प्रामाण्यंतत्रवेदांतालभेरन्कथमंजसा ॥ ८८ ॥ ब्र
ह्ममानांतरैर्योग्यंनवाप्यंत्येकथंतव ॥ वेदेशक्तिग्रहस्तस्ययोग्यंचेदस्तितत्तदा ॥ ८९ ॥ ॥

र्थेषुमध्येधर्मएवातोधर्मएवतस्यवेदस्यप्रामाण्यम् ॥ ८७ ॥ ननुधर्मस्यफलवत्त्वेऽपिब्रह्मणोनिष्फलत्वंकुतइतिचेत्तत्राह । ब्रह्मणइति । अयमर्थः । वेदांताब्रह्मणिप्रमाणंभवितुंनार्हंति । शुद्धबुद्धोदासीनतयोपेक्षणीयसिद्धब्रह्मोपदिशतांतेषामप्रयोजनत्वप्रसंगात् ॥ ८८ ॥ किंच । वेदातप्रतिपाद्यंब्रह्ममानांतरयोग्यमयोग्यंवा नांत्यः । शक्तिग्रहाभावाद्वेदप्रतिपाद्यत्वासिद्धेरित्याह । ब्रह्मेति । द्वितीयमनुवदति । तद्ब्रह्ममा

नांतरयोग्यंचेदिति ॥ ८९ ॥ मानांतरस्येति । तदाश्रुतिर्मानांतरसंवादेसतिब्रह्मात्मबोधिकाकिंवातद्विसंवादइतिविकल्प्याद्यंप्रत्याह । आद्यइति । अनधिगतार्थगंतृत्वाभावात् ॥ ९० ॥ द्वितीयंप्रत्याह । द्वितीयइति । प्रमाणांतरबाधितार्थविषयत्वाभावाद्यतोवेदांतानां सिद्धब्रह्मपरत्वंनयुक्तं तस्मात्क्रियाशेषत्वंकर्मविधिशेषत्वम् ॥ ९१ ॥ ननुकर्मकांडवाक्यानांतथात्वेऽपिवेदांतानांस्वार्थसिद्धवस्तुपरत्वेनप्रामाण्यमभ्युपेयमन्यथास्वाध्यायविध्युपात्तानांतेषांवैयर्थ्यप्रसंगादित्याशंक्याह । नेति । विधिनिषेधार्थवादादिषुक्कचिददृष्टाप्यर्थवत्तायुक्तिवशादादेष्टुंशक्येत्याशंक्योक्तविधयानुपपन्नत्वान्नैवमित्याह । युक्तावेति । ननुपूषाप्रपिष्टभागइत्यत्रयागाविनाभूतद्रव्यदेवतासंबंधबुद्ध्या

मानांतरस्यसंवादेविसंवादेऽथवाश्रुतिः ॥ ब्रह्मात्मबोधिकाद्येतुश्रुतिःस्यादनुवादिनी ॥ ९० ॥
द्वितीयेतद्विरोधित्वाद्बोधिकासाकथंभवेत् ॥तस्माद्वेदांतवाक्यानांक्रियाशेषत्वमिष्यताम् ॥९१॥
नक्कचिद्वेदवाक्यानांविधिसंस्पर्शमंतरा ॥ दृष्टार्थवत्तायुक्तावासिद्धेनोविधिसंभवः ॥ ९२ ॥ ततः
क्रत्वर्थकर्त्रादिप्रकाशकपराअमी ॥ हुंफडादिवदेवैषामुताहोस्तुजपार्थता ॥ ९३ ॥ इत्युक्त
आहतंवाचंयमेशःशंकरस्तदा ॥ नैवंवेदांतवाक्यानांयस्मिंस्तात्पर्यतोऽन्वयः ॥ ९४ ॥ ॥

यागविधिकल्पनाद्वेदांतानामपिस्वार्थेविधिंप्रकल्प्यार्थवत्त्वांकिंकर्मविधिशेषत्वेनेत्याशंक्याह । सिद्धइति ॥ ९२ ॥ तर्हिकथंवेदांतानामर्थवत्तेत्याशंक्याह । ततइति ॥ ९३ ॥ एवंमंडनवचांस्युदाहृत्यश्रीशंकरमुनीशवचनान्युदाहर्तुमाह । इतीति । प्रत्यगभिन्नेब्रह्मणिवेदांतानप्रमाणमित्युक्तमयुक्तं सदेवसोम्येदमग्रआसीदेकमेवाद्वितीयं आत्मावाइदमेकएवाग्रआसीत्तदेतद्ब्रह्मापूर्वमनपरमनंतरमबाह्यमयमात्मासर्वानुभूःब्रह्मैवेदममृतंपुरस्तादित्यादिवेदांतवाक्यानांतत्रतात्पर्येणसमन्वितानामन्यथात्वकल्पनायोगादित्याह । नैवमिति ॥ ९४ ॥

॥ ९५ ॥ यत्तुब्रह्मणःसिद्धरूपत्वान्निष्फलत्वेनेत्युक्तंतत्राह । सिद्धेति ॥ ९६ ॥ ब्रह्ममानांतरैर्योग्यंनवेत्युक्तमनूद्यदूषयति । यत्त्विति । ब्र
ह्मणःसिद्धेऽपिमानांतरायोग्यत्वेनतत्संवादविसंवादाभावादनधिगताबाधितार्थविषयत्वेनवेदांतानामुपपद्यतेप्रामाण्यमन्यथेतरेंद्रियाग्राह्य
रूपादिग्राहकचक्षुरादेरप्रामाण्यप्रसंगादित्याशयेनाह । तदसारमिति । प्रत्यगभिन्नःपरःपरमात्मा ॥ ९७ ॥ नेति । तथाचैवंविधस्यपर
स्यपुंसोनास्तितत्त्वमस्यादिशास्त्रमंतरेणेतरप्रमाणावगम्यतेतिबोधनायबहुभिर्विशेषणैर्विशिनष्टि । कूटस्थइत्यादिना । कूटस्थोनिर्विकारो
यतोनित्यःसर्वदैकरसःयतएकएवमायायाअपितत्रकल्पितत्वेनस्वतःशुद्धोयतोवस्तुतोमायामलात्सर्वदाविनिर्मुक्तस्ततोजन्मादिभावविका

तंविहायान्यपरताकल्पनंसांप्रतंनहि ॥ श्रुतहानेरश्रुतस्यकल्पनायाःप्रसंगतः ॥ ९५ ॥ सिद्ध
ब्रह्मपराणांनोश्रुतीनांफलशून्यता ॥ सिद्धब्रह्मावबोधेनसर्वक्लेशनिवृत्तितः ॥ ९६ ॥ यत्तुमा
नांतरैर्योग्येनवेत्यादिप्रलापनम् ॥ तदसारंयतःप्रत्यगभिन्नःश्रुतिगःपरः ॥ ९७ ॥ नसमानां
तरैर्गम्यःकूटस्थोनित्यएकलः ॥ स्वतःशुद्धोविमुक्तोऽजःसमोज्ञानसुखात्मकः ॥ ९८ ॥ नत
त्रभासकोभानुर्नचंद्रोनचतारकाः ॥ नैवचक्षुःप्रभृतयोनशब्दोलौकिकप्रथा ॥ ९९ ॥ ॥

रशून्योऽतोविषमत्वाक्रांताखिलोपाधिषुविनश्यत्स्वप्यविनाशिरूपतयावैषम्यविनिर्मुक्तएवंभूतोऽपिजडासुखरूपश्चेत्किंतत्प्रतिपादनेनेतित
त्राह । ज्ञानसुखात्मकइति ॥ ९८ ॥ नतत्रसूर्योभातिनचंद्रतारकंनेमाविद्युतोभांतिकुतोऽयमग्निः नचक्षुषागृह्यते अशब्दमस्पर्शमरूपमव्य
यं नतद्भासयतेसूर्योनशशांकोनपावकइत्यादिश्रुतिस्मृतिभ्यःप्रमाणांतराविषयःपरमात्मेत्याह । नतत्रेति । ननुयतोवाचोनिवर्तंतइति
श्रुत्याशब्दागम्यतायाअप्यभिहितत्वादुपनिषत्प्रतिपाद्यत्वमपितस्यकथमित्याशंक्य तंत्वौपनिषदमितिश्रुतिविरोधादुक्तश्रुतेर्लौकिकशब्दपर
त्वान्मैवमित्याह । नशब्दइति ॥ ९९ ॥ ॥ ॥ ॥ ॥ ॥ ॥

ननुप्रमाणांतरागम्यत्वमसिद्धमहंप्रत्ययगम्यत्वादित्याशंक्याह । यस्त्विति ॥१००॥ ननुसएवोक्तप्रत्ययगोचरःकुतोनांगीक्रियतइत्याशंक्य देहादितादात्म्यापन्नकर्तृत्वाद्याश्रयगोचरप्रत्ययस्यतद्विलक्षणविषयत्वानुपपत्तेर्मैवमित्याह । असंसर्गीति ॥ १ ॥ नन्वस्तुतत्प्रत्ययविषयस्यपारमार्थिकत्वेनप्रत्ययस्यप्रामाण्यमित्याशंक्याभियुक्तैर्देहाभिमानादेःपरमानर्थरूपताभिधानान्मैवमित्याह । इयमेवेति ॥ २ ॥ सेति । कालसूत्राख्यनरकस्यपदवीमार्गभूता महावीचिसंज्ञकनिरयस्यवागुरापाशा ॥ ३ ॥ यत्तुनक्वचिदित्यादिनोक्तंतदनूद्यदूषयति ।

यस्त्वहंप्रत्ययेभातिभ्रांतिसिद्धःशरीरवान् ॥ कर्तृत्वाद्याश्रयोमातानसआत्मापरःपुमान् ॥१००॥
असंसर्गीनिरालंबोदेहादिभ्योविलक्षणः ॥ परमात्माकथंमिथ्याप्रत्ययेगोचरोभवेत् ॥ १ ॥
इयमेवमहापीडादुःखसीमापराह्यसौ ॥ इयमेवमहाविद्यायादेहेऽहमितिस्थितिः ॥ २ ॥ साकालसूत्रपदवीसामहावीचिवागुरा ॥ सासिपत्रवनश्रेणीयादेहेऽहमितिस्थितिः ॥ ३ ॥ विनानियोगतच्छेषौसिद्धवस्त्ववबोधकः ॥ वेदभागोऽत्रनास्तीतियदुक्तंतन्नसांप्रतम् ॥ ४ ॥ वेदांताःसंतिनिःसंगब्रह्मात्माद्वयबोधकाः ॥ शतशस्तत्रनास्तीतिवाक्यंसाहसहेतुकम् ॥ ५ ॥ वेदांतमात्रगम्यस्यपुरुषस्यान्यशेषता ॥ वक्तुंनशक्यतेयुक्त्यापरस्यासंगिनोद्विज ॥ ६ ॥ ॥

विनेति ॥ ४ ॥ फलपर्यंतात्मविज्ञानार्थकानांवेदांतानांशतशउपलंभादितिहेतुमाह । वेदांताइति । तथाचसफलत्वेनप्रामाण्यसिद्धौनतदर्थंकर्मविधिशेषत्वंतेषांन्याय्यमितिभावः ॥ ५ ॥ किंच । प्रमाणांतरसिद्धस्यप्रतिपादनेप्रयोजनाभावात्तदनुवादस्यविधिशेषार्थतास्तु न प्रकृतेतथेत्याशयेनाह । वेदांतेति ॥ ६ ॥ ॥ ॥ ॥ ॥ ॥ ॥

यत्तुक्तत्वर्थकर्त्रादिपरत्वंवेदांतानामुक्तं तत्रकिंस्वार्थंबोधयंतस्तत्पराउततदबोधयंतइतिविकल्प्यकर्तृत्वादिविनिर्मुक्तात्मस्वरूपबोधकानांवेदांतानांकर्तृनिष्ठत्वंव्याहतमित्याद्यंनिराचष्टे । कर्तृत्वादीति ॥ ७ ॥ द्वितीयंप्रत्याह । स्वतइति । ब्रह्मात्मपरत्वेनातिस्पष्टतयोपलभ्यमानानांतेषांतत्परत्वाभाववर्णनेनकर्तृस्तावकत्वजपार्थत्वकथनमत्ययुक्तमितिभावः ॥ ८ ॥ किंचज्ञानकांडस्थासंसार्यात्मनःकर्मकांडस्थविधिशेषत्वमनुपपन्नमित्याह । योऽसाविति ॥ ९ ॥ किंच । नेतिनेत्यात्मेत्यादिश्रुत्यासर्वोपाधिनिषेधावधिभूततयावगम्यमानतयासनास्तीतिप्रत्याख्यातुस्तद्व्यतिरिक्तस्याभावात्स्वस्यस्वेनप्रत्याख्यानायोगाद्वेदांतप्रतिपाद्यआत्मानास्त्यतस्तद्बोधोऽपितैर्नभवतीत्यतिसाहसमुच्य

कर्तृत्वादिविहीनस्यवेदांताबोधकायदि ॥ कर्तृनिष्ठत्वमेवैषांवचस्तर्ह्यतिसाहसम् ॥ ७ ॥ स्वतःप्रमाणतायेषांब्रह्मवस्तुनिकेवले ॥ स्तावकत्वंजपार्थत्वंकथंतेषांभवेद्वद ॥ ८ ॥ योऽसौवेदांतवाक्येषुपुरुषोऽधिगतःपरः ॥ असंसारीकथंसस्यादन्यशेषःस्वकांडगः ॥ ९ ॥ आत्मशब्दावगम्यत्वात्प्रतिख्यातुरभावतः ॥ सनास्तिनचतद्बोधोभवतीत्यतिसाहसम् ॥१०॥ इत्युक्तोमंडनःप्राहसिद्धेऽर्थेलौकिकायदि ॥ मानंशब्दास्तदेदंस्याच्छब्दशक्तिर्नियम्यते ॥ ११ ॥ कार्यान्वितेयदासिद्धंवस्तुशाब्दंतदानहि ॥ उपास्तिविधिनिष्ठत्वंवेदांतानामतोमतम् ॥ १२ ॥

तइत्युपसंहरति । आत्मेति ॥१०॥ लौकिकोक्तीनांमानांतरायत्तानांसिद्धेऽर्थेप्रामाण्यमुपेत्य कार्यार्थतामंतरेणानपेक्षफलवत्त्ववेदानांनास्तीत्युक्तब्रह्मात्मनोमानांतरायोग्यत्वेनतद्धीमात्रात्फललाभेनचतेषांतत्रप्रामाण्यस्थापनेनप्रत्युक्तंश्रुत्वा संप्रतिकार्यान्वितेशब्दशक्तिनियमान्नसिद्धंवस्तुशाब्दमितिवदतामुपास्तिविधिनिष्ठान्वेदांतानिच्छतांमतमालंब्यमंडनउवाचेत्याह । इतीति । कार्यान्वितेशब्दशक्तिर्यदानियम्यतेतदेत्यन्वयः ॥ ११ ॥ १२ ॥ ॥ ॥ ॥ ॥ ॥ ॥

लोकेमध्यमवृद्धप्रवृत्त्याकार्यान्वितएवशक्तिग्रहदर्शनादित्याह । गामिति ॥ १३ ॥ १४ ॥ १५ ॥ तत्रेति । ननुलौकिकशब्दानांतथात्वेऽपि वैदिकानांकथंकार्यान्वितेशक्तिरित्याशंक्याह । लौकिकइति ॥ १६ ॥ कार्येति । ननुलोकेऽपिनायंनियमो राजासौगच्छतीत्यादीनांकार्यानन्वितस्वार्थबोधकत्वस्यापिदर्शनादित्याशंक्याह । कार्येति ॥ १७ ॥ तथापीति । तस्मात्कार्यान्वयंविनाशब्दानांबोधकत्वंकापिनास्तीत्याह । ऋतइति ॥ १८ ॥ किंचफलंविनावाक्यप्रयोगासिद्धेः कृतिसाध्यस्यचफलत्वाद्वेदांतानांसफलत्वसिद्धयेनियोगनिष्ठतावश्य

गामानयेतिवृद्धेनप्रोक्तोऽसौमध्यमोजनः ॥ प्रवृत्तोबटुनादृष्टोगवानयनकर्मणि ॥ १३ ॥ ततोऽसौबटुरेवेत्थंविजानातिस्वयाधिया ॥ गवानयनकार्यंहिवाक्येनानेनबोधितम् ॥ १४ ॥ गांबधानानयेत्यादिप्रयोगेषुततोह्यसौ ॥ आवापोद्धारतोयुक्त्याप्येकैकस्यपदस्यच ॥ १५ ॥ तत्रकार्यान्वितेस्वार्थेसामर्थ्यमवगच्छति ॥ लौकिकेव्यवहारेऽसौव्युत्पत्तिःकार्यसंयुते ॥ १६ ॥ शब्दानामवगत्याथोवैदिकेसंप्रवर्तते ॥ कार्यशून्यानिवाक्यानिप्रयुज्यंतेकचिद्यदि ॥ १७ ॥ तथापितत्रतंपश्येदेवंशेषोऽवगम्यताम् ॥ ऋतेकार्यंनशब्दानांबोधकत्वंकचिद्भवेत् ॥ १८ ॥ वाक्यप्रयोगासंसिद्धेःकृतिसाध्यफलंविना ॥ अतोनियोगनिष्ठाःस्युर्वेदांताअपियुक्तिभिः ॥ १९ ॥ ब्रह्मश्रवणमात्रेणफलंनोपलभामहे ॥ श्रवणोत्तरकालेऽपिमननध्यानयोर्विधेः ॥ १२० ॥ ॥

मभ्युपेयेत्याह । वाक्येति ॥ १९ ॥ ननु वस्तुमात्रकथनेऽपितवकंठेऽस्तिचामीकरः रज्जौयथानायंसर्पइत्यादौभ्रांतिजनितशोकभीत्यादिनिवर्तनेनार्थवत्त्वंदृष्टंतथेहाप्यसंसार्यात्मवस्तुकथनेनसंसारित्वभ्रांतिनिवर्तनेनार्थवत्त्वंभविष्यतीत्याशंक्य श्रुतब्रह्मणोऽपियथापूर्वंसुखदुःखादिसंसारधर्मदर्शनात्श्रोतव्योमंतव्योनिदिध्यासितव्यइतिश्रवणोत्तरंमनननिदिध्यासनयोर्विधानदर्शनाच्चमैवमित्याह । ब्रह्मेति ॥ १२० ॥

॥ २१ ॥ तथाचसिद्धार्थंवाक्यंनास्त्येव । किंतुसर्वंकार्यपरमेव । तत्रकिंचित्साक्षात्कार्याभिधायकंकिंचित्कार्यार्थंस्वार्थाभिधायकं । ततोवेदांतवाक्यान्यपिकार्यार्थंस्वार्थाभिधायकतयाप्रमाणंभवितुमर्हंतीत्याह । सइति । आत्मावाअरेद्रष्टव्यः । आत्माअपहतपाप्मा सोऽन्वेष्टव्यःसविजिज्ञासितव्यआत्मेत्येवोपासीत । आत्मानमेवलोकमुपासीत । ब्रह्मवेदब्रह्मैवभवतीत्यादिविधानेषुसत्सुकोऽसावात्माकिंब्रह्मेत्याकांक्षायांतत्स्वरूपसमर्पणेननित्यःसर्वज्ञःसर्वगतोनित्यतृप्तोनित्यशुद्धबुद्धमुक्तस्वभावोविज्ञानमानंदंब्रह्मेत्येवमर्थकानिवेदांतवाक्यान्युपयुक्तानि तथाचवेदांतवाक्यानामुक्तविधिशेषतावश्यमभ्युपेयान्यथातेषांप्रामाण्यंहीयेतेत्यर्थः ॥ २२ ॥ ब्रह्मणोविधिशेषतांदृष्टांतेनाह । अलौकि

यथालोकेफलंदृष्टंकंठचामीकरादिषु ॥ श्रुतमात्रोपलब्धेषुनतथातत्रदृश्यते ॥ २१ ॥ सोऽन्वेष्टव्योविजिज्ञास्यइत्यादिविधिशेषता ॥ मंत्रार्थवादवत्तेषांप्रामाण्यायेष्यतांयते ॥ २२ ॥ अलौकिकानिबोध्यंतेयूपादीन्यपिशास्त्रतः ॥ यथातथापरंब्रह्मविधिशेषतयार्प्यते ॥ २३ ॥ ॥ ॥

केति । यथायूपेपशुंबध्नातीतिबंधनादिविनियुक्तेयूपस्यालौकिकतयाकोऽसौयूपइत्याकांक्षायां खादिरोयूपोभवति यूपंतक्षति यूपमष्टास्रीकरोतीत्यादिवाक्यैस्तक्षणादिविधिपरैरपिसंस्कारविशिष्टसंस्थानदारुयूपइतिगम्यते । तद्वत्विधिपरेभ्योऽपिवेदांतवाक्येभ्योब्रह्मवस्तुनिश्चयस्यसंभवाद्विधिशेषगतमेवब्रह्मवेदांतैःसमर्थ्यतइत्यर्थः । आदिपदेनयदाहवनीयेजुह्वतीतिविहितेकआहवनीयइत्याकांक्षायांवसंतेब्राह्मणोऽग्नीनाधीतेत्यादिविधिभिःसंस्कारविशिष्टोऽग्निराहवनीयोगम्यतइतिदृष्टांतसंग्रहः ॥ २३ ॥ ॥ ॥ ॥

किंच । वेदांतानांवेदत्वाच्छास्त्रत्वप्रसिद्धेःप्रवृत्तिनिवृत्तिपराणांचसंदर्भाणांशास्त्रत्वात्तेषांतत्संरक्षणायतत्परत्वमवश्यमभ्युपेयमित्यभियुक्तवाक्योदाहरणेनाह । प्रवृत्तिरिति ॥ २४ ॥ एषांवेदांतानांहितत्तथाशास्त्रत्वेन तत्कृतेशास्त्रत्वसंरक्षणार्थम् ॥ २५ ॥ सर्ववेदार्थविज्जैमिनिवचनमपितथाभूतस्यैवशास्त्रतामावेदयतीत्याह । आम्नायस्येति । आम्नायस्यक्रियार्थत्वादानर्थक्यमतदर्थानांतद्भूतानांक्रियार्थेनसमाम्नायइति । तत्तेषुभूतेषुभूतानांवर्तमानानांपदानांक्रियार्थत्वेनसमाम्नायःसमुच्चारणं सूत्रकृत्तात्पर्यविच्छबरस्वाम्यभिधभाष्यवचनमपितत्रप्रमाणमित्याह । दृष्टोहितस्यार्थःकर्मावबोधनंचोदनेतिक्रियायाःप्रवर्तकंवचनंतज्ज्ञानमुपदेशइति । तस्यवेदस्यकर्मावबोधनंनियोगःज्ञानमर्थोदृष्टःप्रयोजनं

प्रवृत्तिर्वानिवृत्तिर्वानित्येनकृतकेनवा ॥ पुंसांयेनोपदिश्येततच्छास्त्रमभिधीयते ॥ २४ ॥ इत्युक्तंलक्षणंविज्ञैःशास्त्रस्यैषांहितत्तथा ॥ प्रसिद्धिरतएष्टव्यंविध्यर्थत्वंतुतत्कृते ॥ २५ ॥ आम्नायस्यक्रियार्थत्वादित्यादिवचनंमुनेः ॥ जैमिनेःसूत्रकारस्यदृष्टोहीत्यादिकंतथा ॥ २६ ॥ भाष्यकारवचस्तस्यप्रवृत्त्यादिपरस्यहि ॥ शास्त्रताबोधकंतस्मात्तत्समानत्वहेतुना ॥ २७ ॥ वेदान्तवचसावाच्यंतथात्वंमोक्षकामिनः ॥ ज्ञानंविधीयतेप्रोक्तइत्येवंप्राहशंकरः ॥ २८ ॥ ॥

दृष्टमिति हियस्मात्सूत्रकारवचनंभाष्यकारवचनंप्रवृत्तिनिवृत्तिपरस्यतस्यवेदस्यशास्त्रतावबोधकं तस्मात्तत्सामान्यत्वहेतुनावेदत्वशास्त्रत्वसामान्यत्वंप्रवृत्त्यादिपरत्वंवक्तव्यं । सतिचविधिपरत्वेयथास्वर्गकामस्याग्निहोत्रादिसाधनंविधीयतेतथाब्रह्मवेदब्रह्मैवभवतीतिश्रुत्याराात्रिसत्रन्यायेनब्रह्मबुभूषुर्ब्रह्मवेदनंकुर्यादित्यमृतत्वकामस्यब्रह्मज्ञानंविधीयतइत्याह । मोक्षकामिनइति । एवंमंडनोक्तमुदाहृत्याचार्योक्तिमुदाहर्तुमाह । इत्येवंप्रोक्तइति ॥ २६ ॥ २७ ॥ २८ ॥ ॥ ॥ ॥ ॥ ॥ ॥

तत्रयदुक्तंपुरुषांतरवर्तिशब्दार्थबोधलिंगप्रवृत्तेःसिद्धवस्तुन्यभावान्नतत्रशब्दव्युत्पत्तिरितितत्राह । कार्येति । अर्थवत्तापिसिद्धवाक्याना मस्त्येव । पुत्रस्तेजातइत्यादिसिद्धपुत्रजन्मादिबोधेऽपिहर्षादिप्रयोजनलाभात्ततश्चनशब्दानांकार्यपरत्वनियमःसेत्स्यतीत्याह । सिद्धबोध इति । प्रवृत्तिनिवृत्त्यबोधकस्यापिहितशासकत्वाच्छास्त्रत्वमविरुद्धमित्याह । शास्त्रत्वमिति ॥ २९ ॥ संग्रहवाक्यंविवृणोति । भूतेऽप्य र्थइति । भूतेऽप्यर्थेपदानांलोकेसंगतिग्रहःसुसंपादस्तथोपनिषदांपौर्वापर्यालोचनयासिद्धार्थपरत्वसंभवात्तदपहत्यकार्यपरत्वकल्पनमयुक्तं ।

कार्यबोधोयथाचेष्टालिंगंहर्षादयस्तथा ॥ सिद्धबोधेऽर्थवत्तैवंशास्त्रत्वंहितशासनात् ॥ २९ ॥ भूतेऽप्यर्थेपदानांहिशक्यंस्यात्संगतिग्रहः ॥ लोकेतथोपनिषदांसिद्धेऽर्थेतत्परत्वतः ॥ ३० ॥ पौर्वापर्यंसमालोच्यनकार्यपरताभवेत् ॥ वेदान्तानांश्रुतार्थस्यहानादश्रुतकल्पनात् ॥ ३१ ॥ यदिलोकेनदृश्येतसिद्धेऽर्थेसंगतिग्रहः ॥ तदावेदेऽपिनियमःकार्यमात्रपरत्वगः ॥ ३२ ॥ नास्त्येवंकिंतु लोकेऽपिसिद्धेऽर्थेसंगतिग्रहः ॥ सप्तद्वीपामहीमेरुर्भूधराणांवरोमहान् ॥ ३३ ॥ इयंरज्जुर्नसर्पोऽस्ति शुक्तिरेषानरूप्यकम् ॥ एवमादिर्हिभूतार्थेशाब्दबोधोऽपिदृश्यते ॥ ३४ ॥ ॥

श्रुतहान्यश्रुतकल्पनाप्रसंगादित्यर्थः ॥ ३० ॥ ३१ ॥ तथाचयद्यकार्यपरःप्रयोगोलोकेनोपलभ्येततत्प्रत्ययोवाव्युत्पन्नस्योन्नेतुंनशक्येततर्हि कार्येऽर्थेसंगतिग्रहोनभवेन्नत्वेतदस्तिलोकेकुतूहलभयादिनिवृत्त्यर्थानामकार्यपराणांपदसंदर्भाणांबहुलमुपलब्धेःअतोनास्तिवेदेऽपिकार्यपर त्वविषयोनियमइत्याह । यदीति ॥ ३२ ॥ नास्तीति । अकार्यपरपदप्रयोगमुदाहरति । सप्तद्वीपेति ॥ ३३ ॥ ३४ ॥ ॥

ननुभूतार्थबुद्धिर्व्युत्पन्नपुरुषवर्तिनीसमुन्नेतुमशक्येत्याशंक्यहर्षादेरुन्नयनहेतोःसंभवान्मैवमित्याह। उन्नयनइति । स्वेतरदेशभाषानभिज्ञस्तीर्थयात्रार्थमटाव्यमानोऽकस्मात्कस्मिंश्चिद्ग्रामेकस्यचिद्देवदत्तसंज्ञस्यसद्मनिनिवासेननानुभूततत्पुत्रजन्मा तत्पुत्रजन्मवार्ताहारेणसहदेवदत्ताभ्याशमागतःसिंदूररंजितपुत्रपदांकितवस्त्रोपायनार्पणपुरःसरंदिष्ट्यावर्धसेत्वंपुत्रस्तेजातइतिवार्ताहारव्याहारश्रवणानंतरमुपजातरोमांचकंचुकंविकासिनयननलिनयुगलमतिस्मेरमुखारविंदंदेवदत्तमवलोक्यहर्षहेत्वंतरमनुपलभमानस्तद्धेतुपुत्रजन्मानेनवार्ताहारेणनिवेदितमितिसिद्धेऽपिपदशक्तिमुपगच्छतीत्याशयः॥३५॥ एवंचविवादाध्यासितावेदांतानकार्यविषयाःभूतार्थविषयप्रमाजनकत्वात् यद्यद्विषयप्रमाजन

उन्नयनेहर्षादीनाहेतुःसिद्धार्थवाचकः ॥ सफलोदृश्यतेलोकेपुत्रस्तेजातइत्यपि ॥ ३५ ॥ भूतार्थविषयज्ञानजनकत्वादकार्यगाः॥ वेदान्ताश्चक्षुरादीवफलंमोक्षाख्यमुत्तमम् ॥३६॥ सिद्धंवस्तुविधेनैवगोचरीभवितुमर्हति ॥ नियोगब्रह्मणीभिन्नेवेदांतैस्तेउभेकथम् ॥ ३७ ॥ ॥

कंतन्नतदन्यपरं यथारूपादिविषयेचक्षुरादितथाचैतेतस्मात्तथेति फलितमाह। भूतार्थेति। हितशासनाच्छास्त्रत्वमित्येतद्विवृणोति। फलमिति। तथाचब्रह्मस्वरूपज्ञानस्यपरमपुरुषार्थहेतुत्वादनुपदिशतामपिपुरुषप्रवृत्तिमिववेदांतानांपुरुषहितशासनाच्छास्त्रत्वंसिद्धंभवतीतिभावः॥३६॥ नन्वक्रियार्थत्वेऽपिब्रह्मस्वरूपविधिपरत्वमस्तुवेदांतानांतथात्वेचविधिनात्वेकवाक्यत्वादितिराद्धांतसूत्रमप्यनुगृहीतंभवति नचाप्रवृत्तप्रवर्तनमेवविधिरुत्पत्तिविधेरज्ञातज्ञापनार्थत्वादधिकारविधितएवप्रवृत्तिलाभात्। वेदांतानांचाज्ञातज्ञापकत्वेनतथात्वंसंभवादित्याशंक्याह। सिद्धमिति। अनागतत्वेनोत्पाद्यत्वेनभावनाविषयोहिसर्वोविधिरधिकारविनियोगप्रयोगोत्पत्तिरूपाणांपरस्पराविनाभावात् अधिकारःफलसंबंधबो

धनं विनियोगः क्रियायाः फलशेषत्वज्ञापनं प्रयोगोऽनुष्ठानमुत्पत्तिः कर्मस्वरूपज्ञापनं। फलसंबंधश्च क्रियायाः शेषत्वमन्तरेण न संभवति। तच्चना
नुष्ठानमृते अनुष्ठानं च नाज्ञाते कर्मस्वरूप इत्यविनाभावः। तथा च यथाग्निहोत्रं जुहुयात्स्वर्गकाम इत्यादिभ्योऽधिकारविनियोगप्रयोगाणां प्रतिल
म्भादग्निहोत्रं जुहोतीत्युत्पत्तिमात्रपरं वाक्यं सतोऽप्यत्र विनियोगादयोऽन्यतोलब्धत्वादविवक्षितास्तथैव विधेयभावनाविषयत्वेन सिद्धे तत्संभ
वान्न ब्रह्मणि विधिरित्यर्थः। नन्ववस्तु ब्रह्मात्मसिद्धवस्तुपराणामपि वेदान्तानामुपासनादिविधायकत्वमित्याशंक्य वाक्यभेदापत्तेर्मैवमित्याह। नि
योगेति ॥३७॥ संप्रमातुमिति। नन्वेवं तर्हि नियोगमात्रपरत्वमेवास्तु तेषामित्याशंक्याह। नवेति ॥३८॥ तत्र श्रोतव्य इत्यनेन श्रवणं विधेयमाहो

संप्रमातुं विशक्येते विरोधापत्तिहेतुना ॥ नवा नियोगमात्रं स्याद्विधेयस्यानिरूपणात् ॥ ३८ ॥
न शाब्दं ब्रह्मविज्ञानं विधेयं तस्य च श्रुतेः ॥ सिद्धिरध्ययनादेव निर्णयस्तु विचारजः ॥ ३९ ॥ अ
न्यथा त्वग्निहोत्रादिज्ञानस्यापि न सिद्धिता ॥ न शब्दावगते तस्मिन्विधेया स्मृतिसंततिः ॥ ४० ॥
तस्या दृष्टफलत्वे स्याद्विधेर्वैयर्थ्यमेव च ॥ अदृष्टफलकत्वे स्यान्मोक्षः स्वर्गादिवन्मृषा ॥ ४१ ॥

स्विन्मंतव्य इति मननं किं वा निदिध्यासितव्य इति निदिध्यानमिति विकल्प्य प्रथमं प्रत्याह । नेति। शाब्दं ब्रह्मविज्ञानं श्रवणं न विधेयं तस्य तु स्वाध्या
योऽध्येतव्य इत्यर्थज्ञानपर्यन्ताध्ययनविधिश्रुतेरेव सिद्धत्वात्। द्वितीयं प्रत्याह । निर्णय इति । निर्णयस्य विचारान्वयव्यतिरेकानुविधायित्वात्
॥ ३९ ॥ अन्यथाप्यत्र पृथग्विध्यंगीकारे धर्मश्रवणादौ पृथग्विध्यभावाद्धर्मविचारप्रवृत्त्यसिद्ध्याग्निहोत्रादिकर्मज्ञानं न स्यादित्याह । अन्यथेति ।
तृतीयं प्रत्याह। नशब्देति ॥ ४० ॥ तस्येति। तस्याः स्मृतिसंततेर्निदिध्यासनस्य दृष्टफलकत्वमुतादृष्टफलकत्वमिति विकल्प्याद्यं निराकुर्व
न्नाह। विधेरिति। द्वितीयं निराचष्टे। मोक्ष इति ॥ ४१ ॥ ॥ ॥ ॥ ॥ ॥

तथाचान्वयव्यतिरेकाभ्यामेवश्रवणादेस्तत्त्वसाक्षात्कारसाधनतासिद्धौनतत्रविध्यवकाश इत्याह। अन्वयेति॥ ४२॥ तत्रदृष्टान्तमाह। यथेति ॥ ४३॥ ननुविधिसंस्पर्शमंतरेणकथंवेदान्तानांप्रामाण्यमित्याशंक्याह। विधीति। प्रमितेःअनधिगताबाधितविषयज्ञानस्यजनकत्वमेवप्रामाण्यकारणम्॥ ४४॥ तस्यचप्रकृतसत्वात्कुतोऽप्रामाण्यसंभवइत्याह। सत्येति। ननुलौकिकशब्दप्रामाण्यस्यास्तुतथाविधप्रयोजकं वेदेत्वन्या

अन्वयव्यतिरेकाभ्यांवेदांतश्रवणेनच॥ मुमुक्षोर्ब्रह्मविज्ञानंजायतेनविधेरिति॥ ४२॥ यथागांधर्वशास्त्रादेःश्रवणेसतिजायते॥ षड्जादिज्ञानमत्रापितथेष्टव्यंनचासति॥ ४३॥ विधिसंस्पर्शितानैवप्रामाण्येकारणंभवेत्॥ जननंप्रमितेरेवप्रामाण्येकारणंपरम्॥ ४४॥ सत्यज्ञानादिवाक्येभ्यःप्रमितिर्जायतेपरा॥ प्रामाण्याल्लौकिकान्नैवप्रामाण्यंवैदिकंपरम्॥ ४५॥ यएवलौकिकाःशब्दास्तदर्थास्तेचवैदिकाः॥ प्रामाण्यस्यतथैवस्यादेकत्वाल्लोकवेदयोः॥ ४६॥ ननिरूपयितुंशक्योनियोगोयुक्तितस्त्विह॥ शिष्यंनियुंक्तआचार्यइत्यादावुत्तमस्यच॥ ४७॥ अवरप्रेरणात्माभिप्रायभेदोनियोगकः॥ नासौससंभवेदत्रापौरुषेयेकिलागमे॥ ४८॥ अतःप्रवर्तकंवेदेकृतियोग्येष्टसाधनम्॥ इष्टसाधनरूपस्यकृतियोग्यस्यकार्यता॥ ४९॥ ॥

दृशमेवतद्भविष्यतीत्याशंक्याह। प्रामाण्यादिति॥ ४५॥ कुतइतिचेत्तत्राह। यएवेति॥ ४६॥ यत्तुवाक्यप्रयोगासंसिद्धेः कृतिसाध्यफलंविनेत्युक्तं तत्राह। नेति। इहवेदेयतोगामानयेतिवाक्यस्यपौरुषेयतयामध्यमवृद्धप्रेरणात्मकाभिप्रायभेदोनियोगःसंभवति। वेदस्यत्वपौरुषेयतयोक्तनियोगस्यतत्रासंभवोऽतोवेदेकृतियोग्येष्टसाधनमेवप्रवर्तकम्॥ ४७॥ ४८॥ अत इति। तदेवकार्यशब्दाभिधेयमित्याह। इष्टेति॥ ४९॥

कार्यस्येष्टसाधनत्वंकुतइत्याशंक्यस्वर्गेच्छानिरूप्यत्वाद्यागीयापूर्वस्येत्याह । कार्यमिति । अतःस्वर्गकामोयजेतेत्यादौकृतियोग्येष्टसाधनं
यागीयापूर्वंयैवश्रुतार्थापत्त्याकल्पयत्ययंलिङादिप्रत्ययार्थइत्याह । अतइति ॥ १५० ॥ एतावताप्रकृतेकिमागतमितिचेत्तत्राह । नेति ।
कुतइत्यतआह । तत्रेति । तत्रवेदांते ॥ ५१ ॥ ब्रह्मेति । तयोरविद्यानिवृत्त्यात्ममोक्षब्रह्माद्वैतात्मविज्ञानयोर्लोकप्रसिद्धितो ज्ञानस्याज्ञान
निवर्तकत्वप्रसिद्धेःसाध्यसाधनभावसिद्धेस्तत्साधनविधेर्ग्रहोऽव्यर्थइत्यर्थः ॥ ५२ ॥ ज्ञानस्याज्ञाननिवर्तकत्वंलोकेक्कदृष्टमित्यपेक्षायामाह ।
शुक्तीति । फलितमाह । अतइति ॥ ५३ ॥ यत्तुब्रह्मश्रवणमात्रेणफलंनोपलभामहइत्यादितत्राह । ज्ञातेति । ज्ञातोऽवगतोब्रह्मात्म

कार्यमिच्छानिरूप्यत्वाच्चेष्टसाधनमुच्यते ॥ अतोविध्यर्थएवात्रकृतियोग्येष्टसाधनम् ॥१५०॥
नैतादृशस्यवेदांतेविधेरप्यस्तिसंभवः ॥ तत्राविद्यानिवृत्त्यात्ममोक्षस्तस्यचसाधनम् ॥ ५१ ॥
ब्रह्माद्वैतात्मविज्ञानंतयोर्लोकप्रसिद्धितः ॥ साध्यसाधनतासिद्धेर्वृथातत्रविधेर्ग्रहः ॥ ५२ ॥
शुक्तिज्ञानात्तदज्ञाननिवृत्तिर्दृश्यतेयतः ॥ अतोवेदांतवाक्यानांसिद्धार्थपरतेष्यताम् ॥ ५३ ॥
ज्ञातब्रह्मात्मभावस्ययथापूर्वंनविद्यते ॥ संसारित्वंतुयस्यास्तेतदसौब्रह्मविन्नहि ॥ ५४ ॥

भावोयेनतस्ययथापूर्वंसंसारित्वंनविद्यते । अयमर्थः नचसाक्षात्कृतब्रह्मात्मभावस्ययथापूर्वंसंसारित्वंदर्शयितुंशक्यंब्रह्मात्मतावगमविरो
धात् यथादेहादिष्वात्माभिमानवतोदुःखभयादिमत्त्वंदृष्टंतथातस्यैववेदांतप्रमाणोत्पन्नब्रह्मात्मसाक्षात्कारेसति तदभिमानापगमेमिथ्याज्ञा
ननिमित्तंतदेवदुःखभयादिमत्त्वंभवतीतिकल्पयितुंनहिशक्यं। तथाधनांधस्यगृहस्थस्यधनाभिमानवतोधनापहारनिमित्तंदुःखंदृष्टंतथातस्यै
वप्रव्रजितस्यतदभिमानविनिर्मुक्तस्यतदपहारनिमित्तंदुःखंनहिभवति । यथाचकुंडलिनःकुंडलित्वाभिमाननिमित्तंसुखंदृष्टंतथा तस्यैवकुंडल
वियुक्तस्यतदभिमानरहितस्यतन्निबंधनंसुखंनोपलभ्यते । अशरीरंवावसंतंनप्रियाप्रियेस्पृशतइतिश्रुत्यातत्त्वज्ञानिनो [illegible] भिमानरहितस्य

सुखदुःखभोक्तृत्वलक्षणसंसारापगमोदर्शितोऽतःसफलोब्रह्मात्मभावावगमइति । यस्यतुयथापूर्वंसंसारित्वमस्तिनचासौतत्त्वविदित्याह । यस्यत्विति ॥ ५४ ॥ नत्वेवंतर्हिंश्रवणात्पराचीनयोर्मनननिदिध्यासनयोर्विधानंकिमर्थमितिचेत्तत्राह । मननादीति । नचान्यथावगतब्रह्मणोमननादिविधानार्थं । तथाच । यदिह्यवगतंब्रह्मान्यत्रनियुज्येत भवेत्तदाविधिशेषत्वं नतुतदस्तिमनननिदिध्यासनयोरपिश्रवणवदवगत्यर्थत्वादितिभावः ॥ ५५ ॥ यत्तुसोऽन्वेष्टव्यः सविजिज्ञासितव्यइत्यादिविधिशेषतेतितत्राह । दर्शनादीति । ब्रह्मात्मभावदर्शनादिविषयकं श्रूयमाणमपिविधानमहेयानुपादेयवस्तुविषयत्वेनानियोज्यविषयत्वादुपलादिप्रयुक्तक्षुरतैक्ष्ण्यादिवत्कुंठीभवतीत्यतश्छायात्मकमित्यर्थः । योहिबहिर्मुखःपुरुषइष्टंमेस्यादनिष्टंमेमाभूदितिप्रवर्तते नचतत्रात्यंतिकंपुरुषार्थंलभतेतमात्यंतिकपुरुषार्थंवांछितंतदुपाया

मननादिविधानंयद्दृश्यतेश्रवणोत्तरम् ॥ तद्ब्रह्मात्मावगत्यर्थंतद्वदेवनचान्यथा ॥ ५५ ॥ दर्शनादिविधानंतुविधिच्छायात्मगोचरात् ॥ स्वाभाविकप्रवृत्तेःस्याद्विमुखीकरणार्थकम् ॥ ५६ ॥ चिदानंदघनंब्रह्मयस्यानंदलवःपरम् ॥ हिरण्यगर्भपर्यंतंजगद्व्याप्नोतिसर्वतः ॥ ५७ ॥ निष्फलत्वंकथंतस्यसंमतंतेवदाशुभोः ॥ अकृत्रिमसुखंब्रह्मविद्धिमुख्यंफलंहितत् ॥ ५८ ॥ ॥

नभिन्नंस्वाभाविककार्यकरणसंघातप्रवृत्तिगोचराद्विमुखीकरणार्थं तथाभूतं आत्मावाअरेद्रष्टव्यइत्यादिविधानमित्याह । स्वाभाविकप्रवृत्तेर्गोचरादिति ॥ ५६ ॥ यत्तुसिद्धार्थबोधिवाक्यंनस्वतःप्रमाणंकिंतुविधिवाक्यैकवाक्यतापन्नंप्रवृत्तिनिवृत्तिबोधकस्यैवशास्त्रत्वबोधनादितितत्राह । चिदानंदेति । यस्यानंदलवःपरंकेवलंहिरण्यगर्भपर्यंतं जगत्सर्वतोव्याप्नोतितस्यनिष्फलत्वंकथंतवातिबुद्धिमतःसंमतंतस्मात्तदेवापरिच्छिन्नब्रह्मात्मकसुखंमुख्यंफलंविद्धि । यतोऽकृत्रिमंजन्यंनभवति विनाशशून्यत्वमप्येतद्बोधितंतथाचपरिच्छिन्नेकृत्रिमेविनश्वरे स्वर्गादिसुखेफलबुद्धिंविहायनिरुक्तसुखंमुख्यंफलंजानीहीतिभावः ॥ ५७ ॥ ५८ ॥ ॥ ॥ ॥

तथाचामुख्यफलकप्रवृत्तिनिवृत्तिविधायकशेषभूतस्यसिद्धार्थप्रतिपादकस्यमंत्रार्थवादादेरपियदिप्रामाण्यं तर्ह्येवंभूतमुख्यफलानन्यसाधन ब्रह्मात्मविज्ञानपरवेदांतप्रमाणतायांकिंबाधकमित्याशयेनाह । एवमिति ॥ ५९ ॥ एवंचोपनिषदितिसमानाख्याशब्दोऽप्यर्थवान्भव तीत्याह । एवंचेति । उपनिपूर्वाद्विशरणार्थात्सदेः क्विप्युपनिषत्पदव्युत्पत्त्यालब्धमर्थमाह । उपनीयाद्वयमिति । बृहत्ब्रह्म ॥ १६० ॥ तद्वाच्यार्थदर्शनपुरस्सरं वेदांतउपनिषच्छब्दस्यप्रवृत्तिनिमित्तमाह । विद्याचेति । पुरुषश्चोपनिषद्वेद्यत्वादौपनिषत्पदाभिधेयइत्याह । त

एवंब्रह्मात्मविज्ञानंसर्वदुःखविनाशकम् ॥ आनंदाप्तौपरंहेतुर्वेदांतैःप्रतिपाद्यते ॥ ५९ ॥ एवं
चोपनिषच्छब्दउपनीयाद्वयंबृहत् ॥ सवासनामविद्यांसंहिनस्तीत्यर्थवान्भवेत् ॥ १६० ॥ वि
द्याचोपनिषद्वाच्यातद्धेतुत्वाच्छ्रुतेःशिरः ॥ उक्तंचोपनिषन्नाम्नापुरुषोविदितस्ततः ॥ ६१ ॥
उच्यतेह्यौपनिषदःपरमात्माद्वयात्मकः ॥ स्वप्रकाशोऽपिवेदांतैर्गम्यतेपुरुषःपरः ॥ ६२ ॥ यत्तु
सूत्रकृतोवाक्यंभाष्यकारवचस्तथा ॥ तत्तुविध्यादिशास्त्रस्याभिप्रायार्थावबोधकम् ॥ ६३ ॥
नतुवेदांतवाक्यानांसर्वस्याप्यविशेषतः ॥ आम्नायस्यक्रियार्थत्वादतदर्थाअनर्थकाः ॥ ६४ ॥

तःश्रुतिशिरसःपुरुषोविदितः ॥ ६१ ॥ उच्यतइति । ननु स्वप्रकाशस्योपनिषद्गम्यत्वंविरुद्धमित्याशंक्यातन्निवृत्तिमंतरेण तदनुपलंभादत न्निवर्तकस्यतदुपलंभकत्वोपचाराद्वेदांतगम्यत्वं पुरुषस्याविरुद्धमित्याह । स्वप्रकाशोऽपीति ॥ ६२ ॥ यत्तुसूत्रकृद्भाष्यकृद्वचनंतत्तुधर्मजि ज्ञासाविषयत्वाद्विधिप्रतिषेधशास्त्राभिप्रायार्थाववोधनपरंद्रष्टव्यं नतुवेदांतवाक्यानामभिप्रायार्थाववोधनपरमित्याह । यत्त्विति ॥ ६३ ॥ नत्विति । नन्वाम्नायस्यतस्येतिचाविशेषवचनात्सर्वस्यवेदस्याभिप्रायवोधनपरंतद्वाक्यंकिमितिनभवेदितिचेत्तत्राह । सर्वस्यापीति ॥ ६४ ॥

इतीति । क्रियार्थत्वादित्यत्रानर्थक्यमित्यत्रचार्थशब्दोऽभिधेयपरः प्रयोजनपरोवेत्याशयेनविकल्पयति । अभिधेयेनेति ॥ ६५ ॥ आनर्थक्यमिति । आम्नायस्यक्रियाभिधायकत्वादक्रियाभिधायिनां द्रव्यादिपदानांसिद्धार्थानांत्वन्मतेऽनर्थताभिधेयशून्यतास्यादित्याह । द्रव्यमिति ॥ ६६ ॥ यइति । किंततइत्यपेक्षायामाह । आनर्थक्यइति । आनर्थक्येऽभिधेयराहित्येसतिमंत्रार्थवादादिवाक्यार्थबोधोनभवेत्तंविनाचक्रियाकुतोभवेदितिमहद्दूषणमित्यर्थः ॥ ६७ ॥ द्वितीयमनूद्यदूषयति । यद्युच्येतेति । क्रियार्थाःक्रियाप्रयोजनकाःसिद्धाः सिद्धार्थाःस्वार्थनिष्ठास्तुकदाचिन्नैवसंति तत्क्रियार्थत्वंक्रियाभिधेयत्वमानर्थक्यं च तत्क्रियारूपाभिधेयशून्यत्वमपितुक्रियाप्रयोजनत्वं त

इत्येवंसाहसंयेषांवक्तव्यंतैस्तुकर्मठैः ॥ अभिधेयेनशून्यंवानिष्प्रयोजनमेववा ॥ ६५ ॥ आनर्थक्यपदस्यार्थस्तत्राद्येशृणुदूषणम् ॥ द्रव्यंगुणश्चकर्माणिसिद्धार्थस्यैववाचकाः ॥ ६६ ॥ यआम्नायेभवंत्येषांत्वन्मतेस्यादनर्थता ॥ आनर्थक्येनबोधःस्याद्विनाबोधंक्रियाकुतः ॥ ६७ ॥
यद्युच्येतत्वयेदानींक्रियार्थाःसंतिनाखिलाः ॥ सिद्धाद्रव्यादयोनैतेस्वार्थनिष्ठाःकदापितु ॥ ६८ ॥
तत्रापिशृणुयद्येतेवेदेभूतार्थबोधकाः ॥ द्रव्यादिवाचकाःशब्दाःसंतितर्हितथैवच ॥ ६९ ॥ युत्तयावेदांतवाक्यानांसमूहोऽद्वैततत्परः ॥ विध्यादिव्यतिरेकेणकूटस्थंकिन्नबोधयेत् ॥ १७० ॥

दात्मप्रयोजनशून्यत्वंद्रव्यगुणकर्मशब्दानांचक्रियाप्रयोजनत्वेनैवसिद्धद्रव्याद्यभिधायकतानतुस्वनिष्ठतया । यथाहुः । शास्त्रविदश्चोदनाहि भूतंभवंतंभविष्यंतमित्येवंजातीयकंशक्नोत्यवगमयितुमिति तथाचकार्यमर्थमवगमयंतीचोदनातदर्थंभूतादिकमप्यर्थंगमयतीतियदित्वयोच्येतेत्यर्थः ॥ ६८ ॥ तत्रापीति । प्रवृत्तिनिवृत्तिव्यतिरेकेणभूतंचेद्वस्तुभव्यार्थतयाम्नायउपदिशति तर्हिकूटस्थंनित्यंनोपदिशतीतिकोहेतुरित्याह । यद्येतइति ॥ ६९ ॥ १७० ॥ ॥ ॥ ॥ ॥ ॥ ॥

ननु यद्भव्यार्थभूतमुपदिश्यते नतद्भूतंभव्यसंसर्गिरूपेण तस्यापिभव्यत्वादित्याशंक्याह । श्रुत्येति । नचात्रतादात्म्यलक्षणःसंसर्गःकिंतु कार्येणसहप्रयोजनप्रयोजनिलक्षणोऽन्वयस्तद्विषयेणतुभावार्थेनभूतानांक्रियाकारकलक्षणइतिनभूतानांक्रियात्मकत्वमित्याह । नचेति । भव्यंकार्ययुतक्रियाभूतस्योभाभ्यामपितादात्म्यंनसंभवतीत्यर्थः ॥ ७१ ॥ नन्वक्रियात्वेऽपिभूतस्यक्रियासाधनत्वेनसप्रयोजनएव भूतोपदेशोब्रह्मणस्तुकूटस्थनित्यत्वेनोदासीनत्वेनचकर्तृत्वादिशून्यतयानिष्प्रयोजनत्वात्तद्भूतोपदेशोऽनुपपन्नइत्याशंक्यपरिहरति । सप्र

श्रुत्योपदिश्यमानंतद्भूतंनैवक्रियाभवेत् ॥ नचतादात्म्यसंसर्गसंभवोऽत्रकदाचन ॥ ७१ ॥ सप्रयोजनमेवात्रभूतंश्रुत्योपदिश्यते ॥ नसप्रयोजनंब्रह्मोदासीनत्वादकर्तृकम् ॥ ७२ ॥ विनोपकारिणंश्रुत्याक्रियायांनोपदिश्यते ॥ इत्येवंयदिशंक्येतश्रृणुतत्रापिचोत्तरम् ॥ ७३ ॥ जन्माद्यनर्थसंदोहहेतुभूतामपार्थिकाम् ॥ मिथ्याप्रतीतिजनिकामविद्यांविद्धिमंडन ॥ ७४ ॥ ज्ञानंतन्नाशकंज्ञेयंतद्धेतुर्वेदउच्यते ॥ तंत्वौपनिषदंचैवमादिवाक्येषुनिश्चितः ॥ ७५ ॥ तत्त्वमस्यादिवाक्योत्थसम्यग्धीजन्ममात्रतः ॥ अविद्यासहकार्येणनिःशेषंप्रविनश्यति ॥ ७६ ॥ मिथ्याज्ञानेप्रणष्टेतुदुःखमात्रंविनश्यति ॥ स्वानंदात्मपरब्रह्मस्वयमेवप्रकाशते ॥ ७७ ॥

योजनमेवेति ॥ ७२ ॥ ७३ ॥ यद्यपिब्रह्मोदासीनंतथापितद्गोचरोपनिपत्साक्षात्कारपर्यंताब्रह्मविद्यानामधेया स्वविरोधिनींसंसृतिमूलकारणभूतामविद्यांनापादयंतीपरमप्रयोजनवतीत्यतःक्रियामात्रप्रयोजनकंभूतमुपदिशतिवेदोनत्वेवंभूतप्रयोजनकंब्रह्मेतिसाहसमात्रमित्याशयेनाह । जन्मादीत्यादिना ॥ ७४ ॥ ७५ ॥ ७६ ॥ ७७ ॥ ॥ ॥ ॥ ॥

फलितमाह । इत्थमिति । आम्नायस्याविशेषेणक्रियार्थत्वंवदंतःकिंप्रमाणकाःकिंतुनेत्यर्थः ॥ ७८ ॥ नन्वधिकारिणोभावादिदंसर्वमप्रयोजकमित्याशंक्याह । अथेति ॥ ७९ ॥ अधिकारिणंनिर्दिशति । स्ववर्णेति । अकलंकिनाहिंसादिकलंकशून्येनतथाचेहजन्मनिजन्मांतरेवाकाम्यनिषिद्धवर्जनपुरस्सरंनित्यनैमित्तिकप्रायश्चित्तोपासनानुष्ठानेन शुद्धबुद्धिरित्यर्थः । एतज्ज्ञापकमाह । सदाचारइति । शमदमोपरमतितिक्षासमाधानरूपसदाचारवान्श्रद्दधानोगुरुवेदांतवाक्यविश्वासात्मश्रद्धालंकृतःशांतोदांतउपरतस्तितिक्षुः समाहितोभूत्वा

इत्थंप्रयोजनंसिद्धंवेदांतवचसामतः ॥ आम्नायस्यक्रियार्थत्वंवदंतःकिंप्रमाणकाः ॥ ७८ ॥ अथाधिकारएवात्रकस्यसोऽपिनिरूप्यते ॥ श्रूयतांभोविशेषेणयोऽधिकारीहसंमतः ॥ ७९ ॥ स्ववर्णाश्रमधर्मेणनिष्कामेनाकलंकिना ॥ विशुद्धधीःसदाचारःश्रद्दधानोऽनसूयकः ॥ १८० ॥ ईश्वरानुग्रहाल्लब्धवैराग्यादियुतःसुधीः ॥ सोऽधिकारीहविज्ञेयोब्रह्मज्ञानेविमोक्षदे ॥ ८१ ॥ स्यादेवंयदिवैराग्यंसंभवेत्पुरुषस्यच ॥ वैराग्यकारणस्यैवविवेकस्यास्त्वसंभवः ॥ ८२ ॥ स्वर्गादीनांहिनित्यत्वेप्रमाणंश्रुतयोऽखिलाः ॥ अक्षय्यमस्तिसुकृतंचातुर्मास्यादियाजिनः॥ ८३ ॥

त्मन्येवात्मानंपश्येत्श्रद्धान्वितोभूत्वेतिश्रुतेः । परगुणेषुदोषाविष्करणमसूयातद्रहितः ॥ १८० ॥ ईश्वरेति । यतईश्वरानुग्रहाल्लब्धवैराग्यादियुतः । इहामुत्रार्थभोगविरागेनमुमुक्षुत्वेनचयुक्तःसुधीःशोभनानित्यानित्यवस्तुविवेकालंकृताधीर्यस्यसः ॥ ८१ ॥ वैराग्यादिसाधनासंभवादधिकारीनसंभवतीतिमंडनःशंकते । स्यादेवमिति ॥ ८२ ॥ विवेकस्यकथमसंभवइत्यपेक्षायामाह । स्वर्गादीनामिति । अक्षय्यंहवैचातुर्मास्ययाजिनःसुकृतंभवतीतिश्रुतिंस्वर्गादीनांनित्यत्वउदाहरति । अक्षय्यमस्तीति ॥ ८३ ॥ ॥ ॥

॥ ८४ ॥ यदिति । संभिन्नंसंमिश्रंनचानंतरंदुःखेनग्रस्तंदुःखप्रागभाववन्नभवतीत्यर्थः । अभिलाषयाकामनयोपनीतंस्वसंबंधिभोग्यतया संपादितम् ॥ ८५ ॥ ८६ ॥ ननुविमतंविनाशिकृतकत्वाद्घटादिवदित्याशंक्य नरशिरःकपालंशुचिप्राण्यंगत्वाच्छंखवदित्यनुमानं यथा नारंस्पृष्ट्वास्थिसस्नेहंसवासाजलमाविशेदित्यागमविरोधादप्रमाणं तथाअपामसोममममृताअभूमेतिश्रुतिबाधितत्वादप्रमाणमित्याह । अपामे

सुकृतंतत्तदाक्षय्यंनित्यःस्वर्गोयदाभवेत् ॥ स्वर्गस्यापिविनिर्दिष्टंरूपंसाम्यात्किलागमे ॥ ८४ ॥
यन्नदुःखेनसंभिन्नंनचग्रस्तमनंतरम् ॥ अभिलाषोपनीतंचतत्सुखंस्वःपदास्पदम् ॥ ८५ ॥ अ
तोदुःखविरोधीयःस्वर्गःसुखविशेषकः ॥ स्वसत्तयासचस्वर्गोदुःखंहंतिसहेतुकम् ॥ ८६ ॥ अ
पामसोमममृताअभूमेत्यक्षयश्रुतेः ॥ क्षयेतस्यामृतत्वंस्यात्कुतःस्वर्गनिवासिनाम् ॥ ८७ ॥
उपायावैदिकाःसंतितापत्रयविनाशकाः ॥ ज्योतिष्टोमप्रभृतयोयज्ञास्तेसुकरान्नृणाम् ॥ ८८ ॥
यतःकर्मकलापोऽयंजनानांसुखसाधनः ॥ अतस्तत्रप्रवृत्तिःस्यात्सर्वस्यापिविवेकिनः ॥ ८९ ॥ स्व
र्गादिभ्यःसुखेभ्यश्चवैराग्यंसंभवेत्कथम् ॥ तथातत्साधनेभ्योऽपिनराणांसौख्यमिच्छताम् ॥ १९० ॥

ति ॥ ८७ ॥ तथाचाध्यात्माधिदैविकाधिभौतिकदुःखत्रयनिवृत्तिपूर्वकस्वर्गादिसुखसाधनज्योतिष्टोमादेःसुकरत्वात्तत्रैवसर्वस्यप्रवृत्तिसंभ वइत्याशयेनाह । उपायाइति ॥ ८८ ॥ यतइति । यतःकर्मकलापःसुखसाधकःअतस्तत्रैवसर्वस्यप्रवृत्तिःस्यान्नान्यत्रेत्याह । यतइति ॥ ८९ ॥ तस्मात्स्वर्गादिसुखतत्साधनेभ्यःकथंवैराग्यसिद्धिरित्याह । स्वर्गादिभ्यइति ॥ १९० ॥ ॥ ॥ ॥

तथाचसुखार्थिनःप्रेक्षावंतोऽस्मात्सुखाद्विरज्यब्रह्मज्ञानेऽस्मिन्नसुखंयस्मिन्यस्माद्वेतिसुखतत्साधनविलक्षणेकथंप्रवर्तेरन्निति त्वमेवातिकुशलोव देत्याह । प्रेक्षावंतइति ॥ ९१ ॥ ननु ब्रह्मणःसुखरूपत्वात्तदाश्रयत्वाद्वाफलत्वोपवाच्यातत्साधनेप्रवृत्तिर्भविष्यतीतिचेत्तत्राह । यद्यपी ति ॥ ९२ ॥ तथापीत्याद्युक्तंस्फोरयति । स्वाश्रयस्येति । भोगत्वव्यापकंह्युपलब्धित्वंतद्व्यापकंसुखस्यस्वाश्रयत्वमतोव्यापकनिवृत्त्या व्याप्यनिवृत्तेर्नब्रह्मसुखस्यफलत्वमित्याशयेनाह । ब्रह्मधर्मेति ॥ ९३ ॥ जीवेति । नन्वस्तुब्रह्मसुखस्यजीवाश्रयत्वमपीत्याशंक्यदेवदत्ता

प्रेक्षावंतोविरज्यास्मात्सुखाद्ब्रह्मावबोधने ॥ सुखार्थिनःप्रवर्तेरन्नसुखेऽस्मिन्कथंवद ॥ ९१ ॥
यद्यपीत्थंमतंकेषांसुखंब्रह्मणिवस्तुनि ॥ अस्तीतिनतथापीदंजीवैर्भोक्तुंचशक्यते ॥ ९२ ॥ स्वा
श्रयस्यसुखस्यैवोपलब्धेरेवभोगता ॥ ब्रह्मधर्मसुखस्यात्रनोपलब्धिर्भवेन्नृणाम् ॥ ९३ ॥ जी
वाश्रयतयाब्रह्मसुखंनैवोपलब्धिमत् ॥ नह्यन्याश्रयतादृष्टालोकेऽस्त्यन्यसुखस्यवै ॥ ९४ ॥
नचैक्यंब्रह्मणासार्धंजीवानांसंभवेन्नयात् ॥ तस्यतेषांचवैधर्म्याद्भेदोऽस्त्यग्निजलादिवत् ॥ ९५ ॥
अतोमोक्षपदार्थोऽपिनिरानंदात्मकोभवेत् ॥ रागिगीतंतथातत्रमोक्षेदोषप्रदर्शकम् ॥ ९६ ॥
वरंवृंदावनेशून्येसृगालत्वंसइच्छति ॥ नतुनिर्विषयंमोक्षंमंतुमर्हतिगौतमः ॥ ९७ ॥ ॥

श्रितसुखस्ययज्ञदत्ताश्रयत्वापत्त्यातिप्रसंगान्मैवमित्याह । नहीति ॥ ९४ ॥ ननु ब्रह्मजीवौनभिन्नौयेनान्याश्रयसुखस्यान्याश्रयासंभव आपाद्येतकिंत्वेकरूपावतोनोक्तदोषइत्याशंक्यपरिहरति । नचेति ॥ ९५ ॥ यतःब्रह्मसुखस्यभोग्यत्वासंभवोऽतोमोक्षोऽप्यानंदरहितत्वा न्नाभिलाषागोचरइत्याह । अतइति ॥ ९६ ॥ ९७ ॥ ॥ ॥ ॥ ॥

किंचजीवब्रह्मैक्यानुपलब्ध्यातदैक्याभावएवेत्याह । यदीति ॥ ९८॥ ९९ ॥ अर्केग्रहकोणके संप्राप्तौसम्यगायासंविनैवप्राप्तौ ॥ २००॥ एवंस्वर्गादिभ्योवैराग्यंनसंभवतीत्युक्तमधुनानिरुक्तान्मोक्षादेववैराग्यंदृश्यतइत्याह । तस्मादिति ॥ १ ॥ ननुविषयसुखस्यदुःखमिश्रि तत्वात्कथंतस्यप्रार्थनीयतेत्याशंक्यावर्जनीयतयाऽऽगतेऽपिदुःखेनतत्परिहारेयत्यतेसर्वैर्नतुतद्भयात्सुखंत्यज्यतइत्याह । नहीति ॥ २ ॥ उप संहरति । सुखइति । यथामधुविषसंपृक्तमन्नंविषंपरित्यज्यमधुमिश्रंशिल्पिवरेणापिभोक्तुंशक्यते तथासांसारिकसुखस्यदुःखतादात्म्यपन्न

यदिब्रह्मात्मनोरैक्यंयदावात्मसुखंभवेत् ॥ किमर्थंलौकिकेभोगेसंप्रवृत्ताःपरीक्षकाः ॥ ९८ ॥
नित्यसिद्धंपरित्यज्यप्रवर्तंतेऽन्यसाधने ॥ किमर्थंपंडितास्तत्रतथाभिज्ञैःप्रदर्शितम् ॥ ९९ ॥
अर्केचेन्मधुविंदेतकिमर्थंपर्वतंव्रजेत् ॥ दृष्टस्यार्थस्यसंप्राप्तौकोविद्वान्यत्नमाचरेत् ॥ २०० ॥
तस्मान्मोक्षान्निरानंदाद्विरज्याल्पसुखेऽपिच ॥ दुःखसंमिश्रितेलोकोभोगानंदेप्रवर्तते ॥ १ ॥
नह्यजीर्णभयात्त्यक्तआहारोबुद्धिमत्तरैः ॥ किंतुतत्रप्रतीकारःकृतःशास्त्रविचक्षणैः ॥ २ ॥ सुखे
प्रयत्नःकर्तव्योयथादुःखंनचापतेत् ॥ नवालोकोत्तरेमोक्षेविधेयाशाजनैरिति ॥ ३ ॥ स्यादे
वंयदिवेदोऽपिब्रह्मभिन्नस्यवस्तुनः ॥ सर्वस्यानित्यतांनैवदर्शयेद्युक्तितःस्वयम् ॥ ४ ॥ किंतु
साक्षाच्छ्रुतिस्तत्रानित्यत्वेमानमस्तिभोः ॥ इहकर्मचितोलोकोयथाक्षीयतआवपुः ॥ ५ ॥

स्यदुःखंपरिहृत्यभोक्तुमशक्यत्वात्ततोवैराग्यंसंभवतीत्याशयवाञ्छ्रीशंकराचार्यआह । स्यादेवमिति ॥ ३ ॥ ४ ॥ किंत्विति । कृतकत्वानुमा नानुगृहीता तद्यथेहकर्मचितोलोकःक्षीयतएवमेवामुत्रपुण्यचितोलोकःक्षीयतइति श्रुतिःस्वर्गादिसुखस्यानित्यत्वेप्रमाणमतःसुखस्यानित्य त्वात्ततोवैराग्यमुपपन्नमित्याह । इहेति । इहास्मिन्लोकेकर्मणाकृष्यादिनाचितःसंपादितोलोकःसस्यादिर्यथाक्षीयतएवमेवामुत्रपरलो

केपुण्येनयागजन्यापूर्वेणचितःस्वर्गादिलोकःक्षीयते अतोब्रह्मणःसकाशादन्यदतिरिक्तंस्वर्गादिसर्वमार्तंद्ःखमयंआदिशब्देनयत्रान्यत्पश्य त्यन्यच्छृणोत्यन्यद्विजानातितदल्पंयदल्पंतन्मर्त्यंनाल्पेसुखमस्तीतिवाक्यजातंग्राह्यम् ॥ ५ ॥ ६ ॥ स्वर्गादेरिति । श्रुतिस्थांयुक्तिंस्फो रयति । युक्तितइति ॥ ७ ॥ यज्जन्यमिति । विमतंमिथ्यादृश्यत्वाद्रज्जूरगवदिति । युक्त्यामिथ्यात्वमपीत्याह । दृश्यमिति । वृत्तिप्रति फलितचिद्विषयत्वंदृश्यत्वम् ॥ ८ ॥ परिच्छिन्नत्वमपितत्साधकमित्याह । परिच्छिन्नमिति । त्रिविधोहिपरिच्छेदोदेशकृतःकालकृतोव



एवंपुण्यचितोलोकःक्षीयतेऽमुत्रचेतिहि ॥ अतोऽन्यदार्तमित्यादिवाक्यजातंसहस्रशः ॥ ६ ॥
स्वर्गादेर्वस्तुजातस्यानित्यत्वंदर्शयत्यपि ॥ युक्तितोऽपिप्रपंचस्यानित्यत्वंसंभवेत्खलु ॥ ७ ॥
यज्जन्यंनैवतन्नित्यंदृष्टंसस्यादिवस्तुवत् ॥ दृश्यंयत्तन्ननित्यंस्याद्रज्जुसर्पादिवत्तथा ॥ ८ ॥
परिच्छिन्नंननित्यंस्यात्पिंडकुडयघटादिवत् ॥ आदावंतेचयन्नास्तिवर्तमानेऽपितत्तथा ॥ ९ ॥
स्वप्नवद्ब्यानपुरवन्मनोराज्येंद्रजालवत् ॥ इत्याद्यायुक्तयःसंतिविश्वमिथ्यात्वसाधिकाः ॥ २१० ॥
चातुर्मास्यादिवाक्यानांव्यवस्थांशृणुतत्त्वतः ॥ सापेक्षकंहिनित्यत्वंपुराणेपरिपठ्यते ॥ ११ ॥
आभूतसंप्लवंस्थानममृतत्वंहिभाष्यते ॥ श्रुतावपितथैवेष्टंननित्यत्वंश्रुतेर्मतम् ॥ १२ ॥

स्तुकृतश्चेति तत्रास्वान्यूनसत्ताकात्यंताभावप्रतियोगित्वंदेशतःपरिच्छिन्नत्वं तादृशध्वंसाभावप्रतियोगित्वंकालतःपरिच्छिन्नत्वं तादृशा न्योन्याभावप्रतियोगित्वंवस्तुतःपरिच्छिन्नत्वम् ॥ ९ ॥ २१० ॥ उक्तश्रुतीनांतर्हिकागतिरित्यपेक्षायामाह । चातुर्मास्यादीति । पुराणेवि ष्णुपुराणे ॥ ११ ॥ आभूतसंप्लवंस्थानंभूतप्रलयपर्यंतंस्थितिमत्त्वम् ॥ १२ ॥ ॥ ॥ ॥

नन्वेवमपिविनश्वरेऽविनाशित्वोक्तिरयुक्ताश्रुतेरपीत्याशंक्य चित्तशुद्ध्यर्थंवेदोक्तकर्मणिश्रद्धयाप्रवृत्तयइत्याह। धर्मइति ॥ १३ ॥ चित्तशुद्धेः सचचि
त्तोपयोगइत्यपेक्षायामाह। तदैवेति। तदैवचित्तशुद्धिसमयएवतथाचानर्थात्मदृश्यासंभवोलोकहितायपरमाप्तेनवेदेनबोधनीयः
त्तशोधकधर्मावबोधनंविनानसंभवतीत्यादौ तदवबोधनमावश्यकमित्याह। दृश्येति ॥ १४ ॥ परमाप्तस्यसर्वज्ञस्यवेदस्यान्यथोक्त्वान्य
थाकथनमत्यंतविरुद्धमित्याह। आप्तइति। एतत्स्फुटयति। मृत्योरिति ॥ १५ ॥ पौर्वापर्यविरोधेकथंवदेत् ॥ १६ ॥ तथाचत्रह्मैवनि

धर्मेश्रद्धायथानृणास्यात्तथाश्रुतिरावदेत् ॥ सधर्मश्चित्तशुद्ध्यर्थंचित्तशुद्धिर्यदानृणाम् ॥ १३ ॥
तदैवात्मपरब्रह्मजिज्ञासाजायतेनृणाम् ॥ दृश्यासंभवबोधार्थमादौधर्मावबोधनम् ॥ १४ ॥
आप्तोहिवेदःसर्वज्ञःसकथंचान्यथावदेत् ॥ मृत्योःसमृत्युमाप्नोतियइहनानेवपश्यति ॥ १५ ॥
इत्थंवदन्कथंस्वर्गप्रभृतीनांचनित्यताम् ॥ वदेद्वेदोहिसर्वज्ञोऽपौर्वापर्यानुसारतः ॥ १६ ॥ अतो
ब्रह्मातिरिक्तेभ्यःपुरुषार्थेभ्यएवच ॥ वैराग्यंस्यान्मुमुक्षूणांनित्यानित्यविवेकतः ॥ १७ ॥ सु
खरूपंपरंब्रह्मवेदवाक्यानुसारतः ॥ ब्रह्मविज्ञानमानंदंवदतीतिवचःश्रुतेः ॥ १८ ॥ तत्त्वमस्या
दिभिर्वाक्यैर्जीवानांब्रह्मणासह ॥ स्वतःप्रमाणभूतैस्तैरभेदःप्रतिपाद्यते ॥ १९ ॥ ॥

त्यंवस्तुतदतिरिक्तमखिलमनित्यमिति श्रुतिप्रामाण्यादेवनित्यानित्यवस्तुविवेकस्यसिद्ध्यावैराग्यसिद्धिरित्याह। अतइति ॥ १७ ॥ यत्तु
यदपीत्थंमतंकेषांसुखंब्रह्मणिवस्तुनीत्याद्युक्तंतत्राह। सुखरूपमिति ॥ १८ ॥ नन्वस्तुसुखात्मकंब्रह्म किंतेनजीवानामित्याशंक्याह।
तत्त्वमस्यादीति। स्वतःप्रमाणभूतैःप्रत्यक्षादिप्रमाणानपेक्षप्रमाणैरेतेनप्रत्यक्षादिविरोधस्तत्रनशंकनीयः ॥ १९ ॥ ॥ ॥

नन्वेवंतर्हिकिमितिस्वस्वरूपभूतं सुखंनप्रतीयतइत्याशंक्यावृतत्वादज्ञानदशायामप्रतीतस्यश्रुतिवाक्याद्विचारात्तत्त्वसाक्षात्कारात्तज्ज्ञानंभवत्येवेत्याशयेनाह । जीवस्वरूपेति ॥ २२० ॥ ननुसुखानुभवोऽत्रसुखरूपोऽजोभ्युपेयःकिमित्यावरणकल्पनयेत्याशंक्य विमतआनंदरूपःपरप्रेमास्पदत्वाद्व्यतिरेकेघटवदित्याशयेनाह । परेति । नन्वात्मनःसुखरूपत्वेदुःख्यहमितिप्रतीतिरनुपपन्नेत्याशंक्य दुःखीदेहादितादात्म्याध्यासात्तथाप्रतीतिसत्वेऽपिकेवलस्यानंदरूपत्वेनपरप्रेमास्पदत्वमविरुद्धमित्याशयेनाह । परमिति । परंकेवलंदेहादिविलक्षणमात्मनःस्वरूपं यतोजीवआनंदरूपोऽतआनंदरूपब्रह्मणो नविलक्षणइत्याह । ततइति ॥ २१ ॥ नन्वभयोरानंदरूपत्वेऽपिकथमभेदइत्याशंक्यश्रुत्यैवविज्ञानरूपस्यजीवस्यानंदात्मब्रह्माभेदप्रतिपादनादित्याह । विज्ञानमिति ॥ २२ ॥ ननुनाहंब्रह्मेतिभेदप्रतीतिर्निरवकाशास्यादित्याशंक्याह । भेदइति । तथाचकल्पितेनतेनभेदभानेनननवाभेदप्रत्याख्यानसंभवइत्याह । अभेदमिति ॥ २३ ॥ नन्वभेदएवकल्पितःकुतोनभवेदित्याशंक्य विमतोनब्रह्मनिरूपितभेदवान्चित्त्वात्ब्रह्मवदित्यादियुक्तितः । अयमात्माब्रह्मेत्यादिश्रुतितश्चतस्यवास्तवत्वनिर्धारणान्मैवमित्याह । अभेदइति ॥ २४ ॥ एवंवेदसिद्धमभेदमनादृत्ययोभेदंब्रूयात्सतुवेदबाह्यत्वादसंभाष्यइत्याह । वेदेति ॥ २५ ॥

जीवस्वरूपभूतेऽस्मिन्ब्रह्मानंदेऽपिवस्तुतः ॥ साक्षात्कारोभवत्येवमुमुक्षोरधिकारिणः ॥२२०॥ परप्रेमास्पदंयस्मात्स्वरूपंपरमात्मनः ॥ ततआनंदरूपोऽसौजीवोब्रह्माविलक्षणः ॥ २१ ॥ विज्ञानंजीवमित्याहुःश्रुतयःशतशःस्फुटम् ॥ आनंदंब्रह्मविज्ञानंपुनराहुरभेदतः ॥ २२ ॥ भेदोयोभासतेजीवब्रह्मणोःसतुकल्पितः ॥ अभेदंवास्तवंतेनप्रत्याख्यातुंनशक्यते ॥ २३ ॥ अभेदोवास्तवोब्रह्मजीवयोरस्तियुक्तितः ॥ अयमात्मापरब्रह्माहंब्रह्मास्मीतिचश्रुतेः ॥ २४ ॥ वेदसिद्धमभेदंयस्त्वनादृत्यविमूढधीः ॥ जीवानांब्रह्मणोभेदंवदेद्वेदबहिष्कृतः ॥ २५ ॥ ॥

ब्रह्मशब्दस्यत्रिविधपरिच्छेदशून्यवस्तुप्रतिपादकत्वादनेनजीवेनात्मनाप्रविश्येतिश्रुत्याच ब्रह्मप्राणधारणाज्जीवशब्दाभिधेयमित्याह । ब्रह्मेति । अतएवब्रह्मोपदेशमुपक्रम्यान्नमयप्राणमयमनोमयविज्ञानमयानंदमयाख्यपंचकोशावृतजीवनिरूपणमपिसंगच्छतइत्याशयेनाह । पंचेति ॥ २६ ॥ यत्रनान्यत्पश्यतिनान्यच्छृणोति नान्यद्विजानाति सभूमायोवैभूमातत्सुखमित्यादि श्रुत्या ब्रह्मणएवसुखरूप

ब्रह्मैवव्यापकंवस्तुस्वाज्ञानात्प्राणधारणात् ॥ जीवइत्युच्यतेलोकेपंचकोशावृतत्वतः ॥ २६ ॥ योभूमातत्सुखंनाल्पइतिवेदवचःस्फुटम् ॥ ब्रह्मैवास्तिसुखंनान्यत्पुरुषार्थस्तदेवच ॥ २७ ॥ परप्रेमास्पदब्रह्माभिन्नोजीवःसुखात्मकः ॥ वैदिकानांविवादोऽत्रनास्तिवेदप्रमाणतः ॥ २८ ॥ ब्रह्मानंदसमुद्रस्यलेशभूताःस्वरादयः ॥ आनंदानैवतेप्रार्थ्याःप्रार्थ्यंब्रह्मसुखंबुधैः ॥ २९ ॥ अतः संसारदुःखार्ताःप्रेक्षावंतोऽधिकारिणः ॥ ब्रह्मज्ञानेप्रवर्ततेसदानंदेप्सवोजनाः ॥ २३० ॥ कर्माधीनेसुखेतुच्छेदुःखग्रस्तेविनश्वरे ॥ धीमतांप्रार्थनानास्तिसारासारविचारिणाम् ॥ ३१ ॥ स्वर्गादिकसुखंस्वल्पंप्रसिद्धंकर्मजंयतः ॥ ततोविनश्वरंजन्यंसर्वमेवविनश्वरम् ॥ ३२ ॥ ॥

त्वावधारणात्तस्यपरमपुरुषार्थतेत्याह । यइति ॥ २७ ॥ ननुस्वाश्रयसुखस्यैवपुरुषैरर्थ्यमानतेत्याशंक्याह । परेति ॥ २८ ॥ तथाचविवेकिभिरानंदसमुद्रात्मकंब्रह्मैवप्रार्थ्यंनतुतल्लेशाःस्वर्गादयः प्रार्थ्याइत्याह । ब्रह्मानंदेति । अस्यमहतोभूतस्यमात्रामुपजीवंतीतिश्रुतेः ॥ २९ ॥ ॥ २३० ॥ यत्तुयन्नदुःखेनसंभिन्नमित्यादितत्राह । कर्माधीनइति ॥ ३१ ॥ ३२ ॥ ॥ ॥ ॥

किंचपशुहिंसारूपदुरितजन्यापूर्वसंमिश्रज्योतिष्टोमादिसुकृतजन्यपूर्वजन्यत्वात्स्वर्गादिसुखस्यदुःखग्रस्ततेत्याह। यतइति ॥ ३३ ॥ ३४ ॥ दुःखेति। तथास्वर्गसुखमपिहीनसुखंदुःखाकरोति ॥ ३५ ॥ भवत्येवेति । क्लेशाद्यनंतरंयस्यतत् तर्हिकथंलोकानांतत्प्रार्थनेत्यपेक्षायामा

यतःप्रधानापूर्वस्यज्योतिष्टोमादिजन्मनः ॥ संकरःपशुहिंसादिजन्मनानर्थहेतुना ॥ ३३ ॥
अपूर्वेणततोदुःखग्रस्तंस्वर्गसुखंकिल ॥ परसंपत्समुत्कर्षोहीनसंपज्जनंयतः ॥ ३४ ॥ दुःखाकरो
तिलोकेपिप्रसिद्धंस्वःसुखंतथा ॥ क्षयित्वंस्वःसुखादीनांकृत्रिमत्वादिहेतुभिः ॥ ३५ ॥ भव
त्येवततःस्वर्गसुखंक्लेशाद्यनंतरम् ॥ अभिलाषोनराणांतुपामराणांभवेदिह ॥ ३६ ॥ अतस्तु
च्छसुखंस्वर्गप्रमुखंकर्मजंजडम् ॥ विरज्यास्माज्जनाधीराब्रह्मानंदेप्सवोऽभवन् ॥ ३७ ॥ यत्त्व
योक्तंप्रतिज्ञायांमोक्षःकर्मभ्यएवभोः ॥ तत्तुसाहसमात्रंनोभातिवेदविचारिणाम् ॥ ३८ ॥ च
तुर्विधंकर्मफलंनिश्चितंवेदवादिभिः ॥ उत्पाद्यंचविकार्यंचसंस्कार्यंप्राप्यमेवच ॥ ३९ ॥ उत्पा
द्यःस्याद्यदामोक्षस्तर्ह्यनित्योघटादिवत् ॥ विकार्यश्चेत्तदानश्येद्दध्यादीवस्वतःखलु ॥ २४० ॥ सं
स्कार्यश्चेत्तदाप्येवंविचार्यस्यान्मनीषिणा ॥ संस्कारोऽपिद्विधालोकेगुणाधानेनवस्तुनि ॥ ४१ ॥

ह। अभिलाषइति ॥ ३६ ॥ फलितमुपसंहरति । अतइति ॥ ३७ ॥ इदानींकर्मभ्योमुक्तिरितिदूषयितुमारभते । यदिति ॥ ३८ ॥ ॥३९॥ उत्पाद्यंविकार्यमितिपक्षद्वयंमोक्षानुपयोगीतितद्दूषयति। उत्पाद्यइति॥ २४०॥ तृतीयंकल्पंविकल्प्यदूषयति। संस्कार्यश्चेदिति ॥४१॥

दोषेति । गुणाधानेनमुक्तेर्नसंस्कार्यतेत्याह । नाद्योऽपीति ॥ ४२ ॥ दोषनिरासेनापिनस्यात्संस्कार्यतेत्याह । नेति । चतुर्थंप्रत्याह । आत्मत्वादिति ॥ ४३ ॥ फलितमाह । तस्मादिति । कर्मभ्योमोक्षइतितववचनंतुमोक्षस्वरूपापरिज्ञानादित्याह । मोक्षेति ॥ ४४ ॥ यस्मात्कर्मनमोक्षसाधनंकिंतुज्ञानमेवकेवलंमोक्षसाधनमतोमुमुक्षुभिःकर्माणिपरित्यज्यमोक्षानन्यसाधनंतत्त्वज्ञानंतदनन्यसाधनवेदांतवाक्य

दोषापनयनेनापिमोक्षेनाद्योऽपिसंभवेत् ॥ नाधेयातिशयत्वेनमोक्षोब्रह्मात्मकोयतः ॥ ४२ ॥
नद्वितीयोयतोमोक्षोनित्यशुद्धस्वभावकः ॥ आत्मत्वादेवनप्राप्योनित्यप्राप्तःस्वयंह्यसौ ॥४३॥
तस्माज्ज्ञानादृतेमोक्षोनस्यात्कर्मकलापकैः ॥ मोक्षरूपापरिज्ञानात्कर्मभ्यइतितेवचः ॥ ४४ ॥
अतोवेदांतवाक्यानिब्रह्मज्ञानायसर्वदा ॥ विचार्याणिपरित्यज्यकर्माण्येवंमुमुक्षुभिः ॥ ४५ ॥
स्यादेवंयदिकर्माणिपरित्यज्याधिकारिणः ॥ केवलेब्रह्मविज्ञानेप्रवृत्तामोक्षमाप्नुयुः ॥ ४६ ॥ नैवंकिंतुसदाकर्मकर्तव्यमितिचोदना ॥ वैदिकीदृश्यतेतस्मात्कर्मत्यागोनशस्यते ॥ ४७ ॥ ज्ञानेनकेवलेनैवमोक्षोनैवश्रुतौश्रुतः ॥ कर्मणासहविज्ञानंमोक्षहेतुरुदाहृतम् ॥ ४८ ॥ ॥

विचारएवकर्तव्यइत्याह । अतइति ॥ ४५ ॥ केवलाद्ब्रह्मज्ञानान्मुक्तिरित्युक्तिमसहमानोमंडनआह । स्यादेवमिति ॥ ४६ ॥ यावज्जीवमग्निहोत्रंजुहुयादितिश्रुतिमवलंब्याह । नैवमिति ॥ ४७ ॥ ननुकर्मत्यागाभीष्टसाधनेनमुक्तेःकेवलज्ञानफलकत्वंकथंनिरस्तमित्याशंक्यकर्मत्यागंविनाज्ञानस्यकेवलत्वासिद्धेस्तत्सहकृतज्ञानस्यमोक्षकरत्वश्रुतेश्चेत्याशयेनाह । ज्ञानेनेति ॥ ४८ ॥ ॥ ॥

विद्यांचाविद्यांचेत्यादिश्रुतिमर्थतःपठति । यस्त्विति ॥ ४९ ॥ कुर्वन्नेवेहकर्माणिजिजीविषेच्छतंसमाइतिश्रुतिंयावज्जीवंकर्मविधत्तइत्याह । कुर्वन्नेवेति । ननुश्रुतौशतंसमाइत्युक्तत्वात्कथमुक्तंजीवनावधीतितत्राह । नचेति ॥ २५० ॥ श्रुत्यंतरेयावज्जीवमितिवेदप्रयोगादित्याह । अग्निहोत्रमिति । वचनांतराण्यपियावज्जीवंकर्मकर्तव्यताबोधकान्युपलभ्यंतइत्याह । तमिति ॥ ५१ ॥ वदंतीति । नन्वेवंतर्हिपरीक्ष्यलोकान्कर्मचितान्ब्राह्मणोनिर्वेदमायात् । तमेवविदित्वातिमृत्युमेति नान्यःपंथाविद्यतेऽयनायेत्यादिसन्यासशास्त्रंतत्त्वज्ञानान्मोक्षइतिनिरूपणप

यस्तुविद्याममविद्यांचसहवेदोभयंजनः ॥ मृत्युंचाविद्ययातीर्त्वाविद्ययामृतमश्नुते ॥ ४९ ॥ कुर्वन्नेवेतिकर्माणिविधत्तेजीवनावधि ॥ नचवर्षशतादायुर्मर्त्यानांपरमस्तिच ॥ २५० ॥ अग्निहोत्रंचजुहुयाद्यावज्जीवमितिश्रुतेः ॥ तंयज्ञपात्रैर्दहतीत्येवमादिवचांसिच ॥ ५१ ॥ वदंतिकर्मकर्तव्यंयावज्जीवंनृणामिह ॥ पारिव्राज्यादिशास्त्रंतुप्रशंसार्थंभवत्विति ॥ ५२ ॥ यद्वाधिकारशून्यानामंधपंग्वादिदेहिनाम् ॥ पारिव्राज्येऽधिकारोऽस्तुयतस्त्यागोनकर्मणाम् ॥ ५३ ॥ श्रुतयःप्रवदंत्येवंज्ञानंस्यात्कर्मिणामपि ॥ मोक्षहेतुरतोविप्राज्ञानकर्मसमुच्चयः ॥ ५४ ॥ येनशास्त्रेणविज्ञानंबोध्यतेतेनकर्मच ॥ कर्मिणामात्मविज्ञानंनकर्मत्यागिनांभवेत् ॥ ५५ ॥ ॥ ॥ ॥

रंज्ञानशास्त्रंचकथमुपपद्यतइत्याशंक्याह । पारिव्राज्येति ॥ ५२ ॥ अथवाकर्मानधिकारिणामंधपंग्वादीनांसंन्यासविधानार्थंसंन्यासशास्त्रमित्याह । यद्वेति ॥ ५३ ॥ नन्वेमवपिकर्मव्यापृतानांकथंज्ञानमित्याशंक्यशास्त्रप्रामाण्यादित्याह । श्रुतयइति । अतोज्ञानकर्मसमुच्चयःमोक्षहेतुर्निष्प्रत्यूहइत्युपसंहरति । मोक्षहेतुरिति ॥ ५४ ॥ ज्ञानशास्त्रकर्मशास्त्रयोरन्यतरप्राबल्येकारणाभावात्समुच्चयसिद्धिरित्याह । येनेति ॥ ५५ ॥ ॥ ॥ ॥

वेदस्यात्यंतगंभीरार्थत्वान्मोक्षहेतुत्वेनापाततोब्रह्मज्ञानकर्मसमुच्चयःप्रतीयते विचार्यमाणेतुनतथावेदार्थइतिपरिहरतिश्रीशंकराचार्यः। स्यादेवमिति। अविचारतोविचारंविनेत्युत्तरान्वयि ॥ ५६ ॥ ५७ ॥ ५८ ॥ उक्तमेवविवृणोति। अद्वितीयमिति ॥ ५९ ॥ २६० ॥ कस्यतर्हि

स्यादेवंतववेदार्थविज्ञानेचेत्स्वतंत्रता ॥ नैवंकिंतुस्वयंवेदोगंभीरार्थोविचारतः ॥ ५६ ॥ भेदोनैवत्वयाबुद्धोह्युभयोर्ज्ञानकर्मणोः ॥ श्रोतव्यःसत्वयेदानींवेदार्थगतचेतसा ॥ ५७ ॥ ज्ञानंयस्यसमुत्पन्नंसर्वदोषविवर्जितम् ॥ ब्रह्मात्मनिह्यसंदिग्धंतस्यकर्मनसंभवेत् ॥ ५८ ॥ अद्वितीयंपरंब्रह्मकर्तृशून्यंश्रुतेर्मतम् ॥ तस्यात्मत्वेनविज्ञानेक्रियानैवोपपद्यते ॥ ५९ ॥ स्वात्मनोऽन्यतिरिक्तंचक्रियाकर्तृफलादिकम् ॥ अपश्यतःकथंकर्मकर्तव्यंश्रुतिरावदेत् ॥ २६० ॥ यस्यकर्तृत्वविज्ञानंस्वात्मन्येवक्रियादिकम् ॥ पश्यतोऽध्यासमाश्रित्यतस्यकर्मश्रुतिर्वदेत् ॥ ६१ ॥ अहंकर्ताफलंमेऽस्तुकर्मणोऽस्येतिवेदिनः ॥ समग्राण्येवकर्माणितस्यैवेतिश्रुतेर्मतम् ॥ ६२ ॥ अतोब्रह्मात्मविज्ञानीनियोक्तुंकेनचिन्नहि ॥ शक्यतेकर्मणीत्येवमाम्नायस्याप्यतोजनिः ॥ ६३ ॥ अथाम्नायस्यनित्यत्वात्स्वातंत्र्येणैवसर्वकान् ॥ जनान्प्रतिनियोक्तृत्वसामर्थ्यमितिचेच्छृणु ॥ ६४ ॥ ॥

कर्मस्वधिकारइत्याकांक्षायामाह। यस्येति ॥ ६१ ॥ ६२ ॥ फलितमाह। अतइति । नियोक्तुराम्नायस्यापिब्रह्मस्वरूपात्तत्त्वविदोजातत्वात्कथंतस्यनियोज्यतेत्याह। आम्नायस्येति ॥ ६३ ॥ शंकते। अथेति ॥ ६४ ॥ ॥ ॥ ॥ ॥

एवंतर्हिसर्वस्यसर्वत्राधिकारप्रसंगात्संकरप्रसंगइति समाधत्ते । सर्वानेवेति ॥ ६५ ॥ प्राप्तइति । एकस्मिन्नधिकारिण्येकस्मिन्कालेस विरुद्धार्थस्यबोधः ॥ ६६ ॥ तथाचविरुद्धार्थंप्रतिपादयन्वेदःप्रामाण्याद्धीयेतेत्याह । कृताकृतस्येति ॥ ६७ ॥ यथैकस्यसलिलाग्न्यादे र्विरुद्धधर्माश्रयत्वंनदृष्टं तथैकस्याधिकारिणोयुगपद्विरुद्धधर्माश्रयत्वमनुपपन्नमित्याह । एकस्मिन्सलिलइति ॥ ६८ ॥ किंचेष्टानिष्टप्राप्ति



सर्वानेवजनांस्तर्हिसर्वंकर्मसमादिशेत् ॥ वर्णाश्रमविभागेनबोधनंस्याद्वृथाश्रुतेः ॥ ६५ ॥ प्राप्तो ऽयंसंकरोदोषोवेदेकेनप्रमार्ज्यते ॥ विरुद्धार्थस्यबोधोऽपिह्येकस्मिन्सकथंभवेत् ॥ ६६ ॥ कृताकृ तस्यसंबंधीतद्विहीनःसएवच ॥ एवंचेद्बोधयेद्वेदःप्रमाणंस्यात्कथंतदा ॥ ६७ ॥ एकस्मिन्सलि लेऽग्नौवाशीतोष्णत्वंसहैवच ॥ नसंभवेत्तथाविद्याविद्याचैकनरेसह ॥ ६८ ॥ इष्टंमेस्यादनिष्टंमेमा भूदेवंविकल्पना ॥ नशास्त्रेणकृतायस्मात्सर्वेषामेवदृश्यते ॥ ६९ ॥ स्वतोऽप्राप्तंहियद्वस्तुतद्धि शास्त्रेणबोध्यते ॥ नहिरागादयःशास्त्रबोध्यंतेतेस्वभावजाः ॥ २७० ॥ शास्त्रेणैवात्मविज्ञानंकर्त व्यत्वविरोधिच ॥ ज्ञापितंतद्विरुद्धंतत्कर्तव्यत्वंकथंवदेत् ॥ ७१ ॥ अग्नौहिशीतताभानौतमो यद्वन्नसंभवेत् ॥ तथाब्रह्मात्मविज्ञानेकर्तव्यत्वंनसंभवेत् ॥ ७२ ॥ तत्त्वमस्यादिभिर्वाक्यैर्जातंज्ञा नंनबाध्यते ॥ ब्रह्मात्मज्ञानिनस्तस्मात्कर्मणांनैवसंभवः ॥ ७३ ॥ ॥

परिहारवत्साधनप्रवृत्तेर्लोकतएवसिद्धत्वान्नतत्रशास्त्रतात्पर्यमित्याह । इष्टमिति ॥ ६९ ॥ २७० ॥ किंचस्वोक्तविरुद्धकथनंवेदस्यापिविरुद्ध मित्याह । शास्त्रेणैवेति ॥ ७१ ॥ ७२ ॥ ननुतत्त्वमस्यादिवाक्यजन्यज्ञानस्यबाधकालेऽस्तुकर्मण्यधिकारइतिचेत्तत्राह । तत्त्वेति ॥ ७३ ॥

तस्मात्त्वदुक्तंसाहसमात्रमित्याह । अग्निहोत्रेति॥ ९३ ॥ किंच यत्रजिज्ञासोरप्यधिकारस्तत्रविदुषोऽधिकारइत्यत्रकिमाश्चर्यमित्याह । जिज्ञासुरपीति ॥ ९४ ॥ किंवयंप्रजयाकरिष्यामइत्याद्याश्रुतिरेवभवतानश्रुतेतिप्रतिभातीत्याह । प्रजयेति ॥ ९५ ॥ वेदज्ञेनव्यासेनापिविमलाधिकारकौद्वौमार्गौविभज्यपुत्रंप्रतिप्रकाशिताविल्याह । द्वाविति॥ ९६ ॥ ९७॥ अधिकारिविषयंतदन्वयंदूषयति । यत्त्विति ॥९८॥

अग्निहोत्रादिकर्माणिसंभवंत्यात्मवेदिनः ॥ कर्मिणःसंभवेज्ज्ञानमित्येवातीवसाहसम् ॥ ९३ ॥
जिज्ञासुरपिबोधस्यकर्मत्यागेऽधिकारवान्॥ किंपुनर्विदुषःकर्मसंन्यासोऽस्तीत्यलौकिकम्॥ ९४॥
प्रजयाकिंकरिष्यामइत्येवंनश्रुतिःश्रुता ॥ इमौद्वावेवपंथानावित्यपिश्रुतिरश्रुता ॥ ९५ ॥ द्वाविमावथपंथानौयत्रवेदाःप्रतिष्ठिताः ॥ एवंविचार्यपुत्रायवेदव्यासेनवेधसा ॥ ९६ ॥ वेदाचार्येणनिश्चित्यविभागोदर्शितस्तयोः ॥ विज्ञानकर्मणोरेवह्यधिकारविभागतः ॥ ९७ ॥ यत्तूक्तंकर्मणांत्यागोभवेदनधिकारगः ॥ स्तुत्यर्थोवेतितन्नैवंवेदवाक्यविरोधतः ॥ ९८ ॥ नकर्मणा नप्रजयानधनेनविमुक्तिता ॥ एकेत्यागेनसंप्राप्तामोक्षमित्यब्रवीच्छ्रुतिः ॥ ९९ ॥ यस्मिन्दिने विरज्येतप्रव्रजेत्तद्दिनेबुधः ॥ न्यासस्तपःपरोन्यासोन्यासोब्रह्मेतिचश्रुतिः ॥ ३०० ॥ ॥

किंतद्वेदवाक्यमित्यपेक्षायांनकर्मणानप्रजयाधनेनत्यागेनैकेअमृतत्वमानशुरितिवेदवाक्यमर्थतःपठति । नेति ॥ ९९ ॥ यदहरेवविरजेत्तदहरेवप्रव्रजेत्न्यासइतिब्रह्मब्रह्महिपरइत्यादिश्रुतिवाक्यमपीत्याह । यस्मिन्निति ॥ ३०० ॥ ॥ ॥ ॥

स्मृतिवाक्यमप्युदाहरति । कर्मणेति । इदंशुकादिशासनम् ॥ १ ॥ संसारमेवेतिबृहस्पतिवाक्यम् ॥ २ ॥ निगमवाक्यान्युदाहृत्य वेदवाक्यानितत्राह । इत्थमिति । तस्मात्तन्नैवम् ॥ ३ ॥ किंचभगवद्वाक्यमप्यत्रप्रमाणमित्याह । तथेति ॥ ४ ॥ लोकइति । इह लोकेऽस्मिन्शास्त्रोक्तानुष्ठानाधिकृतेत्रैवर्णिकेजनेशुद्धाशुद्धांतःकरणतयाद्विविधे द्विविधाउपायोपेयभेदेनद्विःप्रकारानिष्ठाअनुष्ठेयतात्पर्यंपुरासर्गादौमयासर्वज्ञेनेश्वरेणप्रजाःसृष्ट्वातासामभ्युदयनिःश्रेयससाधनंवेदार्थतात्पर्यमाविष्कुर्वताहेअनघापाप प्रोक्ता । निष्ठायाःप्रकारवि



कर्मणाबध्यतेजंतुर्विद्ययाचविमुच्यते ॥ तस्मात्कर्मनकुर्वंतियतयःपारदर्शिनः ॥ १ ॥ संसारमेवनिःसारंदृष्ट्वासारदिदृक्षया ॥ प्रव्रजंत्यकृतोद्वाहाःपरंवैराग्यमाश्रिताः ॥ २ ॥ इत्थंह्यागमवाक्यानिस्मृतिवाक्यानिभूरिशः ॥ संन्याससाधकान्यत्रबाध्येरंस्तेमतेततः ॥ ३ ॥ तथानारायणोऽप्याहभगवान्देवकीसुतः ॥ गीताशास्त्रेविविच्यैवंनिष्ठांविज्ञानकर्मणोः ॥ ४ ॥ लोकेऽस्मिन्द्विविधानिष्ठापुराप्रोक्तामयानघ ॥ ज्ञानयोगेनसांख्यानांकर्मयोगेनयोगिनाम् ॥५॥ यस्त्वात्मरतिरेवस्यादात्मतृप्तश्चमानवः ॥ आत्मन्येवचसंतुष्टस्तस्यकार्यंनविद्यते ॥ ६ ॥

भागमाह । ज्ञानेति । युज्यतेब्रह्मणानेनेतियोगःज्ञानमेवयोगोज्ञानयोगस्तेनसांख्यानांचित्तशुद्ध्यात्मानात्मविषयविवेकज्ञानवतांनिष्ठास्थितिःप्रोक्ताचित्तशुद्धिद्वारा युज्यतेनेनज्ञानेनेतियोगः कर्मैवयोगःकर्मयोगस्तेनयोगिनामशुद्धांतःकरणानांकर्मणांमयाप्रोक्तेत्यर्थः॥५॥ यस्त्विति । यस्तुमानवआत्मज्ञाननिष्ठआत्मन्येवरतिर्यस्यनविषयेषुसआत्मनैवचतृप्तोनान्नरसादिनाआत्मन्येवतुष्टो बाह्येष्वर्थेषुसर्वतोविगतस्पृहश्चस्यात्तस्यकार्यंकर्तव्यंनविद्यते ॥ ६ ॥ ॥ ॥ ॥ ॥ ॥ ॥

ननुतस्यकृताकृतास्पर्शित्वात्संन्यासेनापिकेनापिकोऽर्थइत्याशंकते । नैवेति ॥ ७४ ॥ वैषम्यप्रदर्शनेनपरिहरति । अक्रियामात्रेति ॥ ७५ ॥ ॥ ७६ ॥ अत्रस्मृतिमुदाहरति । यद्यदिति । श्रुतिमुदाहरति । यथाकामस्तथाक्रतुःसंकल्पः ॥ ७७ ॥ तथाचकर्मनिमित्तस्यतत्त्वज्ञाने

नैवतस्यकृतेनार्थोनैवानर्थोऽकृतेनच ॥ संन्यासेऽपिनतस्यार्थइतिचेन्नकुतःशृणु ॥ ७४ ॥ अक्रियामात्ररूपत्वात्संन्यासस्यस्वभावतः ॥ ब्रह्मात्मज्ञानिनःप्राप्तिर्नप्रयत्नोभवेदिह ॥ ७५ ॥ आत्माज्ञाननिमित्तत्वंकाममूलस्यकर्मणः ॥ विनाकामंक्रियानास्तिवाङ्मनःकायवर्तिनी ॥ ७६ ॥ यद्यद्धिक्रियतेकर्मतत्तत्कामस्यचेष्टितम् ॥ यथाकामःक्रतुस्तद्वदित्येवंतेश्रुतिस्मृती ॥ ७७ ॥ अविद्याकामदोषादिनिमित्तस्यास्यकर्मणः ॥ अविद्यादिपरिक्षीणेविदुषांनास्तिसंभवः ॥ ७८ ॥ संन्यासस्तुस्वतःप्राप्तःपरब्रह्मात्मवेदिनः ॥ सकिंप्रयोजनोनेतिसंन्यासेप्रश्नयोग्यता ॥ ७९ ॥ अंधकारेप्रवृत्तस्यालोकेतत्रोदितेसति ॥ गर्तपंकाद्यपतनेप्रश्नार्हैनप्रयोजनम् ॥ २८० ॥ गार्हस्थ्येचेत्परंब्रह्मविज्ञानंनिश्चयात्मकम् ॥ जातंतत्रासनंचास्तुनसंन्यासेप्रयोजनम् ॥ ८१ ॥ इतिचेन्नैवकामादिप्रयुक्तत्वाद्गृहस्थितेः ॥ पुत्रवित्तादिसंबंधंनियमोयस्तुरागतः ॥ ८२ ॥

नापायेविदुषांकथंकर्मण्यधिकारसंभवइत्याह । अविद्येति ॥ ७८ ॥ ससंन्यासःकिंप्रयोजनइतिसंन्यासेप्रश्नयोग्यतानास्ति ॥ ७९ ॥ तत्रदृष्टांतमाह । अंधकारइति ॥ २८० ॥ शंकते । गार्हस्थ्यइति ॥ ८१ ॥ उक्तसमाधानेनपरिहरति । इतिचेन्नेति ॥ ८२ ॥ ॥

व्युत्थानमिति । पुत्रैषणावित्तैषणालोकैषणाभ्योव्युत्थानंयदुक्तंतत्त्रागाभवोविवक्षितोनत्वन्यत्रगतिरुच्यतेअन्यत्रगतेरपिरागाभावएव तात्पर्यादित्याह । अन्यत्रेति ॥ ८३ ॥ ममत्वेति । फलितमाह । अतइति ॥ ८४ ॥ शंकते । श्रुतयइति ॥ ८५ ॥ समाधत्ते । शृण्वि



व्युत्थानंतदभावोऽत्रनान्यत्रगतिरुच्यते ॥ अन्यत्रगमनंरागाभावएवविवक्षितः ॥ ८३ ॥ मम त्वाभावएवेष्टःसर्वत्रविदुषांयतः ॥ अतःसर्वपरित्यागःसंन्यासःकर्मणांतथा ॥ ८४ ॥ विदुषां सिद्धएवातःसाहसंतन्निषेधनम् ॥ श्रुतयोदर्शिताःपूर्वंकर्मज्ञानसमुच्चये ॥ ८५ ॥ तासांस्यात्का गतिस्तर्हीत्येवंचेत्त्वंशृणुस्फुटम् ॥ विद्याहिदेवताज्ञानमविद्याकर्मचोच्यते ॥ ८६ ॥ मृत्युः स्वाभाविकंकर्मज्ञानंतत्रप्रकीर्तितम् ॥ अमृतंदेवताभावःसहानुष्ठानतोनृणाम् ॥ ८७ ॥ कर्मो पासेसहैवेत्थंकर्मेअर्थइतिश्रुतेः ॥ कुर्वन्नेवेतिवाक्यस्यभावार्थःकथ्यतेऽधुना ॥ ८८ ॥ अज्ञा निनोऽधिकारार्थंकर्मावश्यकतांश्रुतिः ॥ दर्शयत्यत्रतस्यैवजीवनेच्छापिदृश्यते ॥ ८९ ॥ जी वितुंचेच्छतांपुंसांनत्याज्यंकर्मकर्हिचित् ॥ ब्रह्मात्मज्ञानिनःपुंसोजीवनेच्छानयुज्यते ॥२९०॥ जीवनेच्छाप्रयुक्तंतत्कथंकर्मास्यसंभवेत् ॥ स्वर्गाभिलाषिणःपुंसोयावज्जीवादिचोदनाः ॥ ९१ ॥ संभवंतियतोदोषाःकामाद्यास्तत्रसंत्यपि ॥ देहाभिमानिनःपुंसोविधिकिंकरतासदा ॥ ९२ ॥



ति ॥ ८६ ॥ ८७ ॥ अमुनाप्रकारेणकर्मोपासनेसहैवकार्यइत्युक्तश्रुतेरर्थः ॥ ८८ ॥ ८९ ॥ २९० ॥ ९१ ॥ ९२ ॥ ॥ ॥

इतीति । आदिपदेननैवतस्यकृतेनार्थोनाकृतेमेहकश्चनेत्यादिवाक्यजातंग्राह्यम् ॥ ७ ॥ शास्त्रार्थस्त्वेवमेवपरंत्वेवंविधशास्त्रार्थग्राहकबु द्धिप्रदेश्वराराधनंभवतानकृतमतःसुबुद्ध्यैनायातीत्याह । परंत्विति ॥ ८ ॥ सर्वकर्मफलप्रदईश्वरइत्युक्तिमसहमानोमंडनःशंकते । नन्वि ति । तर्हिफलंकस्माद्भवतीत्याशंक्यकर्मणएवेत्याह । यदिदमिति । स्वातंत्र्येणेश्वरापेक्षांविनैव ॥ ९ ॥ कर्मणइति । ननुजडस्यतस्यकथं स्वातंत्र्येणफलप्रदातृत्वमित्याशंक्य तस्याचिंत्यप्रभावत्वाभ्युपगमादित्याह । तस्येति । वेदवेदिभिःस्वर्गकामोयजेतेत्यादिवेदज्ञैः याग

इत्यादिबहुशस्तत्रज्ञाननिष्ठाविभागशः ॥ उक्ताभगवताकर्मनिष्ठाकर्माधिकारिणाम् ॥ ७ ॥
परंतुबुध्यतेऽस्माभिरीश्वरोनार्चितस्त्वया ॥ अद्वैतवासनादातासर्वकर्मफलप्रदः ॥ ८ ॥ ननू
क्तंकिंत्वयेदानीमीशःकर्मफलप्रदः ॥ यदिदंभोगवैचित्र्यंदेशकालनिमित्तवत् ॥ ९ ॥ कर्मणो
जायतेसर्वंस्वातंत्र्येणफलप्रदात् ॥ तस्याचिंत्यप्रभावत्वंस्वीकृतंवेदवेदिभिः ॥ ३१० ॥ ईश्वरो
ऽपिनृणांकर्मसापेक्ष्यैवफलप्रदः ॥ वैषम्यनिर्दयत्वादिदोषापनयनायच ॥ ११ ॥ भवद्भिरपिव
क्तव्योवेदवित्त्वाभिमानिभिः ॥ यद्विनापरमेशस्यसामर्थ्यंनैवलभ्यते ॥ १२ ॥ ॥

स्यस्वर्गसाधनत्वाभावेतदुपदेशवैय्यर्थ्यप्रसंगः अवश्यविनाशिनोऽपिकर्मणःश्रुतिप्रामाण्यात्फलसंबंधःश्रुतोयथोपपद्यतेतथाकल्पयितव्यः। नचानुत्पाद्यकिमप्यपूर्वंविनश्यत्कर्मकालांतरितफलंदातुंशक्नोत्यतःकर्मणःसूक्ष्माकाचिदुत्तरावस्थाफलस्यवापूर्वनामावश्यास्तीतिकल्प्यत इतिभावः ॥ ३१० ॥ किंचेश्वरस्यतत्त्वाभ्युपगमेऽपिनास्तिकर्मांतरानिस्तारस्तद्विनेश्वरस्यवैषम्यनैर्घृण्यप्रसंगादित्याह । ईश्वरइति ॥ ११ ॥ भवद्भिरिति । तथाचयत्कर्मविनेश्वरस्यापिफलदानसामर्थ्यंदुर्लभंतदेवस्वतंत्रंफलप्रदातृकिमितिनाभ्युपगम्यतइत्याह । यद्विनेति ॥ १२ ॥

जन्तूनामिति। तस्मात्कर्मणैवनिर्वाहेकिमीश्वराधिककल्पनयेत्याह। किमर्थमिति ॥१३॥ किंच कर्माधिककल्पनायांगौरवंभवतामित्याह। कर्मणामिति। तत्रतस्यांकल्पनायाम् ॥ १४ ॥ नन्वचेतनाःसृत्पिंडादयश्चेतनकुंभकाराद्यधिष्ठिताःकुंभाद्यारंभकादृष्टाः कल्पनाचदृष्टानुसारिण्येवयुक्ता तस्मादचेतनाधिष्ठितात्केवलादचेतनात्कर्मणःफलप्राप्तिरनुपपन्नेत्याशंक्याह। यदीति। विमतंचेतनाधिष्ठितमचेतनत्वान्मृदादिवदित्यनुमानेनसिद्धस्यकर्मणोजीवचैतन्याधिष्ठितत्वंसाध्यतइतिभावः ॥ १५ ॥ आचार्यःसमाधत्ते। स्यादेवमिति ॥ १६ ॥

जंतूनांफलदानेऽतःस्वतंत्रंस्यात्तदेवहि ॥ किमर्थमीश्वरोऽपूर्वःकल्प्यतेनिष्प्रयोजनः ॥ १३ ॥
कर्मणांफलदातृत्वंप्रतिपन्नंविहाययत् ॥ ईश्वरःकल्प्यतेतत्रगौरवंभवतांभवेत् ॥ १४ ॥ यदि
चैतन्यमात्मानंविनाकर्माणिसत्फलम् ॥ नैवदद्युस्तदात्रास्तुकर्ताजीवःप्रयोजकः ॥ १५ ॥
स्यादेवंयदिवैचित्र्यंप्रपंचस्यास्यसंभवेत् ॥ सर्वज्ञेशंविनालोकेकेवलात्कर्मणःस्वतः ॥ १६ ॥
यदिदंदेवगंधर्वयक्षरक्षःसमन्वितम् ॥ वियदादिपृथिव्यंतमर्कचंद्रग्रहान्वितम् ॥ १७ ॥ विचि
त्रप्राणिनांभोगयोग्यस्थानविहारवत् ॥ अचिंत्यरचनारूपंकुशलैरपिशिल्पिभिः ॥ १८ ॥ दे
शकालनिमित्तानुरूपानियतवृत्तिकम् ॥ साध्यसाधनसंबंधिजगदेतच्चराचरम् ॥ १९ ॥

नचैतदस्तीतिसामान्यतोदृष्टानुमानमाह। यदिति। यदिदंजगत्तदेतद्भोक्तृकर्मविभागज्ञफलपूर्वकंभवितुमर्हतीतिव्यवहितेनान्वयः ॥१७॥ ॥ १८ ॥ देशेति। देशकालनिमित्तानुरूपाअनियताप्रतिनियतावृत्तिःप्रवृत्तिर्यत्र तथाच स्वर्गफलस्यप्रवृत्तिर्मेरुपृष्ठदेशानुरूपाप्रतिनियता ऐहिकभोगस्यभूमंडलदेशानुरूपा तथास्वर्गफलप्रवृत्तिर्देहपातादूर्ध्वकालानुरूपाप्रतिनियता पुत्रफलप्रवृत्तिर्बाल्यादूर्ध्वकालानुरूपाप्रतिनियता तथास्वर्गप्रवृत्तिरुत्तरायणमरणनिमित्तानुरूपाप्रतिनियता ग्रामादिप्राप्तिजनितसुखप्रवृत्तीराजप्रसादादिनिमित्तानुरूपेत्यर्थः ॥१९॥

उक्तविशेषणविशिष्टंजगेदतद्भोक्तृकर्मविभागज्ञप्रयत्नपूर्वकंभवितुमर्हति कार्यत्वेसतियथोक्तलक्षणत्वाद्विचित्रत्वाद्गृहादिवद्विपक्षआत्मादिव दित्याह । भोक्तृकर्मेति । अनादिभूतविचित्रयत्नाभावेजीवेषुव्यभिचारादाह । कार्यत्वेसतीति । अबुद्धिपूर्वकार्येतद्वारणायविशेष्यो पादानम् ॥ २० ॥ इत्यनुमानादीश्वरादन्यस्मात्तथाविधात्कर्मणःफलंनसंभवति ॥ २१ ॥ नन्वीश्वरादपिकथंसंभवइत्याशंक्यतस्यनित्यत्वा दिनाश्रुत्यादौविशेषितत्वात्तथाविधजगतस्तथाविधेश्वरयत्नपूर्वकत्वौचित्यादित्याशयेनाह । ईश्वरइति ॥ २२ ॥ यागादिक्रियायाःस्वा तंत्र्यनिरासायक्रियाद्वैविध्यमाह । क्रियाहीति । तत्रदृष्टफलाद्विधा अनंतरफलाकालांतरफलाचेतिविकल्प्यानंतरफलाफलापवर्गिण्ये

भोक्तृकर्मविभागज्ञयत्नपूर्वकमर्हति ॥ भवितुंसतिकार्यत्वेप्रोक्तलक्षणभावतः ॥ २० ॥ गृहप्रासा दशयनासनदुर्गरथादिवत् ॥ विपक्षेत्वात्मवद्बोध्यमितिनास्त्यन्यतःफलम् ॥ २१ ॥ ईश्वरोयुं क्षतेनित्यःसर्वज्ञःसर्वशक्तिकः ॥ देशकालनिमित्तादिनियंताभोगदायकः ॥ २२ ॥ क्रियाहिद्वि विधालोकेदृष्टादृष्टफलामता ॥ भुजिक्रियादृष्टफलातथागम्यादिकाक्रिया ॥ २३ ॥ कालांतर फलासेवाकृष्याद्योत्पन्ननाशिनी ॥ कालांतरफलादृष्टफलसादृश्यहेतुतः ॥ २४ ॥ कालांतरफ लायातुक्रियासात्रविचार्यते ॥ फलंचकृषिसेवादेर्दृष्टंसेव्याद्यधीनकम् ॥ २५ ॥

वभुजिगमिलक्षणा कालांतरफलातुकृषिसेवादिलक्षणोत्पन्नध्वंसिनीतिद्विविधक्रियास्वरूपमाह । भुजीति ॥२३॥ कालांतरेति । तत्रानंतरफ लायाअदृष्टफलयासाम्याभावात्तद्वर्णनस्यतन्निर्णयानुपयुक्तत्वात्तदुपयुक्ततत्सदृशकालांतरफलक्रियावर्णनंप्रतिजानीते । कालांतरफलादृष्टे ति । अदृष्टफलायादेहांतरफलायाअपि कालांतरफलत्वात्तत्सादृश्यहेतोरित्यस्योत्तरेणान्वयः ॥ २४ ॥ कालांतरेति । सेवाद्याक्रियाकिंस्वातंत्र्ये णफलप्रदाकिंवासेव्यादिपारतंत्र्येणेतिविचार्यते विचार्यमाणेकोवापक्षःसिद्ध्यतीत्यपेक्षायामाह । फलंचेति । तथैवदृष्टत्वादितिभावः ॥ २५ ॥

॥ २६ ॥ तथाचकर्मफलप्राप्तौदृष्टन्यायापहानानुपपत्त्या शांतेयागादिकर्मणि नित्यःकर्तृकर्मफलविभागज्ञईश्वरः सेव्यादिवद्यागाद्यनुरूपफलदाताभिमतइत्याह । कर्तृकर्मेति ॥ २७ ॥ सचात्मभूतःसर्वस्यसर्वक्रियाफलप्रत्ययसाक्षीनित्यविज्ञानस्वभावःसंसारधर्मैरसंस्पृष्टइत्येवश्रुतिबोध्यइत्याह । आत्मभूतइति ॥ २८ ॥ साक्षीति । नलिप्यतेलोकदुःखेनबाह्योजरांमृत्युमत्येतिविजरोविमृत्युःसत्यकामःसत्यसंकल्पएषसर्वेश्वरइत्यादिश्रुत्यापिश्रुतइत्याह । तथेति ॥ २९ ॥ ३३० ॥ एषह्येव साधुकर्मकारयति तंयमेभ्योलोकेभ्यउन्निनीषते एषएवा

तथायागादिकर्माणिकालांतरफलानिच ॥ ईशायत्तानिबोध्यानिनस्वतंत्राणिकर्हिचित् ॥ २६ ॥
कर्तृकर्मफलानांयोविभागज्ञःसईश्वरः ॥ शांतेकर्मणिसेव्यादिवत्कर्मफलदोमतः ॥ २७ ॥ आ
त्मभूतःससर्वेषांनित्यज्ञानस्वभावकः ॥ सर्वकर्तृक्रियाभोगफलप्रत्ययभासकः ॥२८॥ साक्षीसं
सारधर्मैर्योऽसंस्पृष्टइतिचश्रुतः ॥ तथानलिप्यतेलोकदुःखेनेतियतोबहिः ॥ २९ ॥ अजरोमृ
त्युमत्येतिसत्यकामःसईश्वरः ॥ सत्यसंकल्पएवासावेषसर्वेश्वरस्त्विति ॥ ३३० ॥ यमिच्छति
सउन्नेतुंपुण्यंतंकारयत्यजः ॥ यमिच्छतित्वधोनेतुंपापंतंकारयत्यपि ॥ ३१ ॥ एषलोकपतिःपा
लोऽनश्नन्नन्यःप्रकाशते ॥ सूर्याचंद्रमसौगार्गिह्यक्षरस्यप्रशासने ॥ ३२ ॥

साधुकर्मकारयतितंयमेभ्योलोकेभ्योऽधोनिनीषतइत्यादिश्रुतिमर्थतःपठति । यमिति ॥ ३१ ॥ एषलोकपतिःएषलोकपालः अनश्नन्नन्योऽभिचाकशीति एतस्यवाअक्षरस्यप्रशासनेसूर्याचंद्रमसौविधृतौतिष्ठतइत्याद्याःसहस्रशोऽसंसारीश्वरसाधकाः प्रमाणभूतानत्वर्थवादभूताःश्रुतयोवेदेसंतीत्याह– एषइति । अन्यःअसंसारीपरमात्माअनश्नन्कर्मफलमभुंजन्हेगार्गिअक्षरस्यपरिपूर्णस्याविनाशिनः ॥ ३२ ॥ ॥

॥ ३३ ॥ ईश्वरइति । ईश्वरईशनशीलोनारायणः सर्वेषांभूतानांप्राणिनांहृद्देशेतिष्ठति सर्वत्रस्थितोऽपिहृदयेऽभिव्यक्ततयातथोक्तिः किंकुर्व न्नित्याकांक्षायामाह । भ्रामयन्निति । यंत्रारूढान्यधिष्ठितानीवसर्वभूतानिभ्रामयन् तेषांभ्रमणंकारयन् यथामायावीदारुकृतपुरुषादी नियंत्रारूढानिमाययाभ्रामयंस्तिष्ठति तद्वदीश्वरोयंत्रसदृशशरीरारूढानिभूतानीत्यर्थः ॥ ३४ ॥ इत्याद्याइतिआद्यपदेन अज्ञोजंतुरनीशोऽय मात्मनःसुखदुःखयोः । ईश्वरप्रेरितोगच्छेत्स्वर्गंवाश्वभ्रमेववेत्याद्याग्राह्याः ॥ ३५ ॥ श्रुतयइति । नन्वासामर्थवादरूपत्वंकुतोनस्वीकार्यमित्या

विधृतौतिष्ठतश्चैवंपरमेश्वरसाधिकाः ॥ प्रमाणभूताःसंत्यत्रश्रुतयःस्मृतयस्तथा ॥ ३३ ॥ ईश्व रःसर्वभूतानांहृद्देशेऽर्जुनतिष्ठति ॥ भ्रामयन्सर्वभूतानियंत्रारूढानिमायया ॥ ३४ ॥ इत्याद्या ईशनिष्ठावैप्रमाणत्वेननिश्चिताः ॥ असंसारिणएकस्यनित्यमुक्तस्यचेशितुः ॥ ३५ ॥ श्रुतयः स्मृतयःसिद्धौविद्यंतेवैसहस्रशः ॥ शक्यतेनार्थवादत्वंवक्तुंतासांकथंचन ॥ ३६ ॥ सतिचानन्य योगित्वेविज्ञानोत्पादकत्वतः ॥ नचोत्पन्नंहिविज्ञानंबाध्यतेचानिषेधतः ॥ ३७ ॥

शंक्यानन्ययोगित्वेसतिज्ञानोत्पादकत्वात्तथात्वकल्पनानौचित्यादित्याह । शक्यतइति । तथाचकर्मविधिसन्निधावसमाम्नातानीश्वरविषया णिवाक्यानि स्वार्थेप्रमाणानि अनन्यशेषित्वेसतिबोधकत्वाद्विधिवाक्यवदितिभावः ॥ ३६ ॥ सतीति । किंचार्थवादानामपिनास्त्यप्रामा ण्यंपदसमन्वयबलेनजायमानस्यबोधस्यबाधानुपलंभादतःप्रामाण्यवतामीश्वरगोचरवाक्योत्पन्नज्ञानस्यकथंबाधइत्याशयेनाह । नचेति । ननूत्पन्नमपिज्ञानंतत्प्रतिषेधाद्बाध्यतइत्याशंक्य स्यादेवंयदिप्रतिषेधउपलभ्येतनतूपलभ्यतेऽतोनैवमित्याह । अनिषेधतइति अप्रतिषेधा दित्यर्थः ॥ ३७ ॥ ॥ ॥ ॥ ॥

यथाद्वेवावब्रह्मणोरूपे मूर्तंचामूर्तंचेत्युक्तयोरपिमूर्तामूर्तयोर्नेतिनेतीत्यग्रेप्रतिषेधोदृश्यते नतथोक्तपरमेश्वरप्रतिषेधःश्रुतावुपलभ्यतइतिसं ग्रहवाक्यंविवृणोति । नचेति । ननुनायमीश्वराप्रतिषेधस्तत्सत्त्वविबंधनःकिंतुप्राप्त्यभावात् । नहिभूतहिंसादिवदीश्वरस्यरागादितःप्राप्ति रस्ति येननहिंस्यात्सर्वाभूतानीत्यादिवदीश्वरोनास्तीतिनिषेधआरभ्येतेतिचेन्नोक्तन्यायादिनेश्वरस्यसाधितत्वादितिभावः । अथवाप्रतिषे धादित्यस्यकर्मणांफलदातृत्वनिरूपणावसरईश्वरस्यफलदातृत्वाप्रतिषेधादित्यर्थइत्याह । कर्मणामिति । तथाचस्वर्गकामोयजेतेत्यादिवाक्य स्ययागादेः फलप्रदसामर्थ्यवत्तायाबोधकंनतुतत्तत्सामर्थ्यमीश्वराधीनंनभवतीत्यस्यापि वाक्यभेदापत्तेरित्याशयः ॥ ३८ ॥ किंचनिमित्तांतर

नचनास्तीश्वरोऽप्येवंनिषेधोविद्यतेश्रुतौ ॥ कर्मणांफलदातृत्वंनास्तीशस्येतिवानहि ॥ ३८ ॥ न कर्त्राकेवलेनैवप्रयुक्तंकर्मभोगदम् ॥ विनेशंफलदातृत्वभोक्तृत्वेकर्मजीवयोः ॥ ३९ ॥ संभवेतांन कुत्रापिश्रुत्यायुक्त्यानुभूतितः ॥ नचयागोविनष्टोऽपिकालांतरफलप्रदः ॥ ३४० ॥ किंतुनित्येश्व रादेवफलंयागादिकर्मणः ॥ नष्टेऽपिकर्मणीशस्यबुद्धौयागादिकर्मणा ॥ ४१ ॥

निरपेक्षंकेवलंकर्मफलप्रदंयद्युपपद्येत तदामास्तुपरमेश्वरसापेक्षतातस्य नत्वेतदस्ति स्रक्चंदनवनितादिनिमित्तनिरपेक्षस्यतथात्वानुपलंभा दित्याह । नकर्त्रेति । तथाचयथामानांतरसिद्धस्रक्चंदनादेःप्रत्याख्यानमशक्यंतथाश्रुत्यादिसिद्धेश्वरस्यापीत्याह । विनेशमिति ॥ ३९ ॥ संभवेतामिति । किंचविनष्टस्ययागस्यफलदातृत्वासंभवान्नियतपूर्वक्षणसत्वस्वकारणत्वादीश्वरः फलदातावश्यमभ्युपेयइत्याह । नचेति । न चौषधपानादिरत्रदृष्टांतःऔषधाद्यवयवानांफलकालपर्यंतमवस्थितानामेवकालांतरीयफलदातृत्वाभ्युपगमादित्याशयः॥३४०॥ किंत्विति । नन्वीश्वरस्यापिकथंविनष्टकर्मणःफलदातृत्वमित्याशंक्याह । नष्टेऽपीति । इदंकर्मानेनकृतमितीश्वरबुद्धावारूढेन ॥ ४१ ॥ ॥

संस्कृतेति। तत्रानुरूपंदृष्टांतमाह । सेवयेति ॥ ४२ ॥ सेव्यादिति । ननुलौकिकानांकर्मणांफलसाधनतायाश्चेतनाधीनत्वेऽपिवैदिकस्ययागादेस्तत्त्वंवाक्यप्रामाण्यात्स्वातंत्र्येणैवभविष्यतीत्याशंक्यान्वययोग्यानांपदार्थानांसंसर्गबोधवाक्यतयातच्छतेनापिदृष्टपदार्थस्यभावस्यत्यकुमशक्यत्वाद्देशांतरेकालांतरेवावह्नेरनुदयत्वादर्शनादीश्वराधीनमेवतत्फलंवक्तव्यमित्याशयेनाह । देशेति। तथाच यागादिफलंदेशकालनिमित्तकर्मविपाकविभागज्ञबुद्धिसंस्कारापेक्षंभवितुमर्हति कालांतरफलत्वकृषिसेवादिवत् यथाबीजंक्षेत्रसंस्काररक्षाविज्ञानवत्कर्त्रपेक्षफ

संस्कृतायांफलंकर्तुरीश्वरादेवलभ्यते ॥ सेवयासेवकेनेवसेव्यबुद्धिप्रविष्टया ॥ ४२ ॥ सेव्यात्कालांतरेयोग्यंलभ्यतेफलमेवच ॥ देशकालनिमित्तानांविपाकस्यचकर्मणाम् ॥ ४३ ॥ विभागविद्धीसंस्कारापेक्षंभवितुमर्हति ॥ कालांतरफलंहीत्थंसिद्धःसर्वज्ञईश्वरः ॥ ४४ ॥ समस्तबुद्धिकर्मणांफलसाक्षीसएवहि ॥ स्वर्गकामोयजेदेवमादिवाक्येषुवैदिकैः ॥ ४५ ॥ साध्यःस्वर्गोऽस्ति यागेनसाधनेनैवसंमतः ॥ यागोनामक्रियारूपस्तत्क्षणेचैषनश्यति ॥ ४६ ॥ ॥

लं कृष्यादिसेवादिकर्मानुरूपफलज्ञसेव्यबुद्धिसंस्कारापेक्षफलंसेवादितद्वदित्यर्थः ॥ ४३ ॥ विभागेति । एवंविधानुमानेनेश्वरःसिद्धइत्युपसंहरति। इत्थमिति ॥ ४४ ॥ समस्तेति । एवमनुमानादिनासिद्धोयईश्वरःसर्वज्ञःसएवसर्वबुद्धिवित्त्वात्कर्मफलसाक्षीत्यर्थः । ननुस्वर्गकामोयजेतेत्यादिवेदेनयागस्यस्वर्गसाधनत्वंबोधितंतत्कथमिदानीमुपपद्यतइत्याशंक्याबोधितमप्यनुपपन्नत्वादीश्वरपरतंत्रतयाफलसाधनतायांपर्यवस्यतीत्याशयेनाह । स्वर्गकामइति ॥ ४५ ॥ ४६ ॥ ॥ ॥ ॥ ॥ ॥

ननुकर्मविनश्यत्तत्कालमेवस्वानुरूपंफलमर्जयित्वाविनश्यति तत्फलमर्जितमपिभोक्तुरयोग्यत्वात्कर्मांतरप्रतिबंधाद्वाभोक्तानभुज्यतेस्वयो ग्यताप्राप्त्याप्रतिबंधापगमेवातेनभोक्ष्यतइत्याशंक्याह। कालांतरइति। अयमर्थः। नहिस्वर्गःआत्मानंलभतामित्यधिकारिणःकामयंते किं तुस्वर्गोभोगोऽस्माकंभवत्वित्यतोयादृशमधिकारिणाकाम्यते तादृशस्यफलत्वमितिभोग्यस्यफलत्वेनप्राकृतभोक्तृतत्संबंधाद्भोग्यत्वासिद्ध्या फलत्वानुपपत्तेः। यत्कालंसुखंदुःखंवाजीवात्मनाभुज्यते तस्यैवलोकेफलत्वंप्रसिद्धम्। किंचस्वर्गनरकौनाद्यतमेसुखदुःखेइतितद्विषयेणानु भवेनभोगापरनाम्नावश्यंभवितव्यं तस्मादनुभवयोग्यस्यस्वर्गादेरननुभूयमानतयाननुभूयमाननरविषाणवन्नास्तित्वंनिश्चीयते तस्माद्यथोक्ते

कालांतरेफलंस्वर्गःकथंसिद्धेद्विनेश्वरम् ॥ श्रुतिसिद्धंविहायेशंकल्प्यतेपूर्वमेवयत् ॥ ४७॥ र
मणीयंनतद्भातिमतंसम्यग्विवेकिनाम् ॥ अपूर्वेकल्पितेपीऽशंविनाकर्मफलंनहि ॥ ४८॥ अस्व
तंत्रंयथाकर्मतथाऽपूर्वफलंभवेत् ॥ ईश्वरेणैवसंसिद्धंफलंयागादिकर्मणाम् ॥ ४९ ॥ अपूर्वंव्यर्थ
मेवेहकल्पितंसर्वकर्मसु ॥ श्रुतिस्मृतीपरेशस्यत्वाज्ञाभूतेशरीरिणाम् ॥ ३५० ॥ आज्ञाकर्ताप्रिय
स्तस्यस्वर्गादिफलमश्नुते ॥ श्रुतिस्मृतीपरित्यज्ययोयथेष्टंप्रवर्तते ॥ ५१ ॥

श्वरमृते नयागादेःफलंस्वर्गादिरिति। ननुयागादिकर्मजन्यादपूर्वात्फलमुत्पत्स्यतइत्याशंक्याह। श्रुतीति ॥ ४७ ॥ रमणीयमिति। चेतनाप्रवर्तितस्यकाष्ठलोष्टसमस्याचेतनस्यापूर्वस्यफलोत्पत्त्यर्थंप्रवृत्त्यनुपपत्तेरितिहेतुमाह। अपूर्वइति ॥ ४८ ॥ अस्वतंत्रेति। किंचे श्वरेणैवतत्तत्कर्मसंस्कारवत्ताविनष्टस्यापितत्तत्कर्मणःफलसिद्धावप्रामाणिकस्यापूर्वस्यकल्पनापार्थेत्याह। ईश्वरेणैवेति। यागस्यश्रुतंफलसाध नत्वंतुनापूर्वकल्पकंश्रुतार्थापत्तेरीश्वरसिद्धावुपक्षीणत्वादित्याशयः॥ ४९॥ किंच।आज्ञेति। श्रुतिस्मृतीममैवाज्ञेतउल्लंघ्यप्रवर्तते। आज्ञाभंगी ममद्रोहीत्यादिनाबोधितस्येश्वरस्याज्ञाभंगादनर्थप्राप्तिबोधनात्तद्भंगकरस्यार्थप्राप्तिःकीदृशीतित्वयैवविचार्यमित्याह। श्रुतीति॥३५०॥ ५१॥

॥ ५२ ॥ ५३ ॥ वैषम्यनैर्घृण्यवारणायोपक्रमते । सर्वज्ञस्येत्यादिना ॥ ५४ ॥ ५५ ॥ ५६ ॥ राज्ञोजीवत्वात्कदाचित्सतोरपिवैषम्यनैर्घृ
ण्ययोरीश्वरेतदभावंदृष्टांतांतरेणाह । समीपस्थेति ॥ ५७ ॥ तत्तत्कर्मफलदायिनीश्वरेवैषम्याद्यभावेदृष्टांतांतरमाह । यथेति ॥ ५८ ॥ दृष्टां

ईश्वरस्याप्रियोभूत्वानरकादिफलंभजेत् ॥ नरकान्नरकंयातिदुःखाद्दुःखंपुनःपुनः ॥ ५२ ॥ से
तुभंगकरोलोकेमहेशस्यनराधमः ॥ अतइत्थंस्वयाबुद्ध्याविचार्यंभवताद्विज ॥ ५३ ॥ सर्वज्ञ
स्यसमर्थस्यनित्यमुक्तस्यचेशितुः ॥ कोपानुग्रहरूपेद्वेशक्तीसर्वनियामके ॥ ५४ ॥ ताभ्यांम
हेश्वरःपातिविश्वंसर्वंत्रिकालगम् ॥ नलेपस्तस्यशुद्धस्यनित्यबोधस्वरूपिणः ॥ ५५ ॥ पाल
यन्सज्जनानीशोदंडयन्पापिनोजनान् ॥ ननैर्घृण्यंनवैषम्यंदोषंप्राप्नोतिराजवत् ॥ ५६ ॥ स
मीपस्थजनस्याग्निस्तमःशीतमपाहरन् ॥ नदूरगस्यतेनासौवैषम्यंनैवमश्नुते ॥ ५७ ॥ यथा
कल्पतरुर्जंतूंस्तत्तत्कामानुसारतः ॥ फलंददातितेनासौविषमोनोच्यतेबुधैः ॥ ५८ ॥ प्राणि
कर्मानुसारेणददातिफलमीश्वरः ॥ स्वशक्तिभ्यामथास्पृष्टोविषमोनिर्घृणोनहि ॥ ५९ ॥ दे
शकालनिमित्तानांविशेषज्ञानवर्जितः ॥ जीवःकथंप्रयोक्तास्यादन्यथासौनदुःखभाक् ॥ ३६० ॥

तोक्तमर्थंदार्ष्टांतिकेयोजयति । प्राणीति ॥ ५९ ॥ यत्तुकर्ताजीवःप्रयोजकइत्युक्तंतत्राह । देशेति । अन्यथातस्यकर्मफलप्रयोक्तृत्वेऽनिष्ट
फलस्यप्रयोक्तानस्यात्ततश्चदुःखभाङ्नभवेदित्यर्थः ॥ ३६० ॥ ॥ ॥ ॥ ॥ ॥

नन्वीश्वरस्यकर्मफलप्रयोक्तृत्वंनजीवस्येतिवदद्भिर्भवद्भिःस्वाभिमतंतदैक्यंदत्तजलांजलिसंपन्नमित्याशंक्यौपाधिकभेदमादायोक्तवर्णनस्य पारमार्थिकाभेदाप्रतिषेधकत्वान्नैवमित्याशयेनाह । सएवेति ॥ ६१ ॥ नान्योतोऽस्तिद्रष्टाश्रोतामंताविज्ञातानान्यदतोऽस्तिविज्ञातृइत्यादिश्रुतिमत्रप्रमाणयति। नान्योऽतोऽस्तीति ॥ ६२ ॥ किंच तत्त्वमसीत्यात्मत्वोपदेशादपिनपारमार्थिकोभेदोमृत्पिंडस्यहेमात्मनोपदेशादर्शनादित्याह । तत्त्वमस्यादिभिरिति ॥ ६३ ॥ विमतोजीवोब्रह्मप्रतियोगिकभेदवान् विरुद्धधर्माक्रांतत्वाद्योयद्विरुद्धधर्माक्रांतःस

सएवसर्वभूतानामंतरात्मामहेश्वरः ॥ जीवानांभिन्नरूपत्वंनास्तितस्मान्महेश्वरात् ॥ ६१ ॥
नान्योऽतोऽस्तीतिवाक्येनश्रोतृद्रष्ट्रादिरूपधृक् ॥ नेश्वराद्भिन्नरूपोऽस्तीत्येवंश्रुत्योच्यतेस्फुटम्
॥ ६२ ॥ तत्त्वमस्यादिभिर्वाक्यैर्जीवानांब्रह्मणासह ॥ उपक्रमादिभिर्लिंगैरैक्यंसमुपदिश्यते
॥ ६३ ॥ स्यादेवंयदिजीवानांब्रह्मणश्चपरस्परम् ॥ विरुद्धधर्मतानस्याद्भेदिकासातुविद्यते ॥ ६४ ॥
सर्वज्ञईश्वरोजीवःकिंचिज्ज्ञःशुद्धईश्वरः ॥ अशुद्धोऽन्यःपरेशस्तुविमुक्तोऽन्यस्तुबंधवान् ॥ ६५ ॥
इत्यादिभेदभिन्नानांजीवानांब्रह्मणस्तथा ॥ कथमैक्यंविरुद्धत्वात्संगच्छेतेतिचेन्नहि ॥ ६६ ॥
संतिभेदापवादिन्यःश्रुतयोऽत्रसहस्रशः ॥ अल्पंचेदंतरंजीवब्रह्मणोःकुरुतेजनः ॥ ६७ ॥

ततोभिन्नोयथागौरश्वइत्यनुभवमालंब्यमंडनःशंकते । स्यादेवमिति ॥ ६४ ॥ विरुद्धधर्मतामावेदयति । सर्वज्ञइति ॥ ६५ ॥ इत्यादीति । उक्तानुमानस्यभेदनिंदानुपपत्त्यनुगृहीताभेदश्रुतिविरोधात्कालात्ययापदिष्टत्वान्नैवमित्याशयेनाचार्यःपरिहरति । नहीति ॥ ६६ ॥ संतीति । यउदरमंतरंकुरुतेअथतस्यभयंभवतीतिश्रुतिमर्थतःपठति । अल्पंचेदिति ॥ ६७ ॥ ॥ ॥ ॥

॥ ६८ ॥ मृत्योःसमृत्युमाप्नोतियइहनानेवपश्यतीतिश्रुतिमर्थतःपठति। मृत्योरिति ॥ ६९ ॥३७०॥ नचासांक्रतुशेषभूतकर्त्रादिप्रकाशक त्वंप्रकरणांतरस्थत्वात्कर्त्रादिस्वरूपविनिर्मुक्तस्याशनायाद्यतीतस्यप्रतिपादकत्वाच्चेत्याह । नतासामिति ॥ ७१ ॥ किंपारमार्थिको भेदःसाध्यतेकिंवौपाधिकः। आद्येऽपिपक्षेकिंनिरुपाधिकचेतनउतसोपाधिकचेतनः। नाद्यः पक्षेहेत्वसिद्धेर्नद्वितीयः सोपाधिकचेतनेपार मार्थिकभेदस्यबाधितत्वान्नतृतीयःसिद्धसाधनत्वादित्याशयेनाह। विरुद्धधर्मतेति ॥ ७२ ॥ ब्रह्मात्मनोरैक्यप्रतिपादनपरंतत्त्वमस्यादि

नान्योऽतोऽस्तिसतोद्रष्टाश्रोताज्ञातानवापृथक् ॥ ६८ ॥
अथतस्यभयंजंतोर्भवत्येवनसंशयः ॥ तत्त्वमस्ययमात्माहंब्रह्मास्मीत्येवमादिकाः॥६९॥
मृत्योःसमृत्युमाप्नोतीहयोनानेवपश्यति ॥ अभेदंप्रवदंत्यस्ताःपीडिताःस्युर्मतेतव ॥ ३७० ॥
जीवानांब्रह्मणासार्धंभेदनिंदापुरःसरम् ॥ भिन्नप्रकरणस्थत्वाद्वैधर्म्यार्थोपपादनात् ॥ ७१ ॥
नतासाकर्मकांडेनसंबंधोऽस्तिमनागपि ॥ दर्शितासापियुक्त्यात्रपरिहर्तुंचशक्यते ॥ ७२ ॥ वदं
विरुद्धधर्मतायातेजीवानांब्रह्मणासह ॥ ब्रह्मात्मनोरसंदिग्धंतत्परत्वादिहेतुभिः ॥ ७३ ॥
तितत्त्वमस्यादिवाक्यान्यैक्यंमुखेमुखे ॥

वाक्यंतयोर्वास्तवेभेदेऽनुपपद्यमानं सोपाधिकभेदावेदनपूर्वकंपारमार्थिकमभेदंबोधयतीत्याशयेनाह। वदंतीति। ननुकल्पिताभेदावेद नपुरस्सरंवास्तवमेवभेदंकुतोनबोधयंतीत्याशंक्याभेदपरत्वभेदापरत्वहेतुभिरुपक्रमोपसंहारादिलिंगैस्तथावक्तुमशक्यत्वान्नैवमित्याशयेना ह। तत्परत्वादिहेतुभिरिति ॥ ७३ ॥ ॥ ॥ ॥ ॥ ॥ ॥

एकस्मिन्नेवचैतन्येमायोपाधिकमीश्वरत्वं मठोपाधिकमठाकाशत्वमिवाविद्योपाधिकृतंजीवत्वं घटोपाधिकृतंघटाकाशमिवेत्याशयेनाह। मायोपाधिरिति। तथाचभवदुक्ताविरुद्धधर्माअविद्योपाधिकृतत्वान्नवास्तवभेदसंपादकाइत्याशयेनाह। माययेति॥७४॥ जीवेऽपीति। एवंचोक्तश्रुत्योपाधितद्धर्मतिरस्कारेणजीवेशयोःकेवलंचिदानंदाद्वयंस्वरूपंबोध्यतइत्याह। मायेति॥ ७५॥ अवशिष्टमिति। जीवेशयोर्भेदेतुप्रमाणंनास्तीत्याह। भेदइति। तथाहि नतावत्प्रत्यक्षंभेदेप्रमाणं भेदेइंद्रियसंनिकर्षाभावात्प्रतियोग्यप्रत्यक्षत्वाच्च नाप्यनुमानंश्रुत्योक्तयुक्त्याआत्मापरप्रतियोगिकभेदशून्यःचित्त्वात्परवदितिप्रतिपक्षानुमानेनचोक्तानुमानस्यबाधितविषयत्वात्। नाप्यागमः। द्वासु

मायोपाधिःपरेशोऽस्त्यविद्योपाधिस्तुजीवकः॥ माययाचेश्वरेधर्माःसर्वज्ञत्वादयोऽर्पिताः॥७४॥
जीवेऽप्यविद्ययाज्ञत्वादयोधर्माःसमर्पिताः॥ मायाविद्येतिरस्कृत्यतदर्पितगुणांस्तथा॥ ७५॥
अवशिष्टंचिदानंदाद्वयंजीवेशयोःपरम्॥ स्वरूपंबोध्यतेभेदेप्रमाणंसंभवेन्नच॥ ७६॥ भेदको
पाधिमिथ्यात्वात्स्वतःसिद्धातदेकता॥ अशुद्धत्वादयोधर्माजीवेसंतिनवस्तुतः॥ ७७॥ अ
विद्ययाकल्पितास्तेनह्यविद्याकृतंचसत्॥ आकाशेनीलवर्णादिकल्पितंनैवतेनच॥ ७८॥

पर्णेत्यादिश्रुतेःश्रुतिनिंदितभेदपरत्वाभावेनतदनुवादपरत्वात्। नाप्यर्थापत्तिः। सत्यभेदोपपादकाभावात् नाप्यनुपलब्धिरभेदस्याविद्यावृतत्वेनतदनुपलब्धेस्तदभावासाधकत्वादिति॥ ७६॥ नन्वस्तुभेदःऔपाधिकस्तथाप्युपाधेःसत्यत्वान्नतन्निवृत्तौज्ञानमुपायस्तस्यसत्यवस्त्वनिवर्तकत्वादित्याशंक्याह। भेदकेति। अन्यथानिर्मोक्षप्रसंगइतिभावः॥ ७७॥ अविद्याकल्पितत्वात्तस्यचासत्यत्वादित्याह। अविद्ययेति। कल्पितधर्मैरधिष्ठानंनसंस्पृश्यतइत्यत्रदृष्टांतमाह। आकाशइति॥ ७८॥ ॥ ॥ ॥

॥ ७९ ॥ ननुजीवोनष्टःसन्ब्रह्मतामेत्युतस्थितः । नाद्यः । वरघातकन्यावरणन्यायापातात् नद्वितीयः जीवत्वधर्माक्रांतस्य ब्रह्मत्वायोगादित्याशंक्य ब्रह्मैवस्वाज्ञानात्संसरतिस्वज्ञानाद्विमुच्यते जीवत्वंतुतत्राज्ञानकल्पितमितिनकोऽपिदोषइत्याशयेनाह । परमात्मेति ॥

व्योम्नोऽस्त्यशुद्धितातद्वत्परेधर्माःप्रकल्पिताः॥ अशुद्धत्वादयस्तैस्तुनसंसर्गःपरात्मनः ॥७९॥ परमात्मापरानंदःस्वाज्ञानाज्जीवतांगतः॥ स्वात्मबोधेनतन्नाशात्पुनःस्वप्रकृतिंव्रजेत्॥ ३८०॥ सार्वभौमःस्वपर्यंकेराजभोगयुतोयथा ॥ चामरैर्वीज्यमानोऽसौनिद्रयास्वप्नतांगतः ॥ ८१ ॥ तत्क्षणेशत्रुभिर्बद्धोनीतस्तैर्दुर्दशांपराम् ॥ कारागारेविनिक्षिप्तोमलमूत्रमयेऽपतत् ॥ ८२ ॥ तत्ररोदितिहाहेतिकष्टंजातंममेतिच ॥ केनचित्करुणापूरसिंधुनाबोधितोनृपः ॥ ८३ ॥ ईश्वराराधनंहेतुःसर्वदुःखपरिक्षये ॥ कुरुशीघ्रमतोबंधाद्विमुक्तस्त्वंभविष्यसि ॥ ८४ ॥ एवंसबोधितस्तेनश्रद्धयापरयान्वितः ॥ ईश्वराराधनंकुर्वंस्तत्परोऽसौव्यवस्थितः ॥ ८५ ॥ दैवान्निद्राक्षयंयातातस्मिन्नेवक्षणेऽप्यसौ ॥ तस्मिन्नेवस्वपर्यंकेप्रबुद्धःसार्वभौमताम् ॥ ८६ ॥ पश्यन्स्वप्नदशांतद्वद्धसन्सम्राड्विराजते ॥ तथास्वात्मापरिज्ञानात्परमात्मासनातनः ॥ ८७ ॥ ॥

॥ ३८० ॥ एतदेवदृष्टांतेनस्फुटयति । सार्वभौमइत्यादिना ॥ ८१ ॥ ८२ ॥ ८३ ॥ ८४ ॥ ८५ ॥ ८६ ॥ दृष्टांतोक्तमर्थंदार्ष्टांतिकेयोजयति । तथेत्यादिना ॥ ८७ ॥ ॥ ॥ ॥ ॥ ॥ ॥

परब्रह्माद्वयानंदंबोधरूपमसंहतम् ॥ सविस्मृत्याथसंसारेरागद्वेषादिसंकुले ॥ ८८ ॥ प्राप्तोदेहा
भिमानाद्यैःशत्रुभिर्दुःखकारिभिः ॥ बद्धस्तृष्णावरत्राभिर्मोहपाशैर्नियंत्रितः ॥ ८९ ॥ ममेत्या
दिगृहीतेषुदेहगेहाप्तबंधुषु ॥ दुःखोदर्केषुनिक्षिप्तःकारागारेषुधूर्तकैः ॥ ४९० ॥ पुनर्जन्मपुनर्मृत्युं
पुनर्बाल्यादिकांदशाम् ॥ नीतोदुःखमयींघोरांहाकष्टंचेतिरोदिति ॥ ९१ ॥ करुणासागरेणा
सौगुरुणाबोधितोऽसकृत् ॥ ईश्वराराधनंकृत्वातत्प्रसादाप्तबोधकः ॥ ९२ ॥ स्वात्मानमजरा
नंदंबुद्ध्वाब्रह्माद्वयात्मकम् ॥ हसन्पूर्वदशांतद्वत्स्वात्मन्येवव्यवस्थितः ॥ ९३ ॥ अतोऽयंब्र
ह्मविज्ञानात्स्वेमहिम्निप्रतिष्ठितः ॥ जीवोविमुच्यतेमुक्तोबंधोमिथ्यानिवर्तते ॥ ९४ ॥ इत्येवं
भाष्यकारेणश्रुतिभिर्युक्तिभिर्द्विजः ॥ मंडनाख्योजितःसोऽपितूष्णींभूत्वाव्यवस्थितः ॥ ९५ ॥
भाष्यकारमतंश्रौतंदृढंज्ञात्वासरस्वती ॥ जितंभर्तारमालक्ष्यमनसासाजहर्षह ॥ ९६ ॥ प्रति
ज्ञावसरेभर्तुःकंठेबद्धापरीक्षितुम् ॥ मालासाम्लानतांयाताभिक्षोर्विजयसूचिका ॥ ९७ ॥ अब्र
वीत्तावुभौवाणीभिक्षांप्रकुरुतंयुवाम् ॥ जितस्त्वयामुनेभर्ताजितोऽसित्वंद्विजोत्तम ॥ ९८ ॥ अ
हंदुर्वाससाशप्ताकुतश्चित्कारणात्पुरा ॥ मुनेतवजयोजातोममशापावधिस्त्वयम् ॥ ९९ ॥ ग
च्छाम्यहंयथाकाममित्युक्त्वासामुनिंतदा ॥ गंतुकामातदामिश्रस्तूर्णींतांसंनिरैक्षत ॥ ४०० ॥

मंत्रेणवनदुर्गामंत्रेण ॥ १ ॥ २ ॥ ३ ॥ मुमुक्षून्प्रत्युपकारकस्वभाष्यजातस्थापनायमंडनंविजित्यशोभमानंश्रीशंकरंनमस्करोति । भवहरमिति । भवहरंसंसारोच्छेदकमिति ॥ ४ ॥ वेदांतप्रतिपाद्याद्वैतमतोद्धारायभूमाववतीर्यतन्मतस्थापनकरस्यसर्वसुगुणोपपन्नस्य शंकराख्यभाष्यकारस्यसर्वोत्कर्षविधत्ते । श्रुतीति ॥ ४०५ ॥ प्रत्यक्षादिप्रमाणेष्वपरमकुशलैःसत्यमुक्तंमृषातद्यत्तुच्छंतंतसदच्छंगुणनिकरयुतं

भाष्यकारस्तुतांदेवींज्ञात्वासाक्षात्सरस्वतीम् ॥ मनसाजेतुकामस्तांबद्धामंत्रेणचाब्रवीत् ॥ १ ॥ जानामित्वांभगवतींब्रह्मभार्यांसरस्वतीम् ॥ त्वयात्रस्थीयतांदेविगमनंतुभविष्यति ॥ २ ॥ एवमुक्तायदादेवीभाष्यकारेणवेधसा ॥ आसांचक्रेतदानुज्ञांप्रेक्षमाणातदंतिके ॥ ३ ॥ भव हरमभिरामंभाष्यजातंजगत्यांश्रुतिनयविषयेयःस्थापयन्सज्जनेषु ॥ कृतिवरमपिजेतुंमंडनं तद्गृहेयोयतिवरगणयुक्तःसंबभौतंनमामः ॥ ४ ॥ श्रुतिशिखरमतंयोनष्टमुद्धृत्यभूमौश्रुतिनय युतवाक्यैःस्थापयामासधीरः ॥ निरवधिगुणकीर्तिःस्वात्मभूतोजनानां सजयतुयतिवर्योभा ष्यकारोभवाख्यः॥ ४०५॥ इति श्रीशांकरदिग्विजयसारेश्रीमन्मुकुंदपदारविंदमकरंदाभिला षिसदानंदाख्यविदुषाविरचितेमंडनसमागमतज्जयोनामषष्ठःसर्गः ॥ ६ ॥ ॥ ॥

निर्गुणंकर्मसंस्थान् ॥ तांस्तानासक्तचित्तान्व्यधितचसकलज्ञाभिधान्मूढसंज्ञान्यस्तंकर्मंदिवेपंविबुधनुतपदंनौमिचंद्रावतंसम् ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यवालगोपालतीर्थश्रीपादशिष्यदत्तवंशावतंसरामकुमारसूनुधनपतिसूरिकृतेश्रीमच्छंकराचार्यविजयडिंडिमौ ष ष्ठःसर्गः ॥ ६ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

श्रीगणेशायनमः ॥ एवंमंडनाचार्यसंवादंसपरिकरंनिरूप्यामरकाभिधराजवर्ष्मप्रवेशंसपरिकरंनिरूपयितुमुपक्रमते । अथेति ॥ १ ॥ २ ॥

अथाब्रवीद्वचोमिश्रः पुनरुत्पन्नसंशयः ॥ यतेसंप्रतिमेनास्तिविषादस्तुपराजयात् ॥ १ ॥ किंतुमेहृदयेशल्यभूतोऽयंसंशयोमहान् ॥ कथंवेदप्रधानानियुक्तिरूपाणियुक्तिभिः ॥ २ ॥ जैमिनीयानिसूत्राणिभवतोन्मथितानिवै ॥ ससर्वज्ञःकथंसूत्राण्यन्यथासूत्रयद्बुधः ॥ ३ ॥ इत्येवंसंदिहानंतंभाष्यकारोऽब्रवीदिदम् ॥ नह्यसौजैमिनिःकिंचिदन्यायंसर्वविद्व्यधात् ॥ ४ ॥ एवमुक्तोऽवदन्मिश्रोभाष्यकारमुदारधीः ॥ भगवन्हृदयंतस्यकथयस्वममानघ ॥ ५ ॥ एवमुक्तोयतिस्तस्यवर्णयामासजैमिनेः ॥ हृदयंचातिगंभीरंमिश्रंप्रत्येवकृत्स्नशः ॥ ६ ॥ द्विजवर्यश्शृणुस्पष्टंवेदार्थगतचेतसा ॥ वेदार्थनिर्णयस्तेनयथाकारिकृपालुना ॥ ७ ॥ अविद्याकामकर्मादिदोषाधीनजनानसौ ॥ रागद्वेषावृताचारान्विषयेष्वतिलंपटान् ॥ ८ ॥ सुखार्थिनोऽनुपायज्ञान्दुःखाभावार्थिनस्तथा ॥ यथार्थसाधनाभावात्क्लिश्यतोमूढभावतः ॥ ९ ॥ दृष्ट्वाकरुणयाविष्टोजैमिनिर्वेदपारगः ॥ चिंतयामाससमनसाकथमेषांसुखंभवेत् ॥ १० ॥ ॥ ॥

॥ ३ ॥ ४ ॥ एवंश्रुत्वोत्सुकोमंडनउवाच ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ॥ ॥ ॥ ॥

सुखीति । संसारिणोऽज्ञस्यस्वरूपसुखस्यावृतत्वाद्विषयसुखस्यदुःखसंभिन्नत्वाद्विनश्वरत्वाद्वोक्तुःसमस्तदुःखमूलभूततृष्णाक्रांतस्वांतत्वाच्च त
दुक्तमशांतस्यकुतःसुखमितिभावः । सुखमिति । स्वस्वरूपभूतानंदस्याविर्भूतत्वाद्विषयसुखेष्वभिषंगाभावेनतत्क्षयादिजनितदुःखनिर्मुक्त
त्वात्तथाभूततृष्णानाक्रांतचित्तत्वाच्च । तथाचोक्तम् । आपूर्यमाणमचलप्रतिष्ठंसमुद्रमापःप्रविशंतियद्वत् । तद्वत्कामायंप्रविशंतिसर्वेसशांति

सुखीकोऽपिनास्तीहसंसारभूमौसुखंब्रह्मतत्त्वावबोधीभुनक्ति ॥ अतोब्रह्मतत्त्वावबोधाप्तयेऽहं
यतिष्येजनानांश्रुतीनांविचारे ॥ ११ ॥ नविनावैदिकोपायंसुखंभवतिदेहिनाम् ॥ तत्रापिब्र
ह्मविज्ञानंमुख्योपायःप्रकीर्तितः ॥ १२ ॥ आत्यंतिकसुखंब्रह्मदुःखाभावोपलक्षितम् ॥ तद्वि
नाब्रह्मविज्ञानंनान्योपायेनसिद्ध्यति ॥ १३ ॥ ब्रह्मज्ञानंतुवेदांतविचारायत्तमेवहि ॥ नवेदांत
विचारोऽपिसफलोजायतेनृणाम् ॥ १४ ॥ विनासाधनसंपत्तिंमुमुक्षोरपियत्नतः ॥ साचसाध
नसंपत्तिश्चित्तशुद्धिमृतेनहि ॥ १५ ॥ चित्तशुद्धिर्विनाधर्मंजायतेनैवदेहिनाम् ॥ श्रुतिस्मृति
पुराणेषुविहितोधर्मआदरात् ॥ १६ ॥ सनिष्कामःपरेशस्याराधनाख्योमहाफलः ॥ अंतःक
रणसंशुद्धौहेतुर्नान्यःसकामकः ॥ १७ ॥ ॥ ॥ ॥ ॥

माप्नोतिनकामकामीतिभावः । जनानांतथाभूतबोधप्राप्त्यर्थंपरंपरयातत्साधनभूतकर्मकांडविचारेऽहंयत्नंकरिष्ये ॥ ११ ॥ स्वकृतविचारस्य
परंपरयातत्साधनत्वंविशदयति । नविनेति ॥ १२ ॥ ननुस्वर्गादिसुखस्ययागादयोऽप्युपायाःसंतीत्याशंक्य सुखस्वरूपमाह । आत्यं
तिकेति । कालत्रयेऽप्यबाध्यत्वमात्यंतिकत्वम् ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ ॥ ॥ ॥

॥ १८ ॥ यथोक्तसुखानन्यसाधनात्मविज्ञानसाधनवेदांतविचारपुष्कलकारणविवेकादिसाधनस्वांतनैर्मल्यसाधकतमेश्वराराधनलक्षणनिष्कामकर्मप्रवृत्तिः शास्त्रोक्तकर्मत्वेनसजातीयेसकामेकर्मणिप्रवृत्तिंविना तत्तद्विषयाभिलाषाक्रांतचेतसांपशुकल्पानांनभविष्यतीत्यतःसकामकर्मादौनिरूपणीयंयथेष्टंप्रवृत्तिनिवृत्तिक्रमेणतत्रेष्टवृत्तिसिद्धयइत्याशयवानाह । तेषामिति ॥ १९ ॥ यदेति । ननुतत्रप्रवृत्तस्यकथं

विषयग्रस्तचित्तानांसधर्मोदुर्लभोयतः ॥ दृष्टभोगैषिणांनृणांवृथाहंकारिणामिति ॥ १८ ॥ तेषांपापेषुसामान्याप्रवृत्तिस्तन्निरासतः ॥ शास्त्रेह्येषांप्रवेशोऽद्यस्यात्कथंचनयुक्तिभिः ॥ १९ ॥ यदैतेषांप्रवेशःस्याद्धर्मेस्वर्गादिदायिनि ॥ बह्वायासाल्पफलकेकाकतालीययोगतः ॥ २० ॥ विचारःस्यात्तदैतेषांसारासारात्मकोनृणाम् ॥ तद्यथेहादिवाक्येभ्यःस्वर्गादीनामनित्यताम् ॥२१॥ विचार्यनित्यजिज्ञासास्यात्तदाभाग्ययोगतः ॥ तदाब्रह्मविचारेऽपिप्रवृत्तिःसंभवेन्नृणाम् ॥ २२ ॥ विचाराद्ब्रह्मविज्ञानंततोमोक्षोनृणांभवेत् ॥ इत्थंदयार्द्रचित्तेनकरुणासागरोमुनिः ॥ २३ ॥ भगवान्जैमिनिर्व्यासशिष्यःसम्यग्विचार्यच ॥ अथातोधर्मजिज्ञासेत्यादिन्यायसहस्रकम् ॥२४॥

तत्फलविरागपुरस्सरंतत्साधनविरागोभविष्यतीतितत्राह । बह्वायासइति । काकतालीययोगतः अकस्मादित्यर्थः । अस्योत्तरेणान्वयः ॥ २० ॥ विचारइति । तद्यथेहकर्मचितोलोकःक्षीयतएवमेवामुत्रपुण्यचितोलोकःक्षीयते नास्त्यकृतःकृतेनेत्यादिश्रुतिवाक्येभ्यइत्यर्थः ॥ ॥ २१ ॥ २२ ॥ २३ ॥ भगवानिति । व्यासशिष्यस्यतद्विरुद्धकथनमनुपपन्नमितिविशेषणाशयः। न्यायसहस्रकमधिकरणसहस्रकम् ॥२४॥

द्वादशाध्यायकमिति । धर्मोद्वादशलक्षण्याव्युत्पाद्यस्तत्रलक्षणैः । प्रमाणभेदशेषत्वप्रयुक्तिक्रमसंज्ञकाः । अधिकारोऽतिदेशश्चसामान्येनवि शेषतः । ऊहोबाधश्चतंत्रेचप्रसंगाश्चोदिताःक्रमात् । विध्यर्थवादस्मृतयोनामचेतिचतुर्विधम् । प्रथमाध्यायगैःपादैश्चतुभिर्मानमीरितम् । उपो द्घातःकर्मभेदभानंतस्यापवादगीः । प्रयोगभेदइत्येतेद्वितीयाध्यायपादगाः । श्रुतिर्लिंगंचवाक्यादिविरोधप्रतिपत्तयः । अनारभ्योक्तिब ह्वर्थस्वाम्यर्थाअष्टपादगाः । प्रधानस्यप्रयोक्तृत्वमप्रधानप्रयोक्तृता । फलचिंताजघन्यांगचिंतेत्येतेचतुर्थगाः । श्रुत्यादिभिःक्रमस्तस्यविशेषो वृद्ध्यवर्धने । श्रुत्यादेर्बलताचेतिपंचमाध्यायपादगाः । अधिकारीतस्यधर्माःप्रतिनिध्यर्थलोपने । दीक्षासत्रंदेयवह्नीषष्ठेपादेष्वमीस्थिताः । प्रत्यक्षोक्त्यतिदेशोऽस्यशेषःसामनिरूपणात् । नामलिंगातिदेशौद्वौसप्तमाध्यायपादगाः । स्पष्टलिंगादथास्पष्टात्प्रबलादपवादतः । अति देशविशेषाःस्युरष्टमाध्यायपादगाः । ऊहारंभोऽथसामोहोमंत्रोहस्तत्प्रसंगतः । नवमाध्यायपादेषुचतुर्ष्वेतेप्रकीर्तिताः । द्वारलोपोऽस्यवि

द्वादशाध्यायकंशास्त्रंनिर्ममेऽसौविभागशः ॥ बोधयन्वेदवाक्यानिश्रुतिलिंगादिमानतः ॥२५॥

स्तारःकार्यैकत्वंसमुच्चयः । ग्रहसामप्रकीर्णानिनत्वर्थोदशमांघ्रिगाः । उपोद्घातस्तथातंत्रावापौतंत्रस्यविस्तृतिः । आवापविस्तृतिश्चैकाद शाध्यायस्यपादगाः । प्रसंगस्तंत्रिनिर्णीतिःसमुच्चयविकल्पने । द्वादशाध्यायपादानांचत्वारोऽर्थाःप्रकीर्तिताः । इतिचतुःषष्टिपादघटितद्वा दशाध्यायात्मकमित्यर्थः । आदिपदेनवाक्यप्रकरणस्थानसमाख्यानांसंग्रहः तत्रनिरपेक्षोरवःश्रुतिः । यथाव्रीहीनवहंतीत्यत्रक्रियाफलभा गित्वंकर्मत्वंबोधयंतीद्वितीयानिरपेक्षैवव्रीहीणामवघातशेषित्वंप्रतिपादयति । अर्थविशेषप्रकाशनसामर्थ्यंलिंगं यथाबर्हिर्देवसदनंदामी त्यस्यमंत्रस्यलवनार्थप्रकाशकतया बर्हिर्लवनेविनियोगः । परस्पराकांक्षावशात्कचिदेकस्मिन्नर्थेपर्यवसितानिपदानिवाक्यं देवस्यत्वास वितुःप्रसवेऽश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्यामग्नयेजुष्टंनिर्वपामीत्यत्र लिंगेननिर्वापेविनियुज्यमानस्यसमवेतार्थभागस्यैववाक्यबलेनदेवस्यत्वे त्यादिभागस्यविनियोगः । लब्धवाक्यभावानांपदानांकार्यांतरापेक्षयावाक्यांतरेणसंबंधेआकांक्षापर्यवसन्नंप्रकरणम् । यथासमिधोयजती

त्यादेर्दर्शपूर्णमासकथंभावाकाक्षायापाटनाच्छेद्यत्वंक्रमः । स्थानेनैकस्याम्नातस्यसन्निधिविशेषाम्नातं यथादब्धिरसीत्यत्रआग्नेयाग्नीषोमीयोपांशुयागाः क्रमेणब्राह्मणेषुमंत्रभागेऽपिक्रमेणमंत्रत्रयंपठितं तत्राग्नेयाग्नीषोमयोर्लिंगेनैवद्वयोर्विनियोगसिद्धिः दब्धिरसीत्यत्रतुनलिंगादिविनियोजकं किंतुयस्मिन्प्रदेशेब्राह्मणेउपांशुयागविधानंतस्मिन्नेवप्रदेशेमंत्रेऽप्यस्यपाठइति क्रमादुपांशुयागानुमंत्रणेऽस्यविनियोगः। योगबलंसमाख्या ययाहौत्रंऔद्गात्रमित्यादौहोतुरिदंहौत्रमित्यादियोगबलेनहौत्रादिसमाख्यानानिकर्माणिहोत्रादिभिरनुष्ठेयानीति ॥

आम्नायस्यक्रियार्थत्वादित्यादिवचसामपि ॥ कार्यतत्परतामाहकर्मकांडगिरांमुनिः ॥ २६ ॥ फलप्रदंस्वतंत्रंतत्कर्मनेशःफलप्रदः ॥ इत्यादीनांतुवचसामाशयोऽप्यधुनोच्यते ॥ २७ ॥ अवश्यंकर्मकर्तव्यंनत्याज्यंकर्हिचिज्जनैः ॥ नैवकर्मविनाकश्चित्फलंदातुंनृणांक्षमः ॥ २८ ॥ एवंकर्मसुनिष्ठानांस्वयमेवेश्वरेपरे ॥ चित्तशुद्ध्याभवेद्भक्तिस्तदाज्ञापरिपालनात् ॥ २९ ॥ किंचकाणादपक्षादौपरमेशेस्वतंत्रतः ॥ अनुमानप्रमाणंवैश्रुतिस्तत्रानुवादिनी ॥ ३० ॥ इत्येवमुपलभ्याहतन्मतध्वंसनायच ॥ अनुमानशतैरत्रनेश्वरःसिद्ध्यतीत्यपि ॥ ३१ ॥ कर्मणांफलदानेहिस्वातंत्र्यंवेदवाक्यतः ॥ सर्वंचराचरंविश्वंकर्मणोजायतेसदा ॥ ३२ ॥ ॥ ॥

॥ २५ ॥ ननुआम्नायस्यक्रियार्थत्वादानर्थक्यमतदर्थानामितिसूत्रयन् क्रियार्थानामानर्थक्यफलवदर्थराहित्यंकथमुक्तवानित्याशंक्याह । आम्नायेति ॥ २६ ॥ नन्वेवंतर्हिफलदातृत्वंकर्मणांस्वीकृत्यपरेशंकिमर्थंनिराहेत्याशंक्याह । फलप्रदमिति ॥ २७ ॥ २८ ॥ तस्येश्वरस्य ॥ २९ ॥ ३० ॥ ३१ ॥ वेदवाक्यतःस्वर्गकामोयजेतेत्यादेः ॥ ३२ ॥ ॥ ॥ ॥

॥ ३३ ॥ ननुनष्टस्यकर्मणःस्वर्गादिफलदातृत्वमसंगतमित्याशंक्य श्रुतान्यथानुपपत्त्यामध्येऽपूर्वंकल्पितवानित्याह । यदिति ॥ ३४ ॥

साध्यसाधनसंबंधंसाक्षाद्बोधयतिश्रुतिः ॥ नैवतत्रविवादोऽस्तिवेदवाक्यविचारिणाम् ॥ ३३ ॥ यद्विनासंभवेन्नैवसंबंधःस्वर्गयागयोः ॥ कल्प्यतेतदपूर्वाख्यंकालांतरफलप्रदम् ॥ ३४ ॥ किमीशेनानुमानेनकल्पितेनप्रयोजनम् ॥ इत्थंयुक्त्याचखंडानुमानिकंमुनिरीश्वरम् ॥ ३५ ॥ श्रुतिसिद्धेश्वरंतत्रनैवखंडितवानसौ ॥ सर्वज्ञोवेदवेत्तासौभक्तिमानीश्वरेपरे ॥ ३६ ॥ कथंससर्ववेदानांविषयःसर्वदेहिनाम् ॥ ईश्वरोजगतांनाथोमुनेःखंडयितुंक्षमः ॥ ३७ ॥ श्रुतिस्मृतीतिहासादौपुराणेषुमहेश्वरः ॥ प्रसिद्धःसर्वकर्ताऽसौखंडनीयःकथंमुनेः ॥ ३८ ॥ सर्वथावेदपुरुषःशरण्यःसर्वभासकः ॥ आश्रयितव्यएवेतिजैमिनेरित्थमाशयः ॥ ३९ ॥ सइत्थंभाष्यकृद्वाक्यंसमाकर्ण्यद्विजोत्तमः ॥ तत्क्षणेजैमिनिंबुद्ध्यादध्यौमीलितलोचनः ॥ ४० ॥ तेनध्यातोमुनिस्तत्रैवाजगामसजैमिनिः ॥ अर्घ्यादिपूजितःसम्यक्तमुवाचद्विजोत्तमम् ॥ ४१ ॥ सत्यंसत्यंपुनःसत्यंवचनंशंकरस्यभोः ॥ संदेहोनैवकर्तव्योभाष्यकारवचःसुते ॥ ४२ ॥ यथावेदस्यतात्पर्यंगुरोर्व्यासस्यमेतथा ॥ तथैववर्णयामासतवाग्रेशंकरोमुनिः ॥ ४३ ॥

॥ ३५ ॥ ईशानःसर्वविद्यानामित्यादिश्रुतिसिद्धमीश्वरंतुनैवखंडितवानित्याह । श्रुतिसिद्धेश्वरमिति ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ॥ ॥ ॥ ॥ ॥ ॥

नवेदैर्नविनाकश्चिद्व्यासस्यममचाशयम् ॥ कथंव्यासेनगुरुणाविरुद्धःस्यान्ममाशयः ॥ ४४ ॥
सर्वेषामस्मदानीनांनिष्ठाब्रह्माद्वयात्मनि ॥ तत्त्वमस्यादिवेदांतसिद्धांतैःसंप्रसाधिता ॥ ४५ ॥
शंकरंशंकरंविद्धिव्यासंनारायणंहरिम् ॥ वयंभक्ताश्चशिष्याःस्मोव्यासस्यकरुणानिधेः ॥४६॥
कृतेसत्वमुनिर्ज्ञानंदत्तस्त्रेतायुगेव्यधात् ॥ द्वापरेमद्गुरुर्व्यासोज्ञानदःशंकरःकलौ ॥ ४७ ॥ वेदां
तभास्करोज्ञानचंद्रऐश्वर्यवारिधिः ॥ इत्थंशैवपुराणेऽस्यमहिमाविश्रुतोविभोः ॥ ४८ ॥ इत्ये
वंमंडनंवाक्यैर्बोधयित्वामुनिर्ययौ ॥ यथेष्टंमंडनोऽप्याहप्रणिपत्ययतीश्वरम् ॥ ४९ ॥ विदि
तोऽसिभवान्साक्षात्सच्चिदानंदविग्रहः ॥ शिवःस्वयंमहादेवोममभाग्यात्समागतः ॥ ५० ॥
कर्मयंत्रंसमारुह्यभ्रमन्नेवपुनःपुनः ॥ दारागाराप्तवित्तानिममेत्याबद्धमानसः ॥ ५१ ॥ लब्ध
वान्नैवविश्रांतिंनानाभोगपरायणः ॥ संसारतापतप्तोऽहंदैवात्तेचरणांबुजम् ॥ ५२ ॥ शरण्यंशर
णंप्राप्तःपरिपाल्यस्त्वयाधुना ॥ काहंकर्मगतौमग्नःक्वतेपादांबुजंगुरो ॥ ५३ ॥ नजानेपुण्यसं
पत्तिंपूर्वजन्मार्जितांमुने ॥ ययाहंतवपादाब्जदर्शनंप्रापितोऽसकृत् ॥ ५४ ॥ अतःपरंसदाचार्य
श्रीमत्पादसरोजके ॥ भ्रमरोज्ञानकिंजल्करसलुब्धोभवाम्यहम् ॥ ५५ ॥ अहंवेदविदांश्रेष्ठोना
न्योऽस्तिसदृशोमया ॥ कविःसर्वज्ञइत्यादिनानाहंकारवांश्चयः ॥ ५६ ॥

॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ गमयिष्यतिलोकेप्रापयिष्यति ॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥

सोऽहंसर्वंपरित्यज्यत्वामेवशरणंगतः ॥ अनुशाधीहमांभृत्यंशिष्यत्वेसंगृहाणवै ॥ ५७ ॥ गुरु
स्त्वंसर्वलोकानामवतीर्णःस्वमायया ॥ उपकारायभूतानांवेदांताब्जविभाकरः ॥ ५८ ॥ मंड
नस्यवचःश्रुत्वाभाष्यकारोऽतिहर्षितः ॥ समुदैक्षतत्द्भार्यांसाप्युवाचवचोयतिम् ॥ ५९ ॥ वृ
त्तांतंश्शृणुमेभिक्षोकथयामितवाग्रतः ॥ एकदामातुरंकेऽहंस्थितातत्रागतोमुनिः ॥ ६० ॥ कश्चि
त्सिद्धस्त्रिकालज्ञस्तंसंपूज्याथसादरम् ॥ पप्रच्छेत्थंमदीयांबाकन्येयंकीदृशीमुने ॥ ६१ ॥ भ
विष्यतीतिसंपृष्टःप्राहमेमातरंमुनिः ॥ पतिव्रतागुणैरेषालंकृताभातिकन्यका ॥ ६२ ॥ एषा
सरस्वतीसाक्षान्नसामान्याविधेरियम् ॥ भार्यासोऽपिमहीपृष्ठेप्रादुर्भूतःप्रजापतिः ॥ ६३ ॥ वि
श्वरूपाभिधोविद्यालंकृतत्वाच्चमंडनः ॥ चतुर्वेदविदांश्रेष्ठस्तस्येयंगृहधर्मिणी ॥ ६४ ॥ भविष्य
तिसुखारामाकन्यापाल्याप्रयत्नतः ॥ अवतीर्यशिवःसाक्षाद्भिक्षोर्वेषंविधायच ॥ ६५ ॥ जि
त्वातंमंडनंलोकेवेदांतान्गमयिष्यति ॥ तेनसार्धंविवादोऽस्यामंडनार्थेभविष्यति ॥ ६६ ॥ सोऽपि
भिक्षुवरोभूत्वामंडनोऽस्याःपतिःकृती ॥ तस्यैवशिष्यतांप्राप्यशंकरस्ययतेर्द्विजः ॥ ६७ ॥ वि
चरिष्यतिभूलोकेवेदांतान्संप्रचारयन् ॥ तदैवेयंवराकन्यासत्यलोकंगमिष्यति ॥ ६८ ॥ एव
मुक्त्वामुनिःसोऽपियथेष्टंगतवानथ ॥ यथोक्तंमुनिनासर्वंह्यनुभूतंयथातथम् ॥ ६९ ॥

॥ ७० ॥ ७१ ॥ ७२ ॥ ननुयद्यप्येवंतथापिस्त्रीजनैःसार्धं विवादोमहतांनशोभतइत्याचार्यवाक्यमवतारयति । इतीति ॥ ७३ ॥ स्व



साहंवदामिसर्वज्ञंत्वामलौकिकपूरुषम् ॥ जितोभर्ताममेदानींनजिताहंमुनेत्वया ॥ ७० ॥ मांवि
जित्यततोऽप्यस्यभार्यामर्धशरीरिणीम् ॥ शिष्यत्वेऽसौगृहीतव्योनाजितायांमुनेमयि ॥ ७१ ॥
सर्वज्ञोऽसिमहादेवःसमर्थोऽप्यसियद्यपि ॥ योषिद्रूपात्वयासार्धंतथापिविवदाम्यहम् ॥ ७२ ॥
इतितस्यावचःश्रुत्वायतिराहसरस्वतीम् ॥ महांतोनहिकुर्वंतिविवादंस्त्रीजनैःसह ॥ ७३ ॥ अ
थाद्वैतमतेकर्तुमाक्षेपंयःसमुद्यतः ॥ पुरुषःस्त्रीजनोवामद्विवादस्तेनशोभते ॥ ७४ ॥ गार्ग्यासा
र्धमतोवादंयाज्ञवल्क्योऽकरोन्मुनिः ॥ वादंसुलभयासार्धंजनकोऽप्यकरोत्तथा ॥ ७५ ॥ एवंश्रु
त्वावचस्तस्यशारदात्यंतहर्षतः ॥ विवादंभाष्यकारेणचक्रेवैदिकयुक्तिभिः ॥ ७६ ॥ संप्रवृत्ते
विवादेश्रीशारदामुनिवर्ययोः ॥ दिनानिसप्तदशचगतान्यथसरस्वती ॥७७॥ अजय्यंतंमुनिंज्ञा
त्वामनसेदमचिंतयत् ॥ बाल्यादारभ्यसंन्यासःकृतोऽनेनयथाविधि ॥ ७८ ॥ ब्रह्मचर्यंदृढंचा
स्यशांतोऽयंसत्समाधिमान् ॥ कामशास्त्रंनजानातितेनेदानीमिमंजये ॥ ७९ ॥ संचिंत्यैवंप्रसं
गांतेसभामध्येसरस्वती ॥ पप्रच्छवदकामस्यकलाभिक्षोकिमात्मिकाः ॥ ८० ॥

मतसंतरणोद्युक्तस्यभवतोऽयंनियमोदुर्घटइतिचेत्तत्राह । अथेति ॥ ७४ ॥ अत्रशिष्टाचारंप्रमाणयति । गार्ग्येति । याज्ञवल्क्यगार्गी
विवादोबृहदारण्यादवगंतव्यः । जनकसुलभाविवादोमोक्षधर्मेप्रसिद्धः ॥ ७५ ॥ ७६ ॥ ७७ ॥ ७८ ॥ ७९ ॥ ८० ॥ ॥

पूर्वेशुक्केऽपरेकृष्णेमारःकामः ॥ ८१ ॥ ८२ ॥ नइतिनवाच्यम् ॥ ८३ ॥ एतस्यतवप्रश्नस्य ॥ ८४ ॥ ८५ ॥ ८६ ॥ ८७ ॥ ८८ ॥ ८९ ॥

कियंत्यश्चकिमाधारास्तथामारस्यकास्थितिः ॥ पूर्वेपक्षेऽपरेनार्यांनरेतिष्ठतिवाकथम् ॥८१॥ इ
तितस्यावचःश्रुत्वाकिंचिन्नोवाचभिक्षुराट् ॥ नायंसंन्यासिनाधर्मोविचार्येत्थंस्वमानसे ॥ ८२ ॥
संप्रवृत्तेविवादेहिनेतिवाच्यंनचोच्यते ॥ अतउत्तरमेतस्यावश्यंवक्तव्यमेवतत् ॥ ८३ ॥ एवंवि
चार्यतामूचेयतिवर्यःसरस्वतीम् ॥ मासानंतरमेतस्यभविष्यतिसदुत्तरम् ॥ ८४ ॥ तथेत्युक्त
स्तयाभिक्षुर्जगामाभिमतांदिशम् ॥ नृपस्यामरकाख्यस्यदेशेप्राप्तःसभिक्षुराट् ॥ ८५ ॥ त
स्मिन्नेवदिनेराजामरकाख्योमृतोऽभवत् ॥ वृक्षमूलेशवंतस्यनानामंत्रिभिरावृतम् ॥ ८६ ॥
दूरादेवसमालोक्यशंकरोयोगचक्षुषा ॥ पद्मपादंयतिश्रेष्ठंशिष्यंप्रोवाचतत्क्षणे ॥ ८७ ॥ मृतोरा
जेतियोगेनदृष्टोऽस्माभिरतःशृणु ॥ तस्यदेहेप्रविश्याथनृपोभूत्वासनंदन ॥ ८८ ॥ स्वल्पैरहोभि
रेवाहंकायेऽस्मिन्संप्रवेशनम् ॥ करिष्यामिनसंदेहःकर्तव्योऽत्रकदाचन ॥ ८९ ॥ गुरोरेवंवचःश्रुत्वा
शिष्यःप्रोवाचशंकरम् ॥ सर्वज्ञस्यतवस्वामिन्किंस्यादविदितंगुरो ॥ ९० ॥ पुरामत्स्येंद्रनामा
हिगोरक्षंदेहरक्षणे ॥ नियोज्यकस्यचिद्राज्ञोमृतस्यतनुमाविशत् ॥ ९१ ॥ ततःसिंहासनेराजा
भूत्वाराज्यमचीकरत् ॥ विज्ञायसचिवाविज्ञाःप्रविष्टंयोगिनंनृपे ॥ ९२ ॥

॥ ९० ॥ ९१ ॥ ९२ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

॥ ९३ ॥ ९४ ॥ ९५ ॥ ९६ ॥ ९७ ॥ ९८ ॥ ९९ ॥ १०० ॥ १ ॥ प्रभवंतीति । कामाःकाम्यमानाविषयाः । तत्रदृष्टांतोनारायणस्येति ॥ २ ॥ किंच शोभनोऽयमितिसंकल्पएवतत्प्राप्तीच्छानिदानंसएवयस्यनास्तिकुतस्तस्यतदुद्भवइत्याह । संकल्पइति । कामजानामितेमूलंसं





वश्यार्थंतस्यराजस्त्रीःसुंदरीस्तेसमादिशन् ॥ संगीतलास्यभावाभिनयादिषुदिवानिशम् ॥ ९३ ॥ सक्तबुद्धेःसमाधिस्तुविस्मृतस्तस्ययोगिनः ॥ गोरक्षइत्थंविज्ञाययोगशक्त्याप्रभाववान् ॥ ९४ ॥ आत्मानंसद्विधाकृत्वादेहेनैकेनयोगिराट् ॥ तत्रस्थित्वास्वयाबुद्ध्यागुरोर्देहमपालयत् ॥ ९५ ॥ द्वितीयेनशरीरेणविद्वद्वेषंविधायसः ॥ गतोराजसमीपेऽभून्मंत्रिवत्तस्यसर्वदा ॥ ९६ ॥ नानाशास्त्रोपदेष्टासन्नंतरंगोऽप्यभूत्प्रियः ॥ तत्रैकदानृपंतत्त्वबोधनेनसदैशिकम् ॥ ९७ ॥ योगंचोपदिशन्निन्येप्राक्तनंदेहमेवतम् ॥ ईदृशोविषयस्नेहोयतीनांपरमोरिपुः ॥ ९८ ॥ श्रुतोदृष्टश्चभगवन्नानादुःखाकरस्ततः ॥ तद्विवेक्तुंसमर्थोऽसिकृत्याकृत्यंयथार्थतः ॥ ९९ ॥ क्वकामशास्त्रकलना क्वचास्माकंव्रतंगुरो ॥ किमज्ञातंगुरूणांवाक्षंतव्यंयन्मयोदितम् ॥ १०० ॥ पद्मपादवचःश्रुत्वा शंकरोगुरुरब्रवीत् ॥ अविगीतंत्वयाप्रोक्तंश्रृणुसौम्यवचोमम ॥ १ ॥ प्रभवंतिवशीकर्तुंनैवकामाअसंगिनः ॥ नारायणस्यकृष्णस्यगोपवध्वोयथातथा ॥ २ ॥ संकल्पोऽखिलकामानांमूलं विद्धिसनंदन ॥ असंगस्यसदैकस्यसमेनास्तिकदाचन ॥ ३ ॥



कल्पात्किलजायसइत्युक्तेः । असंगोनहिसज्जतइतिश्रुत्यासंगस्यसत्त्वभावप्रतिपादनेनतदभावप्रदर्शनात् एकाद्वितीयस्यसंकल्पविषयस्यैवा

भावान्नास्तितत्संभवइत्याह । एकस्येति ॥ ३ ॥ ननुनास्तिजीवतश्चेतनस्यपरित्यागस्तत्कार्यस्यतत्त्वविस्त्वप्युपलब्धेरित्याशंक्याज्ञानमू
लकाध्यासमूलकस्यतस्यैवानर्थकरत्वंनतुप्रारब्धकर्ममात्रजन्यसंकल्पाभासस्येतितत्सत्त्वेऽपिनकाचित्क्षतिरित्याशयेनाह । अज्ञानेत्यादिना
॥ ४ ॥ कारणंसर्वानर्थोपादानभूतं सबीजकःस्वबीजभूताध्याससहितः ॥ ५ ॥ ६ ॥ किंचाज्ञस्यपुंसःसर्वपदार्थजातंदुःखकरं सर्वस्या
पिरागद्वेषाक्रांतत्वात्तत्त्वविदस्तुनास्तिकिंचिदप्यनर्थकरं सर्वस्यापिदृश्यस्यमिथ्यात्वेनतद्विषयकरागाद्यभावादित्याह । देहाभिमानि

अज्ञानमूलकःसोऽपिनृणांदुःखकरोभवेत् ॥ विषयासक्तिहेतुत्वात्संकल्पोनैवमन्यथा ॥ ४ ॥
ब्रह्मबोधेननष्टंस्यादज्ञानंयस्यकारणम् ॥ संकल्पोऽपितदासर्वोनष्टएवसबीजकः ॥ ५ ॥ संक
ल्पनाशेविषयासक्तिनाशःस्वतोभवेत् ॥ अतोऽस्माकंससंकल्पोमूलाभावेलयंगतः ॥ ६ ॥ दे
हाभिमानिनःपुंसःसर्वंदुःखायकल्पते ॥ आत्मारामस्यधीरस्यबाधकंनैवकिंचन ॥ ७ ॥ स्वा
त्मबोधविहीनस्यसर्वंकृत्यंभवप्रदम् ॥ नित्यंब्रह्मात्मनिष्ठस्यसर्वासुखमयीकृतिः ॥ ८ ॥ ब्रह्म
हत्याश्वमेधाभ्यांनलेपस्तस्यधीमतः ॥ येनब्रह्मात्मबोधेनद्वैतबुद्धिरपाकृता ॥ ९ ॥ त्रिशीर्ष
मवधीच्छक्रोवृकेभ्यश्चाददद्यतीन् ॥ लोमहानिर्नशक्रस्यश्रुतिराहेतिवक्रचाम् ॥ ११० ॥

नइति ॥ ७ ॥ किंचाज्ञस्यरागद्वेषाद्याक्रांतस्वांतस्यसर्वंकर्मापिदुःखनिदानमेव तत्त्वज्ञस्यत्वतथाभूतस्यसमस्तंसुखनिदानमेवेत्याह ।
स्वेति ॥ ८ ॥ किंचनास्तिपुण्यपातकस्यब्रह्मविदोलेपइत्याह । ब्रह्महत्येति ॥ ९ ॥ तत्रप्रमाणमाह । त्रिशीर्षमिति । तथाचऋग्वेदि
नांश्रुतिः । त्रिशीर्षाणंत्वाष्ट्रमहनमरुन्मुखान्यतीन्शालावृकेभ्यःप्रायच्छं बह्वीःसंधाअतिक्रम्यदिविप्रह्लादीयानतृणमहमंतरिक्षेपौलोमान्
पृथिव्यांकालकाञ्जांस्तस्यमेतत्रनलोमचमीयतेसयोमांवेदनहवैतस्यकेनचनकर्मणालोकोमीयतेनस्तेयेननभ्रूणहत्ययेत्याद्याः ॥ ११० ॥

अश्वमेधेत्यादि । तथाचवाजसनेयिनांश्रुतिः । जनकोहवैदेहोबहुदक्षिणेनयज्ञेनईजे अभयंवैजनकप्राप्तोऽसीत्याद्याः ॥ ११ ॥ फलितमा



अश्वमेधमुखैर्यागैरयजज्जनकोनृपः ॥ मोक्षमापनवैदेहसंबंधमितिवाजिनः ॥ ११ ॥ अतोमे कामशास्त्रस्यशीलनंबाधकंनहि ॥ एवमुक्त्वाययौभिक्षुर्गिरिश्रृंगंमनोहरम् ॥ १२ ॥ तत्रस्थि त्वाक्षणंशिष्यानुवाचवचनंयतिः ॥ पाल्यतांभोःशरीरंमेसमाधानेनगौरवात् ॥ १३ ॥ ताव द्यावदहंकामशास्त्रंकामकलास्तथा ॥ ज्ञात्वायास्याम्यहंकायेस्वीयेऽस्मिन्भिक्षुनामके ॥ १४ ॥ अनुशास्यमुनिःशिष्यांस्त्यक्त्वायोगबलाद्वपुः ॥ स्थूलंसूक्ष्मशरीरेणनृपदेहंसमाविशत् ॥ १५ ॥ राजदेहस्ततःसासुर्नेत्रेप्रोन्मीलयञ्छनैः ॥ क्रमेणसबलंप्राप्यहर्षयन्प्रमदाःप्रजाः ॥ १६ ॥ उ दतिष्ठन्महाराजोजीवयन्निवसेवकान् ॥ उपलभ्यपतिंनार्योमंत्रिणःप्राप्तजीवनम् ॥ १७ ॥ हर्षंप्राप्यतदादध्मुःशंखाञ्छतसहस्रशः ॥ जयस्वस्तिप्रभृतयःशब्दाआसन्समंततः ॥ १८ ॥ पशुपतिरपिदेहंमानुषंप्राप्यलोकेमनुजइवविहारंशंकरःसंश्चकार ॥ किमुतमनुजदेहेस्वात्मबुद्धिं प्रपन्नोव्यवहरतिजनोऽयंलौकिकेभोगजाले ॥ १९ ॥ ॥ ॥ ॥

ह । अतइति ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ कथातात्पर्यमाह । पशुपतिरिति । भोगजालेव्यवहरतीतिकि माश्चर्यम् ॥ १९ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

इतीति । स्थूलेसूक्ष्मेचदेहेऽहंकृतिंसम्यक्विहायविमलसुखमूर्तौस्वस्वरूपेऽस्मिन्नात्मनिनित्यंस्थीयताम् ॥ १२० ॥ अधुनाचित्तंसंबोध्याह ।
नेति । सौख्यलेशोऽपिनास्ति सर्वभूतांतरात्मायमात्मासुखनिधिरितिसंविचार्यतत्सुखार्थंसर्वदास्थातुमशक्तावपिक्षणमात्रंतुसमाधौनिरोध

इतिमनसिविचार्याहंकृतिंसंविहायश्रुतिशिखरवचोभिःस्थूलदेहेऽथसूक्ष्मे ॥ विमलसुखघनेस्वे
स्वात्मबोधेननित्यंत्यजतकुमतिमांध्यंस्थीयतामत्रधीराः ॥ १२० ॥ नखलुविषयजालेसौख्य
लेशोऽपिबुद्ध्यासुजनमुनिसमाजैःसंविचार्येतिवित्त ॥ सुखनिधिरयमात्मासर्वभूतांतरात्माक्ष
णमपिसुसमाधौस्थीयतांसौख्यसिद्ध्यै ॥ १२१ ॥ इतिशांकरदिग्विजयसारेश्रीमन्मुकुंदपदार
विंदमकरंदाभिलाषिसदानंदाख्यविदुषाविरचितेशंकरस्यनृपदेहप्रवेशोनामसप्तमः सर्गः ॥ ७ ॥

भूमौस्थीयताम् ॥ १२१ ॥ ॥ इतिश्रीमत्परमहंसपरिव्राजकाचार्यबालगोपालतीर्थश्रीपादशिष्यदत्तवंशावतंसरामकुमारसूनुधनपतिसू
रिकृतेशंकरविजयडिंडिमौसप्तमः सर्गः ॥ ७ ॥ ॥ ॥ ॥ ॥ ॥ ॥

श्रीगणेशायनमः ॥ एवंराजवर्ष्मप्रवेशंनिरूप्यततोनिःसरणादिकंनिरूपयितुमुपक्रमते । अथेति । भद्रासनंराजसिंहासनम् ॥ १ ॥ २ ॥ ॥ ३ ॥ कस्यराज्ञःकोवागुणोऽस्यभूपतेरस्तीत्यपेक्षायामाह । ययातेरिति । वीभत्सोरर्जुनस्येवजिष्णुत्वंजयशीलत्वम् ॥ ४ ॥ ५ ॥ ६ ॥ ॥ ७ ॥ ८ ॥ तत्रेति । तत्रराजशरीरेसर्वाःकामकलाः । श्रद्धाप्रीतीरतिश्चैवधृतिःकीर्तिर्मनोभवा । विमलामोहिनीघोरामदनोत्पादिनीमदा ।

अथमंत्रिगणैःसार्धंकृतशांतिर्नृपस्तदा ॥ भद्रासनंसमारुह्यस्वीयांभुवमपालयत् ॥ १ ॥ अथ संशयमापन्नामंत्रिणस्तत्पुरोहिताः ॥ अपूर्वगुणसंपन्नंनृपंदृष्ट्वाब्रुवन्निदम् ॥ २ ॥ अहोरूपमहो ज्ञानमहोधैर्यमहोबलम् ॥ पूर्वेषामपिराज्ञांसद्गुणाःसंत्यस्यभूपतेः ॥ ३ ॥ ययातेरिवदातृत्वं वक्तृत्वंचपृथोरिव ॥ बीभत्सोरिवजिष्णुत्वंसार्वज्ञंश्रीपतेरिव ॥ ४ ॥ योग्ययंकश्चिदेवातःस्वं वपुर्नव्रजेद्यथा ॥ करवामतथासर्वेयत्नंनिश्चित्ययुक्तिभिः ॥ ५ ॥ यस्यकस्यगतासोर्यद्वपुरस्ति क्षितौकचित् ॥ दह्यतामविचार्येतिरहोगत्वाभ्यमंत्रयन् ॥ ६ ॥ एवंपरस्परंसर्वेविनिर्णीयाथ सेवकान् ॥ योजयामासुरासन्नान्दग्धुंदेहान्क्षितौव्यसून् ॥ ७ ॥ अथराजधुरंन्यस्यामात्ये बुभुजेनृपः ॥ मनोहराःस्त्रियोवक्रीःसुंदरीर्वामलोचनाः ॥ ८ ॥ तत्रकामकलाःसर्वाबुद्ध्वारम्य विचेष्टितः ॥ कामशास्त्रानुरोधेनरमयामासयोषितः ॥ ९ ॥ ॥ ॥ ॥

मोहिनीदीपनीचैववनेयावशकरीतथा । रंजनीचैवमदनाकलाःस्युरंगेषुसर्वशः । दक्षिणांगंसमाश्रित्यशिरसश्चरणावधि । पादेगुल्फेतथोरौच भगेनाभौकुचेहृदि । कक्षेकंठेतथोष्ठेचगंडेनेत्रेश्रुतावपि । ललाटेचशिरोदेशेवसेत्कामस्तिथिक्रमात् । दक्षेपुंसःस्त्रियोवामेशुक्लेकृष्णेविपर्यय

इत्युक्तः ॥ ९ ॥ वात्स्यायनेति । त्रिवर्गप्रतिपत्तिःविद्यासमुद्देशःनागरिकंवृत्तमित्यादिषुवात्स्यायनमुनिप्रणीतसूत्रेषुनिबंधममरकशत

वात्स्यायनोक्तसूत्रेषुभाष्यंसम्यङ्निरीक्ष्यसः ॥ स्वयंतत्रनिबंधंचव्यधत्तन्नृपवेषधृक् ॥ १० ॥
इत्थंराजशरीरंसप्रविश्यबुभुजेस्त्रियः ॥ मासमात्रमतिक्रांतःसकालस्तावतायतेः ॥ ११ ॥ अ
थकालमतिक्रांतंसंविचार्यपरस्परम् ॥ भाष्यकारस्यशिष्यास्तेवियोगार्तधियोऽब्रुवन् ॥ १२ ॥
आचार्यैरवधिर्मासोऽकार्यतीतश्चसोऽप्यहो ॥ अद्यापिस्ववंपुःप्राप्यसनाथानवयंकृताः ॥ १३ ॥
किंकुर्मःकुत्रगच्छामोवदताचार्यमार्गणे ॥ उपायंस्वस्वबुद्ध्याद्यकथंविद्मोवयंगुरुम् ॥ १४ ॥
पद्मपादोऽथतानाहकिमर्थंनोऽत्रशोचनम् ॥ अन्वेष्यामोगुरुंगूढंगुणाःसंत्यस्यनावृताः ॥ १५ ॥
इत्थंनिश्चित्यतेसर्वेपद्मपादस्यवाक्यतः॥ कांश्चित्तत्रनिवेश्याग्र्यान्यतींस्त्वन्येऽतिदक्षिणाः॥१६॥
शरीरंरक्षितुंविज्ञादेशंजग्मुर्महीपतेः ॥ श्रुत्वालोकमुखात्तत्रमृत्वातंपुनरुत्थितम् ॥ १७ ॥ तरु
णीगणसंसक्तंनृपंविज्ञायतत्पुरम् ॥ कृत्वागायकवेषंतेविविशुर्गीतपंडिताः ॥ १८ ॥ राज्ञोज्ञा
पितविद्यातिशयास्तेदद्दशुर्नृपम् ॥ चामरैर्वीज्यमानंतंतरुणीगणसंवृतम् ॥ १९ ॥ राज्ञानम
स्कृतास्तत्रलब्ध्वानुज्ञांततोनृपात् ॥ सभामध्येनिविष्टास्तेजगुःसंगीतकान्यलम् ॥ २० ॥

काभिधम् ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ शरीरंरक्षितुंनिवेश्यस्थापयित्वा ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥

गानव्याजेनस्वगुरुंप्रतिबोधनंकृतवतांतद्गानमुदाहरति। भृंगेति। हेभृंगश्रुतिसूत्रादिलक्षणकुसुममकरंदास्वादनशीलतवसंगतिंसंगममपा स्यविहायोच्चवृक्षवतिगिरिशृंगेसंगमजुषित्वदंगेशरीरेतवसतित्वच्छरीरस्यरक्षणायरचिताः सकलुषंदुःखयुक्तमंतरंगमंतःकरणंयेषांतेभृंगाःशि ष्यास्तवसंगमार्थंभंगमुपयंतिभेदंप्राप्नुवंतीत्यर्थः।इंद्रवदनानामकंवृत्तमिदम्। तदुक्तं वृत्तरत्नाकरे। इंद्रवदनाभजसनैःसगुरुयुग्मैरिति॥२१॥ पंचेति। पंचशरस्यकामस्ययःसमयःकलादिरूपःसंकेतःसिद्धांतोवातस्यसंचयार्थंप्रांचंशिवगुरूद्भवंप्रपंचंशरीरंमुचन्निवेहास्मिन्राजशरीरे स्थानेवासंचरसि। तथाच हेपंचजनेषुमनुजेषुमुखश्रेष्ठ यद्वा यस्मिन्पंचपंचजनाआकाशश्चप्रतिष्ठितस्तमेवमन्यआत्मानंविद्वान्ब्रह्मामृतोमृ

भृंगतवसंगतिमपास्यगिरिशृंगेतुंगविटपिनिसंगमजुषित्वदंगे ॥ सांगरचिताःसकलुषांतरंगाः संगमकृतेभंगमुपयंतिभृंगाः॥ २१॥ पंचशरसमयसंचयकृतेप्रांचंमुचन्निवेहसंचरसिप्रपंचम्॥ पंचजनमुखपंचमुखमप्यगच्छन्त्वंचगतिरिरितिकिंचकिलवंचितोऽसि॥ २२॥ पर्वशशिमुखसर्व मपहायपूर्वंकुर्वदिहगर्वमनुसृत्यहृदपूर्वम्॥ नस्मरसिवस्त्वस्मदीयमितिकस्मात्संस्मरतदस्मर परमस्मदुक्त्या॥ २३॥ ॥ ॥ ॥ ॥ ॥

तमितिश्रुत्युक्तानां सांख्यरीत्या मूलप्रकृतिरविकृतिर्महदाद्याःप्रकृतिविकृतयःसप्त षोडशकस्तुविकारोनप्रकृतिर्नविकृतिःपुरुषइति पंचविं शतितत्वानांमुखशुद्धात्मन् पंचजनपदस्यपंचपंचजनपरत्वाश्रयणात् सिद्धांतरीत्यावाक्यशेषस्थानांप्राणचक्षुःश्रोत्रान्नमनसांपंचजनानांमु खाधिष्ठानेत्यर्थः। पंचाननमप्यगच्छन्शिवंस्वस्वरूपमप्यनाप्नुवन् गतिश्चासौत्वमितिहेतोःकुतःखलुवंचितोऽसिवंचनामगाः॥२२॥ किंच पर्वेति। हेशरत्पूर्णमासीचंद्रमुख पूर्वंसर्वंशांतिदांत्यादिकमपहायेहगर्वंकुर्वन्मानसमनुसृत्यास्मदीयंवस्त्वितिकस्मान्नस्मरसितत्तस्मात्हे ऽस्मराकामास्मदुक्त्यापरंस्वस्वरूपंसंस्मर तत्परमितिवा॥ २३॥ ॥ ॥ ॥ ॥ ॥

असमदुक्त्यापरंस्मरेत्युक्त्वाथात आदेशोनेतिनेति अस्थूलमनण्वह्रस्वमदीर्घमनंतरमबाह्यमपूर्वमनपरमशब्दमस्पर्शमरूपमव्ययंतथारसंनि त्यमगंधवच्चयत्। अनाद्यनंतंमहतःपरंध्रुवंनिचाय्यतंमृत्युमुखात्प्रमुच्यतइत्यादिश्रुतिभिस्तंस्मारयंति। नेतीति। नेतिनेत्यादिनिगमवचनेन मूर्तामूर्तराशिंसम्यग्निषिध्यसर्वाधिष्ठानत्वात्निरवधिबाधायोगात्प्रतिषेद्धुःस्वरूपत्वेनप्रतिषेधसाक्षितयावस्थितत्वात्सत्यस्यापिसत्यं अस्ती त्येवोपलब्धव्यः । असन्नेवसभवति असद्ब्रह्मेतिवेदचेदितिश्रुतेश्चनिषेद्धुमशक्यंयदहंब्रह्मास्मीतिस्वात्मरूपतयाविद्वांसोजानंति तत्तत्त्वं परमार्थवस्तुत्वमसि ॥ २४ ॥ तथापंचकोशविवेकेनकवयोयदात्मत्वेनप्रतिपद्यंते तत्तत्त्वंत्वमसीतिस्मारयंति। खाद्यमिति। आकाशादिकंवि श्वमुत्पाद्यानुप्रविश्यान्नमयप्राणमयमनोमयविज्ञानमयानंदमयकोशलक्षणेतुषजाले गूढंयुक्तिलक्षणावघातेनकवयोविविच्य तंडुलवद्यदा

नेतिनेत्यादिनिगमवचनेननिपुणंनिषिध्यमूर्तामूर्तराशिम् ॥ यदशक्यनिन्हवंस्वात्मरूपतया जानंतिकोविदास्तत्त्वमसितत्त्वम् ॥ २४ ॥ खाद्यमुत्पाद्यविश्वमनुप्रविश्यगूढमन्नमयादिकोशतु षजाले ॥ कवयोविविच्ययुक्त्यवघाततोयत्तंडुलवदाददतितत्त्वमसितत्त्वम् ॥ २५ ॥

ददतितत्त्वंत्वमसि। तथाचश्रुतिः। तस्माद्वाएतस्मादात्मनआकाशःसंभूतः। आकाशाद्वायुर्वायोरग्निरग्नेरापः अद्भ्यःपृथिवी पृथिव्याओ षधय ओषधीभ्योऽन्नं अन्नात्पुरुषः सवाएषपुरुषोऽन्नरसमयः तस्माद्वाएतस्मादन्नरसमयादन्योंऽतरआत्माप्राणमयः। तस्माद्वाएतस्मात्प्रा णमयादन्योंऽतरआत्मामनोमयः तस्माद्वाएतस्मान्मनोमयादन्योंतरआत्माविज्ञानमयः तस्माद्वाएतस्माद्विज्ञानमयादन्योंऽतरआत्माआनं दमयः सोऽकामयतबहुस्यांप्रजायेयेति सतपोऽतप्यत सतपस्तप्त्वा इदंसर्वमसृजतयदिदंकिंच तत्सृष्ट्वा तदेवानुप्राविशत् तदनुप्रवि श्य सच्चत्यच्चाभवदित्याद्या युक्तिस्तावद्विमतोदेहआत्मानभवति कार्यत्वात्घटवत्। ननु विपक्षेबाधकाभावादप्रयोजकोऽयंहेतुरितिचेन्न। अकृताभ्यागमकृतविप्रणाशाख्यबाधकसद्भावात् तथाविवादास्पदःप्राणआत्मानभवति जडत्वात्घटवत्। तथामनोमयआत्मानभवति

विकारत्वाद्देहवत् तथाविज्ञानमयआत्मानभवति विलयाद्यवस्थावत्त्वात्घटादिवत् तथानंदमयोऽप्यात्मानभवति कादाचित्कत्वादभ्रवत्त
स्मादानंदएवात्मा भवितुमर्हति नित्यत्वात् यआत्मानभवतिनासौनित्यो यथादेहादिः । आत्मनआकाशःसंभूतइत्यादिश्रुत्या आकाशादे
रनित्यत्वावगमान्नानैकांतिकतेत्याङ्पूर्वाद्नास्यविहरणेवर्तमानाद्ददातेरात्मनेपदंस्यादित्यर्थकादाङोदोनास्यविहरणइतिसूत्रादाददतइतिभ
वितव्यमितिचेन्न भिक्षामाददातीतिप्रयोगवदत्र ङिद्विशिष्टस्याकारस्याग्रहणेनाददतीतिप्रयोगस्यसाधुत्वात्सूत्रेङिद्विशिष्टाकारग्रहणस्याङि
द्विशिष्टाकाराद्उत्तरस्य ददातेरात्मनेपदाभावज्ञापनार्थत्वात् ॥ २५ ॥ सर्वेंद्रियालंबनंतत्त्वंत्वमेवेतिस्मारयंति । विषममिति । यथाविषमदेशे

विषमविषयेषुसंचारिणोऽक्षाश्वान्दोषदर्शनकशाभिघाततः ॥ स्वैरंसन्निवर्त्यस्वातरश्मिभिर्धी
राबध्नंतियत्रतत्त्वमसितत्त्वम् ॥ २६ ॥ व्यावृत्तजाग्रदादिष्वनुस्यूतंतेभ्योऽन्यदिवपुष्पेभ्यइव
सूत्रम् ॥ इतियदौपाधिकत्रयपृथक्त्वेनविदंतिसूरयस्तत्त्वमसितत्त्वम् ॥ २७ ॥

षुस्वैरंसंचारिणोऽश्वान्कशाभिघातेनरश्मिभिःसम्यङ्निवर्त्य शंकौबध्नंति तथाविषमेषुविषयलक्षणेषुदेशेषुस्वैरंसंचारिणइंद्रियलक्षणान्हयान्
दोषदर्शनलक्षणकशाभिघातेनमनोवृत्तिलक्षणरश्मिभिर्यस्मिन्परमात्मतत्त्वेधीमंतोबध्नंति तत्तत्त्वंत्वमसि । तथाचश्रुतिः । आत्मानंरथिनं
विद्धिशरीरंरथमेवतु । बुद्धिंतुसारथिंविद्धिमनःप्रग्रहमेवच । इंद्रियाणिहयानाहुर्विषयांस्तेषुगोचरान् । यस्तुविज्ञानवान्भवतियुक्तेनमनसास
दा । तस्येंद्रियाणिवश्यानिसदश्वाइवसारथेरिति ॥ २६ ॥ अथजाग्रत्स्वप्नसुषुप्त्युपाधिविलक्षणंतत्त्वंत्वमसीतिस्मारयंति । व्यावृत्तेति । आत्मा
जाग्रदाद्युपाधिभ्योऽन्योव्यावर्त्यमानेषुतेष्वनुस्यूतत्वात्पुष्पेभ्यःसूत्रमिवेत्येवमुपाधित्रयपृथक्त्वेनयत्सूरयोजानंतितत्तत्त्वंत्वमसि ॥ २७ ॥

किंच। पुरुषइति । पुरुषएवेदंसर्वं यद्भूतंयच्चभाव्यं सर्वंखल्विदंब्रह्म तज्जलान् सदेवसोम्येदं एकमेव। ऐतीयंएतैदात्म्यमिदंसर्वं यथासोम्यैकेन लोहमणिनासर्वंलोहमयंविज्ञातंस्याद्वाचारंभणंविकारोनामधेयं लोहमित्येवसत्यमित्यादिवेदेषु सर्वकारणतयासुवर्णस्ययथाकटकमुकुटादि तादात्म्यं तथा यस्यसार्वात्म्यंसरसंयथास्यात्तथा आम्नायते । उपक्रमोपसंहारावभ्यासोऽपूर्वताफलम् । अर्थवादोपपत्तिश्चलिंगान्येतानिषट्क्रमादित्युक्तषड्विधतात्पर्यलिंगैःस्वारस्येनोपदिश्यतेतत्तत्त्वंत्वमसि ॥ २८ ॥ किंच । यश्चेति। यश्चाहमस्मिन्शरीरेविभामिसोऽसौरविमंडलस्थोऽस्ति योऽसौरविमंडलेविभातिसोऽहमस्मीत्येवंव्यतिहारेणवेदवादिनः प्रयत्नतोयत्तत्त्वमध्यापयंति तत्तत्त्वंत्वमसि। तथाचश्रुतिः । तद्यत्तत्स

पुरुषएवेदमित्यादिवेदेषुसर्वकारणतयायस्यसार्वात्म्यम् ॥ हाटकस्येवमुकुटादितादात्म्यंसरसमाम्नायतेतत्त्वमसितत्त्वम् ॥ २८ ॥ यश्चाहमत्रवर्ष्मणिभामिसोऽसौयोऽसौविभातिरविमंडले ॥ सोऽहमितिवेदवेदिनोव्यतिहारतोयदध्यापयंतियत्नतस्तत्त्वमसितत्त्वम् ॥ २९ ॥ वेदानुवचनसद्दानमुखधर्मैः श्रद्धयानुष्ठितैर्विद्ययायुक्तैः ॥ विविदिषंत्यत्यंतविमलस्वांताब्राह्मणायद्ब्रह्मतत्त्वमसितत्त्वम् ॥ ३० ॥

त्यंअसौसआदित्योयएषएतस्मिन्मंडलेपुरुषोयश्चायंदक्षिणेक्षन्पुरुषस्तावेतावन्योऽन्यस्मिन्प्रतिष्ठितावित्याद्याः ॥ २९ ॥ किंच । वेदेति। वेदानुवचनसद्दानयज्ञतपोहितमितमेध्याशनादिधर्मैः श्रद्धयाऽनुष्ठितैःविद्ययोपासनयाचयुक्तैरत्यंतनिर्मलानींद्रियाणियेषांतेब्राह्मणा यद्ब्रह्मविविदिषंतिवेदितुमिच्छंतितत्तत्त्वंत्वमसि । तथाचश्रुतिः । तमेतंवेदानुवचनेनब्राह्मणाविविदिषंति यज्ञेनदानेनतपसानाशकेन यद्विद्ययोपनिषदाकरोतितदेववीर्यवत्तरंभवति दानादेस्तत्त्वंतुभगवतोक्तं सात्विकत्वंवेदानुवचनादेः प्रज्वलितार्धशिरस्कस्यजलराशिप्रवेशेच्छावदुत्कटेच्छां प्रतिकरणत्वं नतु सामान्येच्छांप्रति अजागलस्तनायमानायास्तस्याःपूर्वमेवसिद्धत्वात् यद्वाऽश्वेनजिगमिषतीत्यत्र गमनंप्रत्यश्वस्येवज्ञानं प्रत्येवकरणत्वमस्तु ॥ ३० ॥

किंच । शमेति । शमदमोपरमक्षांतिसमाधिश्रद्धालक्षणैःसाधनैः स्वात्मस्वरूपेणात्मनिबुद्धौयदन्विष्यसाक्षात्कृतं सत्यंज्ञानमनंतंब्रह्म विज्ञानमानंदंब्रह्मेत्यादिश्रुतिबोधितमनंतादिस्वरूपंयैस्तेकृतकृत्याःसंतः पुनरिहसंसारे जन्ममरणादिलक्षणंखेदंनाप्नुवंतितित्तत्त्वंत्वमसि । तथा चश्रुतिः । शांतोदांतउपरतस्तितिक्षुःसमाहितआत्मन्येवात्मानंपश्येदितिश्रद्धान्वितोभूत्वेतिच यद्वैताःशिष्याणांपृथक्पृथगुक्तयइतिबोध्यम्

शमदमोपरमादिसाधनैर्धीराःस्वात्मनात्मनियदन्विष्यकृतकृत्याः ॥ अधिगतामितसच्चिदानंदरूपानपुनरिहखिद्यंतितत्त्वमसितत्त्वम् ॥ ३१ ॥ एवमेकादशश्लोकैःपद्मपादादिभिर्नृपः॥ गीतंब्रह्माद्वयंतत्त्वंतदंतर्गतचेतसा ॥३२॥ निशम्यातिप्रसन्नात्मास्वात्मानंदरसाप्लुतः ॥ विससर्ज सुसिद्धार्थोज्ञाततत्त्वोऽतिविस्मितः ॥ ३३ ॥ ज्ञाततत्त्वंनृपंबुद्ध्वापद्मपादादयस्तदा ॥ अतिशीघ्रतयामार्गमाश्रित्याथययुर्गिरिम् ॥ ३४ ॥ अथतेषुगतेष्वंतर्बुद्ध्वात्मानंनृपःस्वयम् ॥ मूर्छामाश्रित्यनिर्गत्यराजदेहान्निजंवपुः ॥ ३५ ॥ प्रविवेशततःसंज्ञामवाप्यैवसमुत्थितः ॥ प्रोन्मील्यनयनेशीघ्रंगिरिश्रृंगस्यगव्हरे ॥ ३६ ॥ अपश्यत्कंदरामेत्यराजभृत्यैश्चवन्हिना ॥ उद्दीपितांविलोक्याशुदह्यमानंवपुस्तथा ॥ ३७ ॥ समालोक्यतथावन्हिंसर्वतःप्रसृतंयतिः ॥ तच्छांतयेनृसिंहाख्यमीश्वरंप्रणतार्तिहम् ॥३८॥ सस्माराथसतुष्टावस्तोत्रेणानेनभिक्षुराट् ॥ श्रुत्वायंमानवायांतिनृसिंहपदवींपराम् ॥ ३९ ॥

॥ ३१ ॥ एवमिति । एवमेकादशश्लोकैःपद्मपादादिभिर्गीतंब्रह्माद्वयंतत्त्वंतदंतर्गतचेतसानृपतिश्चनिशम्यतान्विससर्जेत्यन्वयः ॥ ३२ ॥ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ राजभृत्यैरागत्यवह्निनोद्दीपिताम् ॥ ३७ ॥ ३८ ॥ ३९ ॥ ॥ ॥

स्तोत्रमेवोदाहरति । नरहरिमिति । नरहरिपदपद्मंवंदइत्यन्वयः । कुतइत्याशंक्य सर्वानर्थमूलभूतमहामोहसागरोत्तारणनौकाभूतत्वा
दित्याशयेनाह । मोहेति । तत्रशिष्टाचारंप्रमाणयति । विधीति । तैरादरादीड्यंस्तुत्यं तथाचब्रह्मादिभिरपि सर्वात्मना सेव्यस्यस्तुत्यस्य
तत्पादपद्मस्यैववंदनमस्मदादिभिःसर्वैरपिकर्तव्यमित्याह । विधिहरेति । ननु ब्रह्मादिभिरपितदेवकिमितिसेव्यतेस्तूयतेचेत्याशंक्या
तिरम्यत्वादित्याह । अभिराममिति । महामोहाब्धिपोतत्वात्तत्कार्यभूतभ्रांतिज्ञाननाशकत्वमपितस्यैवेत्याह । भ्रमहरमिति । अतएवमो
क्षदमपितदेवेत्याह । मोक्षदमिति । नन्वेवंभूतंचेत्तर्हिसर्वैरपितदेवकिमितिनशरणीक्रियतइत्याशंक्य सर्वेषांसत्पुरुषत्वाभावात्सज्जनानांतुत
देवशरणार्हमित्याह । सच्छरण्यमिति । ननुमोहाद्यपहरणपूर्वकमोक्षप्रदत्वंब्रह्मादिभिःसेव्यत्वंस्तूयमानत्वंचतस्यकस्मात्प्रमाणाज्ज्ञातमित्याशं

नरहरिपदपद्मंमोहपाथोधिपोतंविधिहरमुखदेवैरादरात्सेव्यमीड्यम् ॥ भ्रमहरमभिरामंमोक्षदं
सच्छरण्यंश्रुतिपदमभिवंदेब्रह्मबोधस्यहेतुम् ॥ ४० ॥ नरगणभवबंधंहंसिसिंहस्वभावाद्वरदनर
हरिस्त्वंसज्जनेषुप्रसिद्धः ॥ तवचरणसरोजंसर्ववंद्यंश्रयेऽहंपरिहरशुचितापंतापसंहारकारिन् ॥ ४१ ॥

क्यश्रुतिप्रमाणादित्याह । श्रुतिभिः । देवाहवैमृत्योःपाप्मभ्यःसंसाराद्बिभ्युस्तेप्रजापतिमुपधावंस्तेभ्यएतंमंत्रराजंनारसिंहमानुष्टुभंप्रायच्छदि
त्याद्याभिः । श्रुत्या पद्यतेऽवगम्यतइतिश्रुतिपदम् । ननुज्ञानादेवतुकैवल्यं ऋतेज्ञानान्नमोक्षः तरतिशोकमात्मवित् तमेवविदित्वातिमृत्युमेति ।
नान्यःपंथाविद्यतेऽयनायेतिश्रुत्याज्ञानस्यज्ञाननिवर्त्यत्वोपपत्त्याचविरोधात्कथंतस्यतथात्वमित्याशंक्य यस्यदेवेपराभक्तिरित्यादिश्रुत्यातत्त्व
ज्ञानस्यापितदायत्तत्वात्तस्यैवतथात्वमित्याशयेनाह । ब्रह्मबोधस्यहेतुमिति ॥ ४० ॥ नृणांसिंबंधंहंतीतिनृसिंहइतिनिरुक्तिमभिप्रेत्याह । नरे
ति । यतोबंधहारित्वान्नरगणस्यबंधंनाशयस्यतोवरदसज्जनेषुस्वभक्तजनेषुनरहरिस्त्वंप्रसिद्धःअतःसंसारानलसंतापहारिणस्तवलौकिकाभि
संतापहरणमकिंचित्करमितिज्ञात्वा सर्ववंद्यंतवपादाब्जमहंप्रपद्यइत्याह । तवेति । शुचिरग्निः ॥ ४१ ॥ ॥ ॥

नृत्वंजीवस्वभावभूतांकर्तृत्वभोक्तृत्वादिलक्षणामविद्यांहंतीतिनृसिंहइतिनिरुक्तिमभिप्रेत्याह। भवेति। हेईशतवभजनपराणांजन्ममरणलक्षण विषस्यवल्लीदुःखपुष्पां पुण्यपापाभ्यांपुष्टांकामदर्पमनःसंतापदात्रीं कर्तृत्वादिरूपामविद्यांसबीजांमूलाज्ञानसहितां त्वंहंसीत्येवंतवनाम्नोनि रुक्त्यैवसिद्धमतस्त्वांघ्रिकमलंश्रयइत्यर्थः। तद्दहनंतवातिसुकरमितिसंबोधनाशयः॥४२॥ नाचासौसिंहश्चेतिव्युत्पत्तिमभिप्रेत्याह। गग नेति। तत्सृष्ट्वा तदेवानुप्राविशत् हंतेमास्तिस्रोदेवता अनेनजीवेनात्मनानुप्रविश्य नामरूपेव्याकरवाणीत्यादिश्रुतेः। तथाचनरोऽपित्वंसिंह

भवमृतिविषवल्लीदुःखपुष्पामविद्यांसुकृतवृजिनपुष्टांकामदर्पाधिमूलाम् ॥ दहसिखलुसबीजांत्वंनिरु क्त्यैवनाम्नस्तवभजनपराणांसिद्धमित्येवमीश ॥४२॥ गगनपवनमुख्यंविश्वमेतद्विसृष्ट्वासुरनरपशुमु ख्येदेहजालेप्रविष्टः ॥ इहनरपदगीतःसिंहएवेश्वरस्त्वंपरिहरभवतापंस्वात्मनिस्वंप्रवेश्य ॥ ४३ ॥ वि विधनरपुरेषुक्षेत्रभूतेषुतेषुस्वयमिहपुरुषाख्यस्त्वंप्रविष्टोवरिष्ठः ॥ जनिमृतिभयमूलंनाशयत्वंममेदंन रहरिपदगीतःकिंननाहंनृसिंह ॥४४॥ तवपदविमुखोऽयंमृत्युभक्षःसदानातवपदरसिकोऽसौमृत्युमृत्युः स्वयंस्यात् ॥ निरवधिवपुषात्वंयासिनांतंवरेण्यःपरिहरमृगमांध्यंत्वांप्रपद्येशरण्यम् ॥ ४५ ॥

शब्दप्रतिपाद्यईश्वरोऽपित्वमेवातःस्वात्मभूते नरेस्वात्मानंसंसारसंतापपरिहरणशक्तियुक्तंप्रवेश्यभवतापंपरिहरेत्यर्थः॥ ४३॥ नृषुनराकारेषुपु रेषुसिंहइतिव्युत्पत्तिमभिप्रेत्याह। विविधेति । सिंहशब्दार्थमाह । पुरुषाख्यइति। तथाचैवंभूतनृसिंहपदगीतस्त्वंममेदंजन्ममरणजनितभय मूलमज्ञानंनाशय किमहंनानुभवाम्यपितुनरएवत्वंचनृसिंहएवातोयुक्तमिदमितिभावः॥ ४४॥ किंच सिंहस्यमृगनाशकत्वस्वभावत्वात्त्वम पिनृसिंहास्मदज्ञानलक्षणंमृगंनाशयेत्याह। तवेति। तवचरणविमुखोऽयंनरःसदैवमृत्युग्रासभूतः तद्रसिकोऽसौनरःत्वदभिन्नःमृत्युमृत्युःस्वयं स्यात् मृत्युर्यस्योपसेचनमितिश्रुतेः। निरवधिबाधाभावान्निरवधिस्वरूपेणांतंनकदापिसर्वोत्तमस्त्वंगच्छसि तथाच तथाभूतस्वस्वरूपाप्तयेऽज्ञान

मृगंपरिहर एतदर्थमेवत्वामहंप्रपद्ये यतएतदर्थंशरणार्हस्त्वमेवनान्यइत्याशयेनाह । शरण्यमिति ॥ ४५ ॥ येनस्वयंप्रकाशभूतेन नारसिंहवपुषा नरसंबंधिनोनारस्याज्ञानस्यसिंहोनाशकोज्ञानस्वरूपइत्यतोज्ञानलक्षणसिंहनाश्यंनारमज्ञानमितिदर्शितं तंश्रीनृसिंहमहंप्र पद्यइत्याह । स्थिरचरेति । नृशब्दस्तत्संबंधिपरइत्याशयः । वयुनंज्ञानम् ॥ ४६ ॥ किंचनराभिन्नसिंहविग्रहस्वीकारेणमद्भक्तोमदभिन्नः सन्भ्रमलक्षणासुरनिहंताभवतीतिसूचितमित्याह । तवेति । स्तंभादाविर्भवतात्वयास्वीयव्यापकतापिदर्शितेत्याशयेनाह । विष्णोइति ।

स्थिरचरसुखगर्भंद्वैतबुद्धेर्निदानंकलिमलभरबीजंनारमज्ञानमस्ति ॥ वयुनहरिविनाश्यंयेनचा दर्शिधाम्नानरहरिवपुषातंश्रीनृसिंहंप्रपद्ये ॥ ४६ ॥ तवपदधृतचित्तोनात्वमेवासिसिंहोभ्रमदि तिजनिहंतामोक्षमार्गावलंबी ॥ नरहरिवपुषातेदर्शितंचेतिविष्णोसकलसुखनिधानंत्वांप्रपद्येमहे शम् ॥ ४७ ॥ असुरपतिसुतेनाराधितःप्रेमभक्त्यानिखिलभयनिहंतास्तंभमध्योद्गतस्त्वम् ॥ सपदिनखविभिन्नोदैत्यराजस्त्वयाद्यत्वमसिशरणमीशःपाहिमांघोरतापात् ॥ ४८ ॥ स्तुतिम मलगुणाढ्यांदेवदेवोनिशम्यप्रभवलयनियंताश्रीनृसिंहोऽक्षिगोऽभूत् ॥ यतिवरनिकटेऽसौवह्नि मेवाचचामप्रणतजनदरीगंप्रज्वलंतंसमंतात् ॥ ४९ ॥ ॥ ॥ ॥

तस्मादेवंभूतंसमस्तसुखसागरंकर्तुमकर्तुमन्यथाकर्तुंसमर्थं त्वांविहाय कमन्यंशरणंव्रजामीत्याशयेनाह । सकलेति ॥ ४७ ॥ एवंस्तुत्वा प्रार्थयते । असुरेति । असुरपतिर्हिरण्यकशिपुस्तस्यसुतेनप्रन्हादेनसपदितत्क्षणएवातएवंभूतातिदुर्घटकर्मकरणायासलेशासंस्पृष्टस्त्वमद्य ममापिशरणमसि । तस्मात्समर्थस्त्वंघोरतापान्मांपाहि । आद्येतिसंबोधनंवा ॥ ४८ ॥ स्तुतिमिति । अक्षिगःप्रत्यक्षःप्रणतजनस्यश्री शंकरस्ययादरीकंदरातद्गोचरं प्रज्वलंतंवह्निमेवाचचामभक्षितवान् ॥ ४९ ॥ ॥ ॥ ॥ ॥

यतिमिति । वरदतोवरप्रदान्मत्तःइहाधिकारश्भूमौमत्पदध्यानजन्यंममदर्शनंसफलमेवास्तिनतुनिष्फलम् ॥ ५० ॥ ५१ ॥ उद्दामगंभीरभावं अतिगंभीराभिप्राययुक्तम् ॥ ५२ ॥ वरदेति । ब्रह्मप्राप्तिमार्गस्याद्वैतशास्त्रस्यप्रचारःवेदांतगिरांयःपक्षःसतवसंमतोऽस्तु श्रुतिगणभाष्ये





यतिमसुरनिहंतोवाचभिक्षोवरंत्वंवरयवरदतोमेयत्तवेष्टंवरिष्ठम् ॥ सफलमिहममेदंदर्शनंसज्जनानांश्रुतिमतनिरतानांमत्पदध्यानजन्यम् ॥ ५० ॥ ममयदिदमकारिस्तोत्रमाराध्यभक्त्याविमलपदविशिष्टंनामसंकीर्त्यंयुक्त्या ॥ यतिवरभवतेदंसंपठन्मेप्रियोनाममविमलपदंसप्राप्नुयान्मत्प्रसादात् ॥ ५१ ॥ इतिनरहरिवाक्यंसप्रसादंनिशम्यप्रकृतिपुरुषनाथंसंप्रणम्याथभिक्षुः ॥ विमलमतिरुवाचोद्दामगंभीरभावंस्तुतिविनयविशिष्टंवाक्यमानंदकंदम् ॥ ५२ ॥ वरदभवतुसत्सुब्रह्ममार्गप्रचारःश्रुतिशिखरगिरांतेसंमतोयःसपक्षः ॥ भ्रमशतयुतमार्गोदूषितोयत्रयुक्त्याश्रुतिगणनयभाष्येऽसौतथैवास्त्वसंश्रेत् ॥ ५३ ॥ यतिवरसुवचोभिःस्वात्मदःश्रीनृसिंहोविकसितमुखपद्मःसुप्रसन्नोऽब्रवीत्तम् ॥ यतिवरभवतेदंव्याहृतंतत्तथास्तुत्वमसिचमदभिन्नःशंकरःशंभुराद्यः ॥ ५४ ॥ श्रुतिहृदयमगाधंवेद्म्यहंत्वंचवेत्थप्रभुरिहनतृतीयोवेत्तियंवास्वयंभूः ॥ प्रथितमितिमतंतेवेदमूर्धन्यसिद्धंभवतुसुरसमाजेकिंपुनर्मानुषेषु ॥ ५५ ॥ ॥ ॥



व्यासोक्तशारीरकसूत्राभिधन्यायभाष्येचासावस्मद्दूषितोमार्गोऽसंश्रेत्तर्हितथैवदूषितएवेतःपरमस्तु ॥ ५३ ॥ ५४ ॥ इतीदंतवमतंसुरसमाजे प्रथितंभवतु यतोवेदांतसिद्धम् ॥ ५५ ॥ ॥ ॥ ॥ ॥ ॥

यस्याच्युतस्यब्रह्मरुद्रेंद्राद्याअंशाः ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ तमुदाहरति । ईशानइति । ईशानःसर्वविद्यानामीश्वरःसर्व भूतानामितिमंत्रप्रतिपादितःसदाशिवोहेब्रह्मन्साक्षद्भवानित्यर्थः ॥ ६१ ॥ ननुकामशास्त्रोक्ततत्कलासुत्वामजित्वातद्विज्ञानार्थंयत्नंकृतवं

इतिवचनमुदारंभिक्षुराजंतमुक्त्वानरहरिरखिलात्मापश्यतःशंकरस्य ॥ गिरिशिरसिबभूवादृश्यआद्ये श्वरोंऽशाविधिहरमघवाद्यायस्यसंत्यच्युतस्य ॥ ५६ ॥ ततःशिष्यैःसमागम्यभाष्यकारोमुदायुतः ॥ तत्क्षणेवियदाक्रुत्यमंडनस्यगृहंययौ ॥ ५७ ॥ प्राप्तमाकाशमार्गेणमंडनोवीक्ष्यहर्षतः ॥ उत्थायानर्च विधिवत्सभार्यस्तंयतीश्वरम् ॥ ५८ ॥ अहोभाग्यमहोभाग्यमित्युक्त्वाग्रेगुरोःस्थितः ॥ विनयावनतो भूत्वामंडनोनयभूषणः ॥ ५९ ॥ ततःसरस्वतीभिक्षुवर्यंप्राप्तंसमर्चितम् ॥ दृष्ट्वासावनताभूत्वातंब्रवीद तिहर्षतः ॥ ६० ॥ ईशानःसर्वविद्यानामीश्वरःसर्वदेहिनाम् ॥ ब्रह्मणोऽधिपतिर्ब्रह्मन्भवान्साक्षात्सदा शिवः ॥६१॥ मामजित्यसभार्यांयत्कामशास्त्रकृतेकृतम् ॥ राजदेहप्रवेशादितच्चमर्त्यविडंबनम् ॥६२॥ लब्धंमयोत्तरंत्वत्तःसर्वज्ञाच्चमहेश्वरात् ॥ मयास्त्रीजनशिक्षार्थमित्थंप्रश्नःकृतोमुने ॥ ६३ ॥ स्त्रीणांपर मधर्मोऽयंकायेनमनसागिरा ॥ भर्तृपक्षानुसारित्वंयदस्तीतिविनिश्चितम् ॥ ६४ ॥ त्वयावांविजितौ सत्यमनुज्ञातुंत्वमर्हसि ॥ यास्याम्यहंस्वकंधामेत्युक्तस्तांशंकरोऽब्रवीत् ॥ ६५ ॥ जानामिब्रह्मणोभार्यां साक्षाद्देवींसरस्वतीम् ॥ विश्वस्यानुग्रहार्थंत्वामवतीर्णांमहीतले ॥ ६६ ॥ ॥ ॥ ॥

तंमांकिमित्येवंवदसीतिचेत्तत्राह । मामिति ॥ ६२ ॥ ६३ ॥ स्त्रीणामिति । कोऽसावित्यपेक्षायामाह । कायेनेति ॥ ६४ ॥ ६५ ॥ ६६ ॥

॥ ६७ ॥ ६८ ॥ ६९ ॥ ब्रह्मपार्श्वेगतांतांरूपकेणवर्णयति । विबुधेति । विबुधानांदेवानांपंडितानांचवदनात्मकेरंगेनृत्यस्थले यास्वात्म भावैःस्वीयैरसाधारणैरात्मभावैरद्वितीयात्मविषयकतात्पर्यैरेवस्वीयैरसाधारणहावभावकटाक्षैर्नृत्यति तत्रवाद्याकांक्षायामाह । वेदाएववा द्यानियस्याः । इतरनटीभ्योवैशिष्ट्यमाह । प्रशस्तेति । तस्याअलंकारमाह । सदिति । सतांव्यासादीनामभिनयाअभिमुखाअनुकूलानया न्यायाएवविभूषाअलंक्रियायस्याः श्रुतिशिखराण्युपनिषदस्तेषांरसोब्रह्मानंदःसएवाभाकांतिर्यस्याःसासरस्वती अत्रभूमौमानुष्यविग्रहं



तस्मादस्मत्कृतस्थानेष्वर्च्यमानाफलेप्सुभिः ॥ जनैस्तेभ्यःफलंप्रेष्ठमादिशंतीसदावस ॥६७॥ तथैवा स्तुमुनेसेत्थमुक्त्वाभिक्षुंसरस्वती ॥ अंतर्धानंगतातत्रसभायांमांडनेगृहे ॥ ६८ ॥ जनान्विस्मापयंतीं तांस्तत्रत्यान्स्फारचक्षुषः ॥ ब्रह्मधामगतासाचब्रह्मपार्श्वेस्थिताभवत् ॥ ६९॥ विबुधवदनरंगेवेदवाद्या प्रशस्तासदभिनयविभूषान्नृत्यतिस्वात्मभावैः ॥ श्रुतिशिखररसाभाशारदायात्रभूमौयतिवरविजिता साब्रह्मपार्श्वेजगाम ॥ ७० ॥ यतिरपिनिगमांतस्वात्मतत्त्वंपृथिव्यांनययुतनिजभाष्यैर्भासयन्भास्क रःसन् ॥ हृदयकमलबोधीसज्जनानामपूर्वःकुमतितिमिरघातीसंबभौशीतलाभः॥७१॥ इति श्रीशांकर दि० श्रीमन्मुकुं० सदानं० भिक्षुशरीरप्रवेशादारभ्यशारदांतर्धानपर्यंतनिरूपणंनामाष्टमःसर्गः॥ ८ ॥

गृहीत्वास्थिता यतिवरेणश्रीशंकरेणविजितासतीहिरण्यगर्भपार्श्वेजगाम ॥ ७० ॥ श्रीशंकराचार्यमपूर्वभास्करात्मनावर्णयति । यतिरपी ति । निगमांतप्रतिपाद्यात्मतत्त्वंयुक्तियुतंस्वीयभाष्यैःप्रकाशयन्सन्नपूर्वोभास्करोबभौ । कथंभूतः सज्जनानांहृदयकमलबोधी पुनश्चकुम तिभिर्वादिभिःकृतंतिमिरंघातयितुंशीलमस्यास्तीतिकुमतितिमिरघाती कुमतिलक्षणंतिमिरमितिवा कौभूमौमतितिमिरमितिवा सतूष्णा भोऽयंतुशीतलाभः ॥७१ ॥ इतिश्रीमत्परमहंसपरिव्राजकाचार्यबालगोपालतीर्थश्रीपादशिष्यदत्तवंशावतंसरामकुमारसू०अष्टमःसर्गः ॥८॥

श्रीगणेशायनमः ॥ सदानंदस्वरूपायशंकरायपरात्मने । वेदांतविदधीशायनमोऽनंतचिदात्मने ॥ १ ॥ एवंभिक्षुशरीरप्रवेशादिकमभिधायाचार्यकृतोपदेशादिकंनिरूपयितुमारभते । अथेत्यादिना । अथशारदागमनानंतरं मंडनोऽत्यंतनिर्मलांतःकरणः कृतीनित्यानित्यवस्तुविवेकवान् सर्वभोगाद्विरक्तइहामुत्रार्थफलभोगविरागवान्शांत्यादिसंपद्युक्तोमुमुक्षुर्मोक्षेच्छुः संन्यासेविधिवत्कर्मत्यागेसंकल्पमकृत तन्निमित्तंतद्विषयकंवासंकल्पंकृतवानित्यर्थः। आदिपदेनदांत्युपरतितितिक्षासमाधानश्रद्धानांसंग्रहः। तत्रांतरिंद्रियनिग्रहःशांतिर्बाह्येंद्रियविजयोदांतिर्निगृहीतानामेषामुपरमणमुपरतिः । शीतोष्णादिसहिष्णुतातितिक्षा मनसःश्रवणादौतदनुगुणगुरुशुश्रूषणादौचसमाधिःसमाधानं गुरुश्रुतिस्मृतिवाक्येष्वेतदित्थमेवनान्यथेतिविश्वासःश्रद्धा विवेकादिचतुष्टयस्यसंन्यासपूर्वकतत्त्वज्ञानसाधनत्वंतु परीक्ष्यलोकान्कर्मचितान्ब्राह्मणोनिर्वेदमायान्नास्त्यकृतःकृतेन शांतोदांतउपरतस्तितिक्षुः समाहितःश्रद्धान्वितोभूत्वात्मन्येवात्मानंपश्येत् मुमुक्षुर्वैशरण

अथशांत्यादिसंपन्नोविरक्तोऽखिलभोगतः ॥ संन्यासेऽकृतसंकल्पंमुमुक्षुर्मंडनःकृती ॥ १ ॥
न्यायेनोपार्जितंवित्तंसर्वंयागेयथाविधि ॥ विप्रेभ्यःपात्रभूतेभ्योदत्वासंन्यासमाचरत् ॥ २ ॥

महंप्रपद्ये कश्चिद्धीरःप्रत्यगात्मानमैक्षत् आवृत्तचक्षुरमृतत्वमिच्छन् अथातोब्रह्मजिज्ञासा प्रशांतचित्तायजितेंद्रियायचप्रहीणदोषाययथोक्तकारिणे। गुणान्वितायानुगतायसर्वदाप्रदेयमेतत्सततंमुमुक्षवइत्यादि श्रुतिसूत्राभियुक्तवचनादिभ्योऽवगंतव्यम् ॥ १ ॥ सर्वाधिकारिविशेषणविशिष्टोऽपिमंडनः संन्यस्यश्रवणंकुर्यादित्यादिश्रुत्यासंन्यासिनएवश्रवणाधिकारित्वावगमात्संन्यासस्यप्रतिज्ञातत्वाच्चसंन्यासेसंकल्पमकृतेत्युक्तम् । अथविधिनासंन्यासमकरोदित्याह । न्यायेनेति । यथाविधितद्धैकेप्राजापत्यामेवेष्टिंकुर्वंति प्राजापत्यांनिरूप्येष्टिंसर्ववेदसदक्षिणाम् । आत्मन्यग्नीन्समारोप्यब्राह्मणःप्रव्रजेद्गृहादित्यादिश्रुतिस्मृत्युक्तविधिनान्यायेन स्वधर्मेणोपार्जितंसर्वंधनं यागेपात्रभूतेभ्योविप्रेभ्योदत्वासंन्यासंकृतवान् ॥ २ ॥ ॥ ॥ ॥ ॥ ॥ ॥

तद्विज्ञानार्थंसगुरुमेवाभिगच्छेत् समित्पाणिःश्रोत्रियंब्रह्मनिष्ठं यश्चश्रोत्रियोऽवृजिनोऽकामहतः आचार्यवान्पुरुषोवेदेत्यादिश्रुत्योक्ता धिकारिणा जन्ममरणरागद्वेषादिसंसारानलसंतप्तेनातिप्रदीप्तशिरसाजलराशेरिवोपायनपाणिना वेदांतार्थपारगस्यौपनिषदब्रह्मात्मविज्ञा नपरिपूर्णस्य यथोक्तकारितयानिष्पापस्याब्रह्मलोकानंदादर्वाचीनेष्वानंदेषुवितृष्णस्य। गुरोरुपगम्यानुवृत्तिरवश्यंकर्तव्येत्याशयेनाह । शंकराचार्यमिति । देशिकाग्र्यंतत्त्वोपदेष्टृषुमुख्ययतीनामीश्वरंश्रीशंकरं ब्रह्मानंदकरत्वादन्वर्थसंज्ञमाश्रित्योपसृत्यतदनंतरं समंडनस्तत्त्वम सीत्येवंवाक्यमात्रंविधिवच्छात्रविहितानुवृत्त्यादिपूर्वकमश्टणोत्श्रुतवान्ततइत्यस्योत्तरेणवासंबंधः ॥ ३ ॥ तत्त्वमिति । सविद्वानुपस न्नायप्राहेत्यादिश्रुत्योक्ताधिकारीकारुण्यसागरेणगुरुणासम्यगुपदेष्टव्यइतिबोधयन्गुरुवाक्यमवतारयति । ततोवाक्यमात्रश्रवणानंतरं तत्त्वं

**शंकराचार्यमाश्रित्यदेशिकाग्र्यंयतीश्वरम् ॥ वाक्यंतत्त्वमसीत्येवंविधिवत्सोऽश्टणोत्ततः ॥ ३ ॥**
**तत्त्वंपदार्थशुद्ध्यर्थंगुरुःशिष्यंवचोऽब्रवीत् ॥ वाक्येतत्त्वमसीत्यत्रत्वंपदार्थंविवेचय ॥ ४ ॥ नत्वंदे**
**होऽसिदृश्यत्वाद्रूपजात्यादिमत्त्वतः ॥ भौतिकत्वादशुद्धत्वादनित्यत्वाद्यथाघटः ॥ ५ ॥**

पदार्थयोःशुद्ध्यर्थंशिष्यंमंडनंप्रतिगुरुःश्रीशंकरोवचनमब्रवीत्तदुदाहरति । तत्त्वमसीति । अस्मिन्वाक्येत्वंपदार्थंविवेचय देहादिषुत्वंपदार्थो ऽयमयंनेतीतिविवेचनंकुरु ॥ ४ ॥ कथमित्यपेक्षायांदेहादेरात्मानंविवेचयन्नादौसवाएषपुरुषोऽन्नरसमयइत्यादिश्रुत्या दह्यमानेगृहादौहंतृषु वोपस्थितेषुपुत्रादिकंपरित्यज्य पलायनोपलभ्याद्देहस्यपरमप्रेमगोचरतया स्थूलोऽहंकृशोऽहमित्याद्यनुभवालंबनतयाच देहएवात्मेतिचा र्वाकेषुकेचित्तान्निराकरोति। नत्वंदेहोऽसीति । तत्रहेतवःदृश्यत्वाद्वृत्तिप्रतिफलितचैतन्यभास्यत्वाद्रूपरसादिमत्त्वान्मनुष्यत्वादिजातिमत्त्वा त् भूतविकारत्वादशुद्धत्वात्कालावच्छिन्नत्वाच्च तत्रदृष्टांतो यथाटघइति । कश्चिद्धीरःप्रत्यगात्मानमैक्षत् अस्थूलमनण्वित्यादिप्रबलश्रुतेरुक्त श्रुतेर्मुंजादिषीकावत्सर्वांतरब्रह्मपुच्छशब्दप्रतिपाद्यात्मप्रतिपत्त्युपायार्थत्वेनोपन्यस्तत्वात्स्वार्थपरत्वाभावात्तीर्थराजादौदेहस्याप्यतिदुःखदस्य

त्यागोपलब्धेरुक्तानुभवस्यभ्रमेणाप्युपपत्तेर्देहोनात्मेत्यर्थः । रूपजात्यादिमत्त्वंदृश्यत्वेवाहेतुः ॥ ५ ॥ तर्हिकोसावात्मेत्यपेक्षायां अदृष्टमव्यवहार्यमग्राह्यं । अस्थूलमनण्वह्रस्वं । अशब्दमस्पर्शमरूपमव्ययं अगोत्रं नजायतेम्रियतेवा निरवद्यंनिरंजनं एतदेवाक्षरंज्ञात्वा कृत्स्नःप्रज्ञानघनएवेत्याद्यनंतवेदांतप्रतिपादितइत्याशयेनाह । अदृश्यइति । तथाचात्मनोदृग्रूपत्वे दृश्यस्यदेहस्यानात्मत्वमेवनिश्चीयते । नहिदृश्यस्यदृग्रूपत्वंदृशोवादृश्यात्मत्वंसंभवति । विरोधादेवेत्याशयेनाह दृग्रूपइति । नहिदृश्योघटोदृग्चेतनंभवेदेतद्वादृश्योघटोभवेदित्यर्थः ॥ ६ ॥ एवंदेहादात्मानंविविच्येंद्रियेभ्यस्तंविवेचयन्प्राणाःप्रजापतिंसमेत्यब्रूयुरित्यादिश्रुतेः स्वापादाविंद्रियाणामुपरमे चैतन्यकार्यस्यदेहचलनस्यानुपलंभात्तदनुपरमेच तदुपलंभादित्यन्वयव्यतिरेकयुक्तेः पश्यामिशृणोमीत्याद्यनुभवाच्चेंद्रियाणामेवात्मत्वमित्यपरेचार्वाकास्तान्निराकुर्व

अदृश्योरूपहीनस्त्वंजातिहीनोह्यभौतिकः ॥ शुद्धोनित्योऽसिदृग्रूपोनघटोघटदृग्भवेत् ॥ ६ ॥
नभवानिंद्रियाण्येषांकरणत्वेनदात्रवत् ॥ प्रेरकस्त्वंपृथक्तेभ्योनकर्ताकरणंभवेत् ॥ ७ ॥ नानै
तान्येकरूपस्त्वंभिन्नस्तेभ्यस्ततोमतः ॥ नचैकेंद्रियरूपस्त्वंसर्वत्राहंप्रतीतितः ॥ ८ ॥

न्नाह । नभवानिंद्रियाणीति । तत्रहेतुरेषामिंद्रियाणांकरणत्वात्साधनत्वात् । तत्रदृष्टांतः । दात्रवदिति । उदाहरणापेक्षस्तथेतिउपसंहारोनतथेतिवासाध्यस्योपनयइत्युक्तंन्यायावयवमुपनयमाह कर्तादेवदत्तःकरणंदात्रादिनभवति हेत्वपदेशात्प्रतिज्ञायाःपुनर्वचनंनिगमनमित्युक्तं पंचमं न्यायावयवंदर्शयति तस्मात्प्रेरकःकर्तात्वं तेभ्यः करणेभ्यइंद्रियेभ्यःपृथक्भिन्नइत्यर्थः ॥ ७ ॥ किंचेंद्रियाणांनानात्वादेकरूपस्त्वंतेभ्योभिन्नइत्याह । नानेति । ततस्तस्मान्मतोविद्वद्भिरभिमतः तत्रतेष्वेकतमेंद्रियरूपउततेषांसमुदायरूपइतिविकल्प्याद्यंप्रत्याह । नचेति । तत्रहेतुःसर्वेष्विंद्रियेष्वहंशृणोमिस्पृशामिपश्यामीत्याद्यहंप्रत्ययात्तथाचैकस्यैवात्मत्वेपरेंद्रियेष्वहंप्रतीतिर्बाधकेत्यर्थः ॥ ८ ॥ ॥

नापिद्वितीयइत्याह । नेति । तेषामिंद्रियाणांसमुदायोऽपित्वंनैवासि तत्रहेतुर्हियस्मात्तेषामन्यतमस्यविनाशेप्यात्मबुद्धिस्तावदस्ति अन्यथातत्समुदायस्यात्मत्वेसात्मधीर्नचस्यादेकनाशेऽपिसमुदायस्यनष्टत्वात् । ननुतत्तदिंद्रियविशिष्टसमुदायनाशेऽपिसमुदायांतरोत्पत्तेराव श्यकत्वात्सएवात्मेतिचेन्नात्मनोऽनित्यत्वप्रसंगात् । नन्विंद्रियाणांनाशएवनास्तिकिंतुसुषुप्त्यादाविवतिरोधानमात्रमन्यथांधस्यजन्मांतरेऽपिसनेत्रतानस्यादितिचेत्सत्यं तथाप्येकेंद्रियतिरोधानेनसमुदायस्यापितिरोहिततयात्मनोऽपितथात्वेनात्मधीर्नस्यादेवेतिभावः ॥ ९ ॥ नन्वेवंतर्हिप्रत्येकमिंद्रियाणामात्मत्वमस्त्वितिचेत्तत्राह । प्रत्येकमिति । प्रत्येकमपितानींद्रियाण्यात्मानैव तत्रतेषांप्रत्येकमात्मत्वाभावेनयं युक्तिंशृणु नानास्वामिकोऽयंदेहोनश्येद्यतोभिन्नानि मयापूर्वाशांप्रतिगंतव्यं मयादक्षिणाशांप्रतीत्येवमादिरूपाणिमतानियेषांतेषामाश्रयः

नतेषांसमुदायोऽसितेषामन्यतमस्यच ॥ विनाशेऽप्यात्मधीस्तावदस्तिस्यात्सानचान्यथा ॥९॥
प्रत्येकमपितान्यात्मानैवतत्रनयंशृणु ॥ नानास्वामिकदेहोऽयंनश्येद्भिन्नमताश्रयः ॥ १० ॥
नानास्वामिमतंनैकंविरुद्धविषयत्वतः ॥ स्वाम्यैक्येतुव्यवस्थास्यादेकपार्थिवदेशवत् ॥ ११ ॥

॥ १० ॥ ननु नानास्वामिनामपिमतमेकमेवभविष्यतीत्याशंक्याह । नानेति । नानाविधानांस्वामिनांमतमेकंनभवति तत्रहेतुस्तन्मतानांविरुद्धविषयविषयत्वात्तथाचैवंसतिशरीरस्योन्मथनमेवभवेदित्यर्थः । स्वाम्यैक्येतुएकपार्थिवदेशवद्व्यवस्थास्यादेवंचैषांवास्यादित्वत्करणत्वेनात्मत्वायोगात्करणकर्तृत्वयोर्विरुद्धत्वादेकस्यात्मत्वेसर्वत्राहंप्रतीत्यनुपपत्तेस्तत्समुदायस्यतथात्वेत्वेकनाशेऽप्यात्मनाशापत्तेः । बहूनामात्मत्वेतुविरुद्धाभिप्रायतयादेहपातप्रसंगात् । योऽहमद्राक्षंसःसंस्पृशामीत्यात्मैक्यबाधापत्तेश्चप्राणसंवादस्याभिमानीदेवताविषयत्वेनेंद्रियाणामात्मत्वासाधकत्वादुक्तानुभवस्यभ्रमरूपत्वात् । अचक्षुरश्रोत्रंतदपाणिपादमित्यादिश्रुत्या तदतिरिक्तात्मप्रतिपादनाच्चेंद्रियाण्यात्मा नभवंतीतिसमुदितोऽर्थः ॥ ११ ॥ ॥ ॥ ॥ ॥ ॥ ॥

एवमिंद्रियेभ्यआत्मानंविविच्य प्राणमनोभ्यांतं विवेचयन्अन्योंऽतरआत्माप्राणमय इतिश्रुतेर्जाग्रदाद्यवस्थास्वनुस्यूतत्वात्प्राणस्यस्वस्थितिनिमित्तान्नाद्यसत्त्वेनकृशीभावेसति विद्यमानानामपींद्रियाणां स्वस्वविषयेप्रवृत्त्यनुपलंभात्तत्सत्त्वेनतस्मिन्पुष्टेतदुपलंभादहंक्षुत्पिपासावानित्यनुभवोपलब्धेःप्राणआत्मेति । केचिदन्योंऽतरआत्मामनोमयइतिश्रुतेर्मनसिविलीनेप्राणादेरभावाद्दृतिवच्छ्वासोच्छ्वासदर्शनस्यद्रष्टृदृष्ट्यध्यारोपितत्वादहंसंकल्पविकल्पवानित्याद्यनुभवाच्च मनआत्मेत्यपरेतान्निराचष्टे । नत्वमिति नत्वंप्राणोनापिमनस्तत्रहेतुरेतयोःप्राणमनसोर्जडत्वादेवघटादिवत् । किंचप्राणस्यक्षुत्तृड्भ्यांपीडितत्वान्ममायंप्राणइतिभेदप्रतीतेश्च प्राणोनात्मेत्याह । क्षुत्तृड्भ्यामिति ॥ १२ ॥ एवंमनसोऽप्यहमास्यादादात्मनोममनोन्यत्रगतमित्यन्यत्वस्यानुभवात्तदप्यात्मानभवतीत्याह । गतमिति । तस्माद्घटद्रष्टायथा

नत्वंप्राणोमनोनापिजडत्वोदवैचतयोः ॥ क्षुत्तृड्भ्यांपीडितःप्राणोममायंचेतिभेदतः ॥ १२ ॥
गतमन्यत्रमेचित्तमित्यन्यत्वानुभूतितः ॥ तयोर्द्रष्टापृथक्ताभ्यांघटद्रष्टाघटाद्यथा ॥ १३ ॥
सुप्तौलीनासतीबोधेदेहंव्याप्नोतियाखिलं ॥ चिच्छाययापिसंबद्धानसाबुद्धिर्भवान्द्विज ॥ १४ ॥
नानारूपवतीबोधेसुप्तौलीनाहिसाचला ॥ यतःसदैकरूपस्त्वंतदानंदमयात्पृथक् ॥ १५ ॥

घटादन्यस्तथाप्राणमनसोर्द्रष्टाताभ्यांव्यतिरिक्तएवेत्यर्थः ॥ १३ ॥ एवंप्राणमनोभ्यामात्मानंविविच्य बुद्धेस्तंविवेचयन् विज्ञानंयज्ञंतनुते अन्योंऽतरआत्माविज्ञानमयइत्यादिश्रुतेरहंकर्ताभोक्तेत्यनुभवाच्च बुद्धिरात्मेतिबौद्धाजगुस्तान्निराकुर्वन्नाह । सुप्ताविति । याचिच्छायया चिदाभासेनसंबद्धाउपेतासुषुप्तिकालेविलीनासती बोधेजागरणकालेसर्वंशरीरंव्याप्नोतिव्याप्यवर्तते साबुद्धिरपिहेद्विजभवानात्मानभवति ॥ १४ ॥ कुतइत्यपेक्षायामाह । नानेति । हियतःसाबुद्धिःनानारूपवतीसुप्तौलीनाचलाच । तथाचतस्याःप्रबोधेनानारूपवत्वात्सुप्तौविलीनत्वेनविलयाद्यवस्थावत्वाच्चलत्वाच्चसाभवान्नेत्यर्थः । तस्मादुक्तानुभवस्यभ्रमत्वेनाप्युपपत्तेरात्मसाधकत्वायोगात् अन्योंऽतरात्मानंदम

य इत्यतिरिक्तात्मश्रुतेरुक्तश्रुतेस्तत्रतात्पर्याभावाच्च सदैकरूपस्तस्याःबुद्धेःप्रकाशकस्त्वंतस्याःसकाशाद्विलक्षणइत्यर्थः। एवंबुद्धेरात्मानंविवि च्यानंदमयात्तंविवेचयन् तार्किकप्राभाकरभाट्टमतानिनिराचष्टे। यतइति। यतःसदैकरूपस्त्वंतस्मादानंदमयात्त्वंपृथक्तत्रान्योऽतरआत्मेति श्रुतेर्बुद्ध्यादीनामज्ञानेलयोपलब्धेरहमज्ञोऽहंजानामीतिप्रतीतेश्च। अज्ञानंक्षणिकविज्ञानादन्यत्तदधिकरणंद्रव्यरूपमात्मतत्वमित्याद्ययोर्मतं प्रज्ञानघनएवानंदमयइतिश्रुतेः सुखमहमस्वाप्संनकिंचिदवेदिषमित्युत्थितस्य परामर्शोपलब्धेः सुषुप्तौप्रकाशाप्रकाशसद्भावकल्पनोपपत्ते र्मामहंनजानामीत्यनुभवाच्चाज्ञानसंवलितचैतन्यं ज्ञानाज्ञानरूपमात्मेति तृतीय एतेषांत्रयाणामपिमतमसंगतं यतःपुण्यकर्मफलानुभवका ले याकाचिद्बुद्धिवृत्तिरंतर्मुखासती आत्मात्मिकाऽऽनंदप्रतिबिंबंभजते तदुपरमेसतिनिद्रारूपेणविलीनाभवति सावृत्तिरानंदमयइत्युच्यते सआत्मानभवति तस्यसदैकरूपत्वादानंदमयस्यत्वभ्रादिवत्कादाचित्कत्वादित्यर्थः। तथाचब्रह्मपुच्छंप्रतिष्ठेत्यानंदमयकोशाधिष्ठानस्यत

**सुप्तौदेहाद्यभावेऽपिसाक्षीतेषांभवान्मतः॥ अनुभूतिस्वरूपत्वान्नान्यस्तेऽस्यास्तिभासकः॥१६॥**

त्साक्षिणोतिरिक्तस्यप्रतिपादनेनोक्तश्रुतेरानंदमयस्यात्मत्वेतात्पर्यायोगादज्ञानस्यज्ञाननिवर्त्यत्वाज्जडत्वात्समाधावप्रतीयमानत्वादुक्तानुभ वस्यभ्रांतिमूलकत्वात्प्रकाश्यप्रकाशकयोः परस्परविरुद्धत्वादुक्तमताभिमतआत्मानभवति किंतूक्तश्रुतेःसच्चिदानंदरूपस्यैवात्मत्वोपपत्तेरहं ब्रह्मेतिविद्वदनुभवाच्च तद्भासकोनित्यशुद्धबुद्धमुक्तस्वभावः प्रत्यक्चेतनस्त्वमितिभावः॥१५॥ ननु असद्वाइदमग्रआसीदित्यादिश्रुते र्देहादेरनात्मत्वात्तद्व्यतिरिक्तस्यात्मनोनुपलब्धेः सुषुप्तौसर्वाभावादहंसुषुप्तौनासमित्युत्थितस्यस्वाभावपरामर्शविषयानुभवाच्च शून्यमात्मे त्याशंकांनिराकुर्वन्नाह। सुप्ताविति। सुषुप्तौदेहाद्यभावेपितेषांदेहादीनांसाक्षीभवान्मतः। तथाचास्तीत्येवोपलब्धव्यइत्यादिश्रुतेरुक्तानुभव स्यभ्रमेणाप्युपपत्तेर्निःसाक्षिकनाशासिद्धेस्तत्सत्त्वेतस्यैवात्मत्वावगमादुक्तश्रुतेःसमाकर्षादितिसूत्रेण नामरूपादिरहितसदादिलक्षणात्मप रत्वनिर्धारणाच्च देहादिसाक्ष्येवभवाञ्छ्रुत्यादावभिमतइत्यर्थः। एतेनशून्यवादिनोमाध्यमिकाःपराकृताः। एवंदेहादिविनिर्मुक्तंसाक्षिस्व

रूपंप्रसाध्य भासकानामपिबुद्ध्यादीनांयथाभास्यत्वंतथात्मनोऽपिप्राप्तंतत्वंनिराकरोति । अनुभूतिरिति । यत्साक्षादपरोक्षाद्ब्रह्मेतिश्रु
तेरस्यसाक्षादपरोक्षस्यभासकोऽन्योनास्ति तत्रहेतुरनुभूतिस्वरूपत्वात् । अनुभवस्वरूपस्यानुभाव्यत्वंनास्तीत्यर्थः । विज्ञानमानंदंब्रह्म अ
यमात्माब्रह्म सर्वानुभूरित्यादिश्रुत्यानुभवरूपत्वमात्मनोवगंतव्यं विवादास्पदोऽनुभवः स्वसमानाश्रयस्वसमानकालस्वविषयानुभवाभाव
निबंधनव्यवहाराभाववान्नभवति अनुभवत्वादनंतरव्यवह्रियमाणानुभववदित्यनुमानेनानुभवस्यस्वयंप्रकाशतासिद्धा तत्स्वरूपस्यात्मन
स्तत्तायांविवादाभावादितिभावः ॥ १६ ॥ किंच येनेदंसर्वंविजानाति तंकेनविजानीयात् । विज्ञातारमरेकेनविजानीयात् तमेवभांतमनु
भातिसर्वं तस्यभासासर्वमिदंविभातीत्यादिश्रुतयोऽप्यात्मनःस्वप्रकाशत्वंबोधयंतीत्याह । विश्वमिति । आत्मानिखिलंप्रपंचमनुभवति ते

विश्वमात्मानुभवतितेनासौनानुभूयते ॥ विश्वंप्रकाशयत्यात्मातेनासौनप्रकाश्यते ॥ १७ ॥
प्रमाणंबोधयंतंतंबोधंमानेनयेजनाः ॥ बुभुत्संतेतएधोभिर्दग्धुंवांछंतिपावकम् ॥ १८ ॥

नानुभाव्यत्वाज्जडेनविश्वेनासावात्मानानुभूयते । तथाविश्वमात्माप्रकाशयति तेनविश्वेनप्रकाश्येनात्मानप्रकाश्यते नतद्भासयतेसूर्योनश
शांकोनपावकइत्यादिस्मृतेश्च ॥ १७ ॥ ननु मनसैवानुद्रष्टव्यमित्यादिश्रुत्या मनसात्मानुभूयतेइत्याशंक्याह । प्रमाणमिति । प्रमाणंघटा
दिप्रमाकरणंमनोबोधयंतंबोधस्वरूपंतमात्मानं मानेनमनसायेजनाबुभुत्संतेज्ञातुमिच्छति तेकाष्ठैर्वह्निंदग्धुमिच्छंति तथाचात्मप्रकाश्यत्वा
न्मनोनात्मप्रकाशकं यथादाह्यत्वादेधांसिपावकदाहकानिनभवंतितद्वत् । तथाचश्रुतिः । यतोवाचोनिवर्तंतेअप्राप्यमनसासह यन्मनसा
नमनुते येनाहुर्मनोमतमित्याद्याः । उदाहृतश्रुतेस्त्वावरणभंगोमनसासंपद्यतइत्यत्रतात्पर्यम् ॥ १८ ॥ ॥ ॥

नन्वात्मनईदृक्त्वादिनाकेनचिद्रूपेणवैशिष्ट्यमस्ति नवा आद्ये तेनैवरूपेणवेद्यत्वापातः द्वितीयेशून्यतापत्तिरित्याशंकानिरासायाह। नेति । यदीदृशमक्षाणांविषयोनभवति तथायत्तादृशंपरोक्षंनभवति तद्ब्रह्मत्वमितिसंबंधः। तथाच प्रत्यक्षस्यैवघटादेरीदृक्शद्ववाच्यत्वदर्शनात्परोक्षस्यैवधर्माधर्मादेस्तादृक्शद्ववाच्यत्वोपलंभाद्द्रष्टुरात्मनइंद्रियजन्यज्ञानविषयत्वाभावेनस्वत्वेनचतथात्वंनसंभवतीतिभावः। तर्हिंशून्यमितिद्वितीयंपक्षंतन्निराचष्टे ।स्वप्रकाशमिति। करणजन्यज्ञानगोचरत्वाभावेऽपिहियस्मादपरोक्षंतस्मात्स्वप्रकाशमेवंभूतंयद्ब्रह्मतत्त्वंनतुदेहादिदृश्यरूपोऽसियतस्त्वंसर्वदृक्स्वप्रकाशःसन्सर्वावभासकस्तथाचसंवेदितास्वातिरिक्तसंविदधीनप्रकाशोनभवसि तत्कर्मतामंतरेणापरोक्षत्वात्संवेदनवदित्यनुमानेनाप्यात्मनःस्वप्रकाशतासिद्धिः संवेदितास्वप्रकाशःसंवित्कर्मतामंतरेणापरोक्षत्वात्संवेदनवदितिवानुमानप्रयोगोद्रष्टव्यः । आत्मनःसंवित्कर्मत्वेकर्मकर्तृभावविरोधाद्विशेषणासिद्धोहेतुरितिशंकानकर्तव्या कर्मत्वंहिपरसमवेतक्रियाफलशालित्वं ननु

नेदृशंतादृशंयत्स्वप्रकाशंह्यपरोक्षकम् ॥ तद्ब्रह्मत्वंनदेहादिदृश्यरूपोऽसिसर्वदृक् ॥ १९ ॥ सत्यंज्ञानमनंतंचेत्यस्तितेब्रह्मलक्षणम् ॥ सत्यत्वंबाधशून्यत्वमस्यस्याद्बाधसाक्षिणः ॥ २० ॥

स्वरूपविशिष्टरूपाभ्यांकर्तृत्वकर्मत्वयोःसंभवादविरोधइतिचेन्न क्रियायामप्येकस्यैवतथात्वापातात् नापिदृष्टांतेसाधनवैकल्यं संवेदनस्यसंवेदनकर्मत्वेतस्यापितथात्वावश्यकत्वेऽनवस्थापत्तेः। एतेनघटज्ञानेनघटोभासतेघटज्ञानमनुव्यवसायेनेतिन्यायमतंप्रत्युक्तम् ॥ १९ ॥ नन्वात्मनःस्वप्रकाशत्वेसिद्धेऽपि ब्रह्मलक्षणलक्षितत्वाभावाद्ब्रह्मताकथंसिद्ध्यतीत्याशंक्य तल्लक्षणमात्मनिवर्ततइत्याह । सत्यंज्ञानमनंतंचेति । ब्रह्मणःस्वरूपलक्षणंतवात्मनोऽस्ति च आनंदसमुच्चयार्थः । आनंदादयःप्रधानस्येतिसूत्रेण सत्यंज्ञानमनंतंब्रह्मेतितैत्तिरीयश्रुतावानंदस्य विज्ञानमानंदमितिबृहदारण्यकश्रुतौ सत्यादेरुपसंहारस्यबोधितत्वात् । तथाचसत्यज्ञानानंतानंदात्मत्वंब्रह्मणःस्वरूपं असद्व्यावर्तकत्वात्स्वरूपलक्षणंपर्यवसन्नं पृथिव्याःपृथिवीत्वं यथा लक्ष्यस्यबाध्यत्वजडत्वपरिछिन्नत्वदुःखत्वानांव्यावर्त्तकानिविशेषणानि । नन्वरवं

डैकरसेब्रह्मणि लक्ष्यत्वं सत्यादेर्लक्षणत्वंचासंगतं लक्ष्यलक्षणभावस्यभेदगर्भत्वादितिचेन्न काल्पनिकभेदावगमेनतदुपपत्तेः तत्रसत्यत्वंकि मित्याकांक्षायामाह । बाधेति । बाधशून्यत्वंसत्यत्वमस्यप्रत्यगभिन्नस्यब्रह्मणोब्रह्माभिन्नस्यप्रतीचोवास्यात् । नन्वस्यैतत्कुतइत्याकांक्षायामाह । बाधसाक्षिणइति । बाधस्यसुषुप्तिमूर्छासमाधिप्रलयेषुस्थूलसूक्ष्मादिलक्षणस्यप्रपंचस्याविद्यमानतायाः साक्षिणस्तथाचास्यापिबाधश्चेत्स ससाक्षिकोवास्यादसाक्षिकोवा । नाद्यः साक्षिणोभावान्नद्वितीयोऽतिप्रसंगादितिभावः ॥ २० ॥ एवंबाधयोग्यतात्मनोनास्तीत्युक्तं त त्रकीदृशंबाधयोग्यंकीदृशंनेतिविभज्यदर्शयति । इदंत्वेनैवेति । इदंत्वेनयद्भातितत्चसर्वंनिषिध्यते बाधितुंशक्यतएव तथाचेदंत्वेनभानमेव बाधयोग्यतापादकमित्यर्थः । अनिदंप्रत्यक्त्वेनेदंतयावगंतुमयोग्यंसाक्षितत्वमबाध्यंबाधितुमशक्यं तथाचप्रत्यक्त्वेनभानंबाधायोग्यतासंपा दकमित्यर्थः । एवंसत्यस्वरूपमुक्त्वाज्ञानस्वरूपमाह । ज्ञानमिति ॥ २१ ॥ अथानंतपदार्थमाह । देशेति । देशकालवस्तुकृतपरिच्छेदशून्यत्व

**इदंत्वेनैवयद्भातिसर्वंतच्चनिषिध्यते ॥ अबाध्यंतत्त्वमनिदंज्ञानंजडविलक्षणम् ॥ २१ ॥ देशका लाद्यवच्छेदशून्यतानंततामता ॥ व्यापित्वादस्यनित्यत्वात्सार्वात्म्यात्तन्मृषात्वतः ॥ २२ ॥**

मनंतत्वं तत्रात्यंताभावप्रतियोगित्वंदेशकृतपरिच्छिन्नत्वंध्वंसाभावप्रतियोगित्वंकालकृतपरिच्छिन्नत्वमन्योन्याभावप्रतियोगित्वं वस्तुकृतप रिच्छिन्नत्वंस्वान्यूनसत्ताकत्रिविधपरिच्छेदाभावेक्रमेणहेतुत्रयमाह । व्यापित्वादित्यादिना । अस्यात्मनोव्यापित्वादिति तत्रव्यापित्वंविभु त्वं नित्यत्वंकालानवच्छिन्नत्वं नित्यंविभुंसर्वगतंसुसूक्ष्मं आकाशवत्सर्वगतश्चनित्यः नित्योनित्यानांचेतनश्चेतनानां इदंसर्वंयदयमात्मा सर्वंखल्विदंब्रह्मेत्यादिश्रुतिषु नित्यत्वादिप्रतिपादनात् नकेवलंश्रुतिषुव्यापित्वाभिधानादेवब्रह्मणउक्तपरिच्छेदशून्यत्वमपितुयुक्त्यापीत्या शयेनाह । तन्मृषात्वतइति । तस्यदेशादेर्मृषात्वान्मिथ्यात्वात् । तथाच । गंधर्वनगरादिभिराकाशस्येवकल्पितैर्देशादिभिःकृतःपरिच्छेदोब्रह्म णिवास्तवोनसंभवतीत्यर्थः । तदेतत्सत्यमात्माब्रह्मैवब्रह्मात्मैवात्रह्येवंनविचिकित्स्यमित्योमिति सत्यमात्मैवनृसिंहोदेवोब्रह्मभवति अय

मात्माब्रह्मेत्यादिनिगमांतैरात्मनोब्रह्माभेदाभिधानात्तस्मिन्नपिसत्यत्वादिकंसिद्धमितिभावः ॥ २२ ॥ ननुचेतनयोर्जीवेश्वरयोर्जडप्रपंचवद्ब्रह्मणिकल्पितत्वाभावात्तत्कृतस्यपरिच्छेदस्यावश्यंभावादुक्तमनंतत्वमसिद्धमित्याशंक्य तयोरप्यौपाधिकत्वेनापारमार्थिकत्वात्वास्तवपरिच्छेदहेतुत्वंनसंभवतीत्यभिप्रायेणाह । सतीति । देहाद्युपाधावन्नमयादिकोशलक्षणोपाधौसति ब्रह्मैवसत्यादिलक्षणंजीवःस्याज्जीवइतिव्यवहारगोचरतांप्राप्नुयादादिपदेनप्राणमयमनोमयविज्ञानमयानंदमयाः कोशागृह्यंते । तथासत्वासत्वाभ्यामनिर्वाच्याचिच्छायाविष्टासर्वेषामंतर्यामिब्राह्मणोक्तानांपृथिव्यादीनांनियमनकर्त्रीमायादिशब्दैर्व्यवह्रीयमाणा शक्तिस्तदुपाधित्वाद्ब्रह्मैवतस्यजीवस्यनियामकःसन्नीश्वरइतिव्यवहारयोग्यतांप्राप्नुयात् । तथाचसत्यादिलक्षणस्यब्रह्मणएवोक्तोपाधिकृतंजीवत्वमीश्वरत्वंचातस्तयोरपारमार्थिकत्वेनजडवद्वास्तवपरिच्छेदकत्वाभावइतिभावः । नन्वेकस्यैवविरुद्धधर्मयोगित्वंकथमितिचेदेकस्यदेवदत्तस्यमातरंप्रतिपुत्रत्वंभार्यांप्रतिभर्तृत्वं

सतिदेहाद्युपाधौस्याज्जीवस्तस्यनियामकः ॥ ईश्वरःशक्त्युपाधित्वाद्द्वयोर्बाधेस्वयंप्रभः ॥ २३ ॥
अपेक्ष्यतेऽखिलैर्मानैर्नयन्मानान्यपेक्षते ॥ वेदवाक्यंप्रमाणंतुब्रह्मात्मावगतौमतम् ॥ २४ ॥

यथेतिसंतोष्टव्यम् । फलितमाह । द्वयोरिति । यथाघटमठयोर्बाधेमहाकाशमेवावशिष्यते तथाद्वयोरुपाध्योस्तत्वज्ञानेनबाधे स्वयंप्रकाशःसत्यानंतानंदात्मापरमात्मैवावशिष्यतइत्यर्थः ॥ २३ ॥ तस्यस्वयंप्रभत्वेहेत्वंतरमाह । अपेक्ष्यतइति । यद्यस्माद्ब्रह्माऽखिलैःप्रमाणैरपेक्ष्यते स्वयंसर्वाणिप्रमाणानिनापेक्षते तत्रप्रमाकरणंप्रमाणं प्रमात्वंचानधिगताबाधितार्थविषयज्ञानत्वंप्रत्यक्षानुमानोपमानशब्दार्थापत्त्यनुपलब्धिसंज्ञानिषट्प्रमाणानि तेषामात्मापेक्षास्ति तस्यैवप्रमातृत्वात् । प्रमातृत्वंचप्रमांप्रतिकर्तृत्वं तच्च स्वातंत्र्यंतच्चेतरकारकाप्रयोज्यत्वेसति सकलकारकप्रयोक्तृत्वं किंचयथा रविप्रकाशितप्रकाशकेनचक्षुषारूपप्रकाशनेसूर्योऽपेक्ष्यते तथात्मप्रकाशितप्रकाशकैःप्रत्यक्षादिभिरपिस्वविषयप्रकाशने स अपेक्ष्यते अधिष्ठानसत्तयालब्धसत्ताकानांघटादीनां प्रमाणविषयत्वात्स्वस्याप्यधिष्ठानसत्ताधीनसत्ताक

त्वाच्चेतिभावः । आत्मातुप्रमाणानि नापेक्षते तस्यतत्प्रवृत्तेःपूर्वमेवसिद्धत्वाद्रूपादिहीनत्वेनव्याप्तिग्रहाभावेनसदृशस्यान्यस्यानिरूपणेन प्रवृत्तिनिमित्तासत्वेनतेनविनानुपपद्यमानस्यविरहेणाभावत्वाभावेनप्रत्यक्षादिभिरपरिच्छेद्यत्वाच्च नन्वेवंतर्हि तंत्वौपनिषदंपुरुषंपृच्छा मीतिश्रुत्योपनिषत्प्रमाणगम्यत्वमात्मनउक्तंकथंसंगतमितिचेत्तत्राह। वेदेति। वेदवाक्यंतु ब्रह्मात्माऽवगतौनित्यशुद्धबुद्धमुक्तस्वभावब्रह्माभि न्नात्मनःसाक्षात्कारेप्रमाणंमतं प्रमा[illegible]स्याज्ञातज्ञापकत्वादभेदस्यचतत्प्रवृत्तेःपूर्वमज्ञातत्वादित्यर्थः ॥ २४ ॥ अतइति । यस्माद्ब्रह्माभि न्नात्मावगतौवेदवाक्यंप्रमाणमेतस्मात्कारणात्तत्त्वमसिअहंब्रह्मास्मीत्यादिवेदवाक्यंययायुक्त्याप्रत्यगभिन्नस्यपरमात्मनो बोधकमस्ति सा युक्तिरपीहतत्त्वमस्यादिवाक्यंब्रह्मणःप्रमापकमस्तीत्यत्रसम्यक्कथ्यते ॥ २५ ॥ उक्तवाक्यार्थप्रतिपत्त्यर्थमेवैतावत्पर्यंतंत्वंपदशोधनंकृतंवा

अतस्तत्त्वमसीत्यादिवेदवाक्यंप्रमापकम् ॥ ब्रह्मणोऽस्तिययायुक्त्यासम्यक्सापीहकीर्त्यते ॥ २५ ॥
शोधितेत्वंपदार्थेहितत्त्वमस्यादिचिंतनम् ॥ संभवेन्नान्यथातस्माच्छोधनंकृतमादितः ॥ २६ ॥
देहेंद्रियादिसंभिन्नोयोऽस्मत्प्रत्ययशब्दयोः ॥ आलंबनतयाभातिवाच्यार्थस्त्वंपदस्यसः ॥ २७ ॥

क्यार्थप्रतिपत्तौपदार्थावगतेर्हेतुत्वादित्याशयेनाह । शोधितइति । हियस्मात्त्वंपदार्थेशोधितेतत्त्वमस्यादिचिंतनंसंभवेन्नान्यथेत्यन्वय व्यतिरेकौतस्मादादितोदेहात्मवादनिराकरणमारभ्य त्वंपदार्थस्यशोधनंकृतम् ॥ २६ ॥ ननुत्वंपदार्थशोधनमात्रेणवाक्यार्थज्ञानंनभवि ष्यति तत्पदार्थशोधनस्यापितत्रापेक्षितत्वादित्याशंक्य तत्त्वंपदार्थयोर्वाच्यलक्ष्यार्थौप्रदर्शयितुमुपक्रमते । देहेति । तत्रपदार्थोद्विवि धः शक्योलक्ष्यश्च तत्रशक्तिविषयआद्यः शक्तिश्च पदानामर्थेषुमुख्यावृत्तिः यथाघटपदस्यपृथुबुध्नोदराकृतिविशिष्टेवस्तुनिवृत्तिः साच तत्तत्पदजन्यपदार्थज्ञानरूपकार्यानुमेया । लक्षणाविषयोद्वितीयः लक्षणास्वरूपंत्वग्रेस्फुटीभविष्यति तत्रादौत्वंपदस्यवाच्यार्थमाह । देहेति। देहेनजरायुजांडजस्वेदजोद्भिज्जभेदेनचतुर्विधेनस्थूलदेहेनेंद्रियैःश्रोत्रत्वक्चक्षुर्जिह्वाघ्राणाख्यैर्ज्ञानेंद्रियैर्वाक्पाणिपादपायूपस्थाख्यैःकर्मेंद्रियै

श्च संभिन्नोऽवच्छिन्नआदिपदेनप्राणापानव्यानोदानसमानसंज्ञाःप्राणा मनोबुद्ध्यहंकारचित्तसंज्ञांतःकरणचतुष्टयं शब्दस्पर्शरूपरस गंधवचनादानगमनविसर्गानंदसंकल्पनिश्चयाभिमानानुसंधानात्मकाश्चतुर्दशविषयाः आधिदैविकाधिभौतिकाध्यात्मिकाख्यतापत्रयं पुत्रवित्तलोकैषणात्रयंसत्वरजस्तमोलक्षणागुणाश्चगृह्यंते योदेहेंद्रियादिसंभिन्नोऽस्मत्प्रत्ययशब्दयोरालंबनतयाभाति सत्वंपदस्यवाच्योऽर्थः। एतेननियम्यत्वंनानात्वंकिंचिद्ज्ञत्वंपरोक्षत्वंचत्वंपदवाच्यार्थस्यदर्शितम् ॥ २७ ॥ तल्लक्ष्यार्थमाह । देहेति । योदेहेंद्रियमनःप्राणादिसाक्षी साक्षाद्द्रष्टा तेभ्योऽसद्दृश्यजडदुःखात्मकेभ्योविलक्षणोविसदृशः स्वयंबोधस्वरूपत्वाद्भातिप्रकाशते सत्वंपदस्यलक्ष्योऽर्थः ॥ २८ ॥ अथ

देहेंद्रियादिसाक्षीयस्तेभ्योभातिविलक्षणः ॥ स्वयंबोधस्वरूपत्वाल्लक्ष्यार्थस्त्वंपदस्यसः ॥२८॥ यद्ब्रह्मश्रुतिभिःप्रोक्तंविश्वोत्पत्त्यादिकारणम् ॥ सार्वज्ञादिगुणैर्युक्तंवाच्यार्थस्तत्पदस्यसः ॥ २९ ॥
मायोपाधिविनिर्मुक्तंब्रह्मविश्वविवर्जितम् ॥ सच्चिदानंदरूपंयल्लक्ष्यार्थस्तत्पदस्यसः ॥ ३० ॥
सामानाधिकरण्यादिसंबंधत्रितयेणयत् ॥ अखंडंज्ञायतेब्रह्मवाक्यार्थःसंमतोविदाम् ॥ ३१ ॥

तत्पदवाच्यार्थंदर्शयति । यदिति । यतोवाइमानिभूतानिजायंते येनजातानिजीवंति यत्प्रयंत्यभिसंविशंतीति यःसर्वज्ञःसर्ववित्परा स्यशक्तिर्विविधैवश्रूयतेस्वाभाविकीज्ञानबलक्रियाचेत्यादिश्रुतिभिर्जगज्जन्मस्थितिप्रलयानांकारणं सर्वज्ञसर्वेश्वरत्वादिगुणैर्युक्तंयद्ब्रह्मप्रोक्तं सतत्पदस्यवाच्योऽर्थः । एतेननियंतृत्वमेकत्वंसर्वज्ञत्वंपरोक्षत्वंचतत्पदवाच्यार्थबोधितम् ॥ २९ ॥ तल्लक्ष्यार्थमाह । मायेति । मायाख्योपाधि विनिर्मुक्तं तथाऽशेषदोषास्पदेनप्रपंचेनविवर्जितंसच्चिदानंदरूपंयद्ब्रह्मसतत्पदस्यलक्ष्योऽर्थः॥३०॥ एवंतत्त्वंपदयोरर्थमभिधायवाक्यार्थमाह। सामानाधिकरण्येति । सामानाधिकरण्यंचविशेषणविशेष्यता लक्ष्यलक्षणभावश्चेतिसंबंधत्रयेणयदखंडंत्रिविधपरिच्छेदशून्यं स्वगतसजा तीयविजातीयभेदवर्जितंब्रह्मज्ञायते सतत्त्वमस्यादिवाक्यस्यार्थस्तत्वविदामभिमतः। द्विविधंहिवाक्यं संसृष्टार्थमखंडार्थंचेति तत्रघटमानये

त्यादिवाक्यं संसर्गविषयकप्रमोत्पादकत्वात्संसृष्टार्थं प्रकृष्टप्रकाशश्चंद्रइत्यादिवाक्यंसंसर्गाविषयकप्रमोत्पादकत्वादखंडार्थं एतस्मिंज्योति मंडलेकतमश्चंद्रइतिचंद्रस्वरूपमात्रजिज्ञासयापृष्टेनास्यवाक्यस्यप्रयुक्तत्वेनतत्स्वरूपमात्रबोधकत्वात्अन्यथाप्रश्नोत्तरयोर्वैरूप्यापातात् एवं सोऽयंदेवदत्तः तत्त्वमसीत्यादिवाक्यमप्यखंडार्थं स्वरूपमात्रविवक्षयाप्रयुक्तत्वात्।अखंडार्थत्वंचापर्यायशब्दानांसंसर्गागोचरत्वप्रमाजनक त्वंतेषामेकप्रातिपदिकार्थमात्रपर्यवसायित्वंवा घटमानयेत्यादौव्यभिचारवारणायासंसर्गेत्यादिकोशोपस्थितपदेष्वतिव्याप्तिनिरासायाप र्यायेत्यादि पिकःकोकिलोवायसःकाकइत्यादिपदेष्वतिव्याप्तिवारणायैकेत्यादि ॥ ३१ ॥ तत्रसंबंधत्रयंविभज्यदर्शयन्नादौभिन्नप्रवृत्ति निमित्तयोःसमानविभक्त्यंतयोःपदयोरेकस्मिन्नर्थेतात्पर्यं सामानाधिकरण्यमित्याद्यसंबंधलक्षणमाह। भिन्नेति । यथासोऽयंदेवदत्तइतिवा क्येभूतकालविशिष्टदेवदत्तवाचकसपदस्यवर्तमानकालविशिष्टदेवदत्तवाचकायंपदस्यचैकस्मिंन्पिंडेतात्पर्यसंबंधःतथाचतत्त्वमसिवाक्ये

**भिन्नप्रवृत्तिहेत्वोस्तुल्यविभक्त्यंतयोर्भवेत् ॥ समानाधिकरण्यंपदयोरेकार्थनिष्ठता ॥ ३२ ॥**
**पदार्थयोर्द्वितीयःस्याद्विशेषणविशेष्यता ॥ लक्ष्यलक्षणभावोऽन्यःपदयोःप्रत्यगात्मना ॥ ३३ ॥**

ऽपिपरोक्षत्वनियंतृत्वादिविशिष्टचैतन्यवाचकतत्पदस्यापरोक्षत्वनियम्यत्वादिविशिष्टचैतन्यवाच्यत्वंपदस्यचैकस्मिन्चैतन्येतात्पर्यसंबंधइ तिभावः ॥ ३२ ॥ द्वितीयंसंबंधंलक्षयति। पदार्थयोरिति। व्यावर्तकंविशेषणं व्यावर्त्यंविशेष्यं तयोर्भावोविशेषणविशेष्यता तथाचोक्तवाक्ये यथोक्तयोःसोऽयंपदार्थयोःपरस्परभेदव्यवच्छेदकत्वेनविशेषणविशेष्यभावस्तथातत्त्वमसिवाक्येऽप्युक्तयोस्तत्त्वंपदार्थयोरन्योऽन्यभेदव्यव च्छेदकतया विशेषणविशेष्यभावोद्वितीयःसंबंधइत्यर्थः।पदवाच्यार्थयोःपरस्परविरुद्धत्वान्नान्योऽन्यविशेषणविशेष्यभावोयुक्तस्तथाविरुद्धा र्थसमर्पकयोःपदयोरपिसामानाधिकरण्यवशात्प्रतीयमानऐक्यवाक्यार्थोऽनुपपन्नइत्यतोलक्षणायाआवश्यकत्वाल्लक्ष्यलक्षणसंबंधस्तृतीयइ त्याशयेनाह । लक्ष्येति । पदयोःप्रत्यगात्मनासच्चिदानंदलक्षणेनशुद्धचैतन्येनसह लक्ष्यलक्षणसंबंधस्तथाचतत्त्वंपदयोःश्रूयमाणंसामाना

धिकरण्यं स्तंभकुंभशब्दयोरिवभिन्नार्थत्वेनोपपद्यते तथाकुंभकलशशब्दयोरिवाभिन्नार्थकत्वेपिनसंगच्छतेऽतःसोयमितिपदयोर्यथाविरुद्धां शपरित्यागेनाविरुद्धदेवदत्तरूपैकार्थलक्ष्यकत्वेनसामानाधिकरण्यं तथाप्रकृतेऽपिविरुद्धांशपरित्यागेनाविरुद्धचैतन्यरूपैकार्थलक्ष्यकत्वेनसा मानाधिकरण्यमित्यर्थः ॥ ३३ ॥ लक्ष्यलक्षणसंबंधंप्रकृतेयोजयिष्यन्लक्षणाश्रयणेहेतुमाह। प्रत्यक्त्वमिति । वाच्यार्थयोरभेदेवर्ण्यमाने प्र त्यक्त्वंपरोक्षत्वंसद्वितीयत्वंपूर्णत्वंचकारान्नियम्यत्वंनियंतृत्वंकिंचिज्ज्ञत्वंसर्वज्ञत्वमित्येवंपरस्परंविरुद्धंस्यात्ततोलक्षणाभवति । एतेनलक्षणां विनापिनीलोत्पलमितिवदेकार्थसामानाधिकरण्यंतत्त्वंपदयोरुपपद्यतइत्याशंकापिप्रत्युक्ता नीलोत्पलमितिवाक्येपरस्परविशेषणविशेष्यत्वे नगुणांतरद्रव्यांतरव्यावर्तकयोर्नीलोत्पलयोर्गुणगुणिभावेनविरोधाभावात् तथाचतत्त्वमस्यादिवाक्यमखंडार्थे अकार्यकारणद्रव्यविषयसमा नाधिकरण्यवाक्यत्वात्सोऽयंदेवदत्तइतिवाक्यवत् औपाधिकभेदवत्पदार्थविषयसमानाधिकरणवाक्यत्वाद्वा महत्खंकुंभखमितिवाक्यवदि

**प्रत्यक्त्वंसद्वितीयत्वंपरोक्षत्वंचपूर्णता ॥ परस्परंविरुद्धंस्यात्ततोभवतिलक्षणा ॥ ३४ ॥**

त्यनुमानद्वयेनाखंडार्थस्यतत्त्वमस्यादिवाक्यस्य नीलोत्पलमित्यादिवाक्यवल्लक्षणामृतेवाक्यार्थःकथंसंगच्छेतेतिभावः। तत्राद्यसाधने मृद्घटः नीलमुत्पलंराज्ञःपुरुषइत्यादिवाक्येषु व्यभिचारनिरासायक्रमेणविशेषणानि द्वितीयहेतौ कुंभाकाशः शरावावच्छिन्नाकाशाद्भिद्यतइतिवा क्ये व्यभिचारनिरासायसामानाधिकरण्यपदं नचासिद्धिःतत्त्वमर्थयोरकार्यकारणत्वाद्गुणाद्यतिरिक्तत्वाच्च नचतत्त्वमर्थयोरभेदेनद्वित्वाभा वादसिद्धिरितिवाच्यं कल्पितभेदेनापिद्वित्वोपपत्तेः अतएवनसाधनवैकल्यमपि नापिविरोधः साध्याभावव्याप्यत्वस्यासत्वात् नाप्यनै कांतिकः विपक्षावृत्तेः नापिवाक्यत्वादिनासत्प्रतिपक्षता तस्याप्रयोजकत्वात्प्रकृष्टप्रकाशश्चंद्रइत्यादिवाक्येव्यभिचाराच्च नापिबाधस्तत्त्व मर्थाभेदस्यनिरूप्यमाणत्वात् । नापिदृष्टांतेसाध्यविकलता तदेतत्पदद्वयलक्षितदेवदत्तैक्यस्यतेनप्रतिपादनात् ॥ ३४ ॥ ॥

तत्रलक्षणाकिंस्वरूपेत्यपेक्षायामाह । मानातरेति । मानातरस्यप्रत्यक्षादेर्विरोधान्मुख्यार्थस्यवाच्यार्थस्यापरिग्रहेमुख्यार्थेनाविनाभूते संबंधे
वसंबद्धेऽर्थांतरेशब्दस्यप्रवृत्तिर्लक्षणाइष्यतेस्वीक्रियतेइत्यर्थः ॥ ३५ ॥ साजहल्लक्षणा अजहल्लक्षणा जहदजहल्लक्षणाचेति त्रिविधेत्याह ।
त्रिविधेति । अंत्यावृतीयाभागत्यागपदप्रतिपाद्या ॥३६॥ तत्रतृतीयामेवलक्षणांप्रकृतेऽवशेषयितुमादावाद्यांतांनिराचष्टे । वाच्यार्थमिति ।
वाच्यार्थंसर्वंपरित्यज्यवाच्यार्थाविनाभूतेयावृत्तिःसाजहल्लक्षणा गंगायांघोषोनिवसतीतिवाक्ये यथासंभवति तथात्र तत्त्वमसिवाक्ये
नसंभवेत् ॥ ३७ ॥ तत्र गंगाघोषयोराधाराधेयलक्षणवाक्यार्थस्याशेषतोविरुद्धत्वेनवाच्यार्थमखिलमपरित्यज्य तदविनाभूततीरलक्ष

मानांतरोपरोधाच्चमुख्यार्थस्यापरिग्रहे ॥ मुख्यार्थेनाविनाभूतेप्रवृत्तिर्लक्षणेष्यते ॥ ३५ ॥ त्रिवि
धालक्षणाज्ञेयाजहत्यजहतीतथा ॥ अंत्योभयात्मिकाबोध्याभागत्यागपदास्पदा ॥ ३६ ॥ वा
च्यार्थमखिलंत्यक्त्वावृत्तिःस्याद्यातदन्विते ॥ गंगायांघोषइतिवज्जहतीनात्रसंभवेत् ॥ ३७ ॥
वाच्यार्थस्यैकदेशस्यप्रकृतेत्यागइष्यते ॥ विरुद्धस्याविरुद्धस्यत्यागेहीष्टंनसिद्ध्यति ॥ ३८ ॥

णायायुक्तत्वाज्जहल्लक्षणासंभवति प्रकृतेतुभागमात्रेविरोधाद्विरुद्धस्यवाच्यार्थस्यैकदेशस्यत्यागइष्यते हियस्मादविरुद्धस्यास्यत्यागेइष्टंवाच्यै
कदेशचैतन्यैक्यंनसिद्ध्यत्यतः प्रकृते जहल्लक्षणानसंभवतीत्याशयवानाह ।वाच्यार्थस्येति । ननुविरुद्धविशेषणांशपरित्यागेऽपिविशेषणाभा
वेविशिष्टाभावइतिन्यायेनजहल्लक्षणैवपर्यवस्यतीतिचेन्न तत्त्वंपदार्थातिरिक्तस्यतत्संबंधिनोऽर्थस्याप्रसिद्धेः । ननुत्वंपदंतत्पदंवास्वार्थपरित्या
गेनतत्पदार्थंत्वंपदार्थंवालक्षयत्वितिचेन्न पदादेववाक्यार्थान्वयिपदार्थप्रतीतौलक्षणावैयर्थ्यात्तत्रतुतीरपदाश्रयणेनतस्याःसार्थक्यात् ॥३८

अजहत्स्वार्थामपिप्रकृतेनिराकरिष्यंस्तल्लक्षणंसोदाहरणमाह । वाच्यार्थमिति । वाच्यार्थमपरित्यज्यान्यस्मिन्नर्थेतुयावृत्तिःसेयमजहल्लक्षणाप्रोक्ता । यथाशोणोऽयंधावतीतिवाक्ये अत्रशोणपदवाच्यशोणगुणधावनलक्षणस्यवाक्यस्यविरुद्धत्वात्तदपरित्यागेनतदाधाराश्वादिलक्षणायांविरोधपरिहारसंभवादित्यर्थः ॥३९॥ नेति । साप्यत्रतत्त्वमसिवाक्येनसंभवति । वाच्यार्थेऽतिविरोधाद्विरोध्यंशपरित्यागंविनातत्संबंधिनोयस्यकस्यचित्पदार्थस्यलक्षितत्वेऽपितस्यातिविरोधस्याविनिर्गमादपरिहारात् ॥ ४० ॥ एवंलक्षणाद्वयंप्रकृतेनसंभवतीत्यभिधाय प्रकृतोपयोगिनींभागलक्षणांदर्शयति । वाच्यार्थस्येति ॥ ४१ ॥ एवंतृतीयलक्षणास्वरूपमभिधाय तांप्रकृतेयोजयितुमारभते । तत्कालेति ।

वाच्यार्थमपरित्यज्यवृत्तिरन्यार्थकेतुया ॥ कथितेयमजहतीशोणोऽयंधावतीतिवत् ॥ ३९ ॥
नसंभवतिसाप्यत्रवाच्यार्थेऽतिविरोधतः ॥ विरोध्यंशपरित्यागंविनातस्याविनिर्गमात् ॥४० ॥
वाच्यार्थस्यैकदेशंसंपरित्यज्यैकदेशकम् ॥ याबोधयतिसाज्ञेयातृतीयाभागलक्षणा ॥ ४१ ॥
तत्कालादिविशिष्टांशंयथात्यक्त्वाविरोधिनम् ॥ लक्षयत्यविरोध्यंशंपिंडंसोऽयमितिद्विजः ॥
॥ ४२ ॥ प्रत्यक्त्वादीन्परित्यज्यतथाधर्मांस्त्वमर्थतः ॥ सर्वज्ञत्वपरोक्षत्वमुखांस्त्यक्त्वातदर्थतः
॥४३॥ शुद्धंकूटस्थमद्वैतंबोधयत्यादरात्परम् ॥ तत्त्वमस्यादिकंवाक्यंभेदनिंदार्थकश्रुतेः ॥ ४४ ॥

यथासोयंदेवदत्तइति वाक्यंतत्कालैतत्कालविशिष्टं विरोधिनमंशंपरित्यज्याविरोधिनमंशंपिंडमात्रंयथालक्षयति तथाप्रत्यक्त्वादीनितिपरेणान्वयः ॥ ४२ ॥ प्रत्यक्त्वेति । तथातत्त्वमसिवाक्यंप्रत्यक्त्वनियम्यत्वादीन्त्वमर्थतःपरित्यज्य सर्वज्ञत्वपरोक्षत्वनियंतृत्वादींस्तदर्थतस्त्यक्त्वा शुद्धंनिर्विकारमद्वैतंपरंब्रह्म तत्त्वमस्यादिकंवाक्यमादराल्लक्षयति । तत्रहेतुः मृत्योःसमृत्युमाप्नोति यइहनानेवपश्यतीत्यादिभेदनिंदार्थकश्रुतेः ॥ ४३ ॥ ४४ ॥ ॥ ॥ ॥ ॥ ॥ ॥

एवंवाक्यार्थंप्रदर्श्य तरतिशोकमात्मविदित्यादिश्रुत्या प्रदर्शितस्य दृढाखंडापरोक्षज्ञानस्यफलमाह । इत्थमिति । इत्थमनेनप्रकारेणनयैर्युक्तिभिरभेदात्तत्त्वंपदार्थयोरैक्यस्यावबोधेनपरोक्षज्ञानेनष्टे यस्यसाधनचतुष्टयसंपन्नस्याधिकारिणः । अहंब्रह्मेतिश्रुतेःब्रह्मास्मीतिदृढंविज्ञानमपरोक्षज्ञानंजातमुत्पन्नमसौ सद्यस्तत्क्षणएवशोकोपलक्षितमनर्थसार्थंतरतीत्यर्थः ॥ ४५ ॥ ननुदेहेंद्रियादिव्यतिरिक्तस्यात्मनोयमहमितिप्रकाशमानत्वात्तत्त्वमस्यादिवाक्यस्यत्वमर्थेऽशेऽज्ञातज्ञापकत्वंनास्तीत्याशंक्योक्तवाक्यंनकेवलंत्वमर्थज्ञापकार्थंकिंतु त्वमर्थस्यतत्पदार्थब्रह्मणैकत्वबोधनार्थमित्याह । आत्मेति । यद्यप्यात्माप्रकाशमानस्तथापिमहावाक्यैस्तत्त्वमस्यहंब्रह्मास्मीत्येवमादिभिस्तत्पदलक्ष्यस्यब्रह्मणःसंमतस्यत्वंपदलक्ष्यस्यप्रत्यगात्मनएकताऐक्यमज्ञातंबोध्यते ननुतस्यत्वमसितस्मैत्वमसीत्यादिप्रकारेणोक्तवाक्यैर्भेदएवकुतोनबोध्यत

इत्थमैक्यावबोधेनयस्यजातंदृढंनयैः ॥ अहंब्रह्मेतिविज्ञानंसद्यःशोकंतरत्यसौ ॥ ४५ ॥ आत्माप्रकाशमानोऽपिमहावाक्यैस्तथैकता ॥ तत्त्वमोर्बोध्यतेऽज्ञातापौर्वापर्यानुसारतः ॥ ४६ ॥ यद्यप्युत्पद्यतेपुंसांब्रह्मज्ञानंविचारतः ॥ पौर्वापर्यानुसारेणवेदांतवचसांकिल ॥ ४७ ॥ ॥

इत्याशंक्याह । पौर्वापर्यानुसारतइति । उपक्रमोपसंहारावभ्यासोपूर्वताफलम् आर्थवादोपपत्तीचलिंगंतात्पर्यनिर्णयेइत्युक्तषड्विधतात्पर्यलिंगानुसारादित्यर्थः । तथाच । एकमेवाद्वितीयमित्युपक्रमः ऐतदात्म्यमिदंसर्वमित्युपसंहारः तत्त्वमसितत्त्वमसीत्यादिनानवकृत्वःप्रतिपादनमभ्यासः आचार्यवान्पुरुषोवेदेतिमानांतराविषयत्वमपूर्वत्वं तस्यतावदेवचिरंयावान्नविमोक्ष्येऽथसंपत्स्यइति फलमित्येवंविधतात्पर्यलिंगैःप्रकरणप्रतिपाद्यमेकमेवाद्वितीयंवस्त्विति निर्णयादैक्यमेवोक्तवाक्यैर्बोध्यतइतिभावः ॥ ४६ ॥ तर्हिवेदांतवाक्यैःपौर्वापर्यानुसारेणस्वयंविचारितैःप्रत्यगभिन्नब्रह्मज्ञानं गुरुंविनैवसेत्स्यतीत्याशंक्याह । यद्यपीति । यद्यप्युक्तरीत्याविचारोज्ञानसाधनं तथापिमूढैःपंडितमानिभिःश्रीगुरोःकरुणांविनाप्रत्यगभिन्नंब्रह्मसाक्षात्कर्तुंनैवशक्यते ॥ ४७ ॥ ॥ ॥ ॥

॥ ४८ ॥ ननु निष्कामकर्माद्यनुष्ठानेनचित्तेसम्यक्शुद्धेसति वेदवाक्यैः स्वयमेवज्ञानंप्रकाशते एतस्मात्कारणात्गुरुणाकिंप्रयोजनमि त्याशंक्य निषेधति । वर्णेति । नसांप्रतंप्राप्यंनभवति ॥ ४९ ॥ ५० ॥ तत्रहेतुमाह । आचार्येति । हियस्मादाचार्यवान्पुरुषोवेदेत्येवं श्रुतिर्जगौ । उपसंहरति । तस्मादिति ॥ ५१ ॥ फलितमाह । अतइति। दृश्यंचासत्त्वेनज्ञात्वेति संबंधः ॥ ५२ ॥ अद्वैतस्यब्रह्मणएवप्र त्यक्षाद्यगम्यस्यवेदांतैःप्रतिपाद्यत्वात्तत्रैवस्थितिर्युक्तेत्याह । यदिति ॥ ५३ ॥ नकेवलंवेदांतेप्रतिपादितत्वादेवतत्रस्थितिः कार्या किंतु

तथापिशक्यतेनैवश्रीगुरोःकरुणांविना ॥ अपरोक्षयितुंब्रह्ममूढैःपंडितमानिभिः ॥ ४८ ॥ वर्णा श्रमोक्तनिष्कामकर्माण्येवप्रकुर्वताम् ॥ ईश्वराराधनासक्तचेतसासुमहात्मनाम् ॥ ४९ ॥ अंतः करणसंशुद्धौस्वयंज्ञानंप्रकाशते ॥ वेदवाक्यैरतःकिंस्याद्गुरुणेतिनसांप्रतम्॥५०॥ आचार्यवान्हि पुरुषोवेदेत्येवंश्रुतिर्जगौः ॥ तस्माद्नादौसंसारेगुरुरात्मैक्यबोधकृत् ॥ ५१ ॥ अतोब्रह्मात्मव स्त्वैक्यंज्ञात्वादृश्यमसत्तया ॥ अद्वैतेब्रह्मणिस्थेयंप्रत्यग्ब्रह्मात्मनासदा ॥ ५२ ॥ यत्प्रत्यक्षाद्यवि ज्ञातमद्वैतंब्रह्मचिद्घनम् ॥ प्रतिपाद्यंतदेवात्रवेदांतेनद्वयंजडम् ॥ ५३ ॥ सुखरूपंचिदद्वैतंद्वैतंदुःखम सज्जडम् ॥ वेदांतैस्तद्द्वयंसम्यङ्निर्णीतंवस्तुतोनयात् ॥ ५४ ॥ ॥

योवैभूमातत्सुखं नाल्पेसुखमस्ति यत्रनान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति सभूमाथयत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पं योवैभूमातदमृतमथयदल्पंतन्मर्त्यं यथासोम्यैकेनमृत्पिंडेनसर्वंमृन्मयंविज्ञातंस्याद्वाचारंभणंविकारोनामधेयंमृत्तिकेत्येवसत्यं एवं सोम्यसआदेशोभवतीत्यादिश्रुत्यासुखरूपस्यचिदद्वैतस्य दुःखरूपस्यासत्यस्यजडस्ययुक्तिपूर्वकं निर्णीतत्वादपीत्याशयवानाह । सुखरूप मिति ॥ ५४ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

अद्वैतमिति । तस्मादद्वैतंसदासत्यमबाध्यमेव द्वैतंसदाअसत्यंबाध्यमेवत्वंविद्धि यस्माद्वैतमसत्यंततस्तस्माच्छुद्धेनिर्मायेमायामयमशुद्धं दृश्यं कथमपिनसंभवतीत्यर्थः ॥५५॥ तत्रदृष्टांतमाह। शुक्ताविति। तथाच कल्पितंविश्वंनकदापिसदधिष्ठानं ब्रह्मतु सर्वदेत्याह विद्यतइति। नासतोविद्यतेभावोनाभावोविद्यतेसतइत्यादिस्मृतेः ॥५६॥ द्वैतमसदित्युक्तंतत्रासच्छब्देनशून्यमुच्यतेतद्विलक्षणमितरद्वेत्यपेक्षायामाह। बाध्यत्वादिति। बाध्यत्वाद्वैतंसन्नभवति नाप्यसत्प्रत्यक्षभानादसतःशून्यस्यनरविषाणादेः प्रत्यक्षावभासाभावात् नापिसदसद्विरुद्धत्वादतः सदसद्विलक्षणमनिर्वाच्यमेवद्वैतमित्यर्थः॥ ५७॥ नन्वद्वैतस्यसत्यत्वेपिममकिमायातमित्याकांक्षायां सदेवसोम्येदमग्रआसीदेकमेवाद्वितीयं

अद्वैतमेवसत्यंत्वंविद्धिद्वैतमसत्सदा ॥ शुद्धेकथमशुद्धंस्याद्दृश्यंमायामयंततः ॥ ५५ ॥ शुक्तौ
रूप्यंमृषायद्वत्तथाविश्वंपरात्मनि ॥ विद्यतेनसतोऽसत्वंनासतःसत्वमस्तिवा ॥ ५६ ॥ बाध्य
त्वान्नैवसद्वैतंनासत्प्रत्यक्षभानतः ॥ नचासत्सद्विरुद्धत्वादतोऽनिर्वाच्यमेवतत् ॥ ५७ ॥ यः
पूर्वमेकएवासीत्सृष्ट्वापश्चादिदंजगत् ॥ प्रविष्टोजीवरूपेणसएवात्माभवान्परः ॥ ५८ ॥ सच्चि
दानंदएवत्वंजीवत्वंकल्पितंत्वयि ॥ सर्वभ्रांतिविनिर्मुक्तःपरात्माश्रुतिगोचरः ॥ ५९ ॥ ॥

यं तत्सृष्ट्वातदेवानुप्राविशत्। अनेनजीवेनात्मनानुपविश्यनामरूपेव्याकरवाणीत्यादिश्रुत्याऽद्वैतःपरमात्मात्वमेवासीत्याह। यइति ॥५८॥ ननु दुग्धस्यदध्याकारेणपरिणतस्यपुनर्दुग्धरूपप्राप्त्यभाववत्परात्मनोऽपिजीवात्मनापरिणतस्यपुनःस्वस्वरूपप्राप्त्यसंभवात्कथमेवमभिहित मित्याशंक्याह। सच्चिदित्यादि। सच्चिदानंदएवत्वंनियतो जीवत्वंत्वयिकल्पितमारोपितमतः सर्वभ्रांत्याविनिर्मुक्तःअज्ञानेनतज्जन्यभ्रम मात्रेणचविशेषेणनिर्मुक्तः सत्यंज्ञानमनंतं विज्ञानमानंदंब्रह्मेत्यादिश्रुतिगम्यः सच्चिदानंदरूपः परमात्मैवत्वंत्वमेवैवंविधः परमात्मेत्यर्थः। तथाचाज्ञानेनकल्पितसर्पाकारेणप्रतीतायारज्जोस्तन्निवृत्त्यापुनःस्वस्वरूपाविर्भावस्तथाप्रकृतेऽपीतिनकोऽपिदोषइत्यर्थः॥ ५९॥

नन्वेवंतर्हितथाभूतंस्वस्वरूपंमयाकुतोनज्ञातइतिचेत्तत्राह । अब्धिरिति । अब्धिःसमुद्रोमेघैर्नीतोनद्यादित्वंप्राप्तः समुद्रबुद्धिंत्यक्त्वास्त द्वदेवत्वंपरंस्वस्वरूपंविस्मृत्यजीवभावमनुप्राप्तः इदानींतुतत्वज्ञानात्साम्राज्यंप्राप्तःअद्वयानंदचिन्मात्रः शुद्धःपरमात्मैवासीतिद्वयोरर्थः ॥ ॥ ६० ॥ ६१ ॥ तथाचैवंभूतेत्वयिकर्तृत्वादिस्वरूपंवक्तुमेवाशक्यमित्याशयेनाह । कर्तृत्वादीनीति ॥ ६२ ॥ अस्मिन्नर्थेपंडितोमेधावी

अब्धिर्नीतोयथामेघैर्नद्यादित्वंगतोजहौ ॥ स्वमतिंचैवमेवत्वंविस्मृत्यात्मपदंपरम् ॥ ६० ॥
जीवभावमनुप्राप्तःसएवात्मासिबोधतः ॥ अद्वयानंदचिन्मात्रःशुद्धःसाम्राज्यमागतः ॥ ६१ ॥
कर्तृत्वादीनियान्यासंस्त्वयिब्रह्माद्वयेपरे ॥ तानीदानींवदस्वत्वंकिंस्वरूपाणिवस्तुतः ॥ ६२ ॥
अत्रैवशृणुवृत्तांतमपूर्वंश्रुतिभाषितम् ॥ कश्चिद्गांधारदेशीयोमहारत्नविभूषितः ॥ ३३ ॥ स्व
गृहस्यांगणेसुप्तःप्रमत्तःसन्कदाचन ॥ रात्रौचोरैःसमागत्यभूषणानांप्रलोभतः ॥ ६४ ॥ बध्वा
देशांतरंदूरंनीतःसगहनेवने ॥ भूषणान्यपहृत्याभिनद्धाक्षिकरपादकः ॥ ६५ ॥ निक्षिप्तोवि
पिनेतीवकुशकंटकवृश्चिकैः ॥ व्यालव्याघ्रादिभिश्चैवसंकुलेतरुसंकटे ॥ ६६ ॥ व्यालादिदुष्ट
सत्वेभ्योमहारण्येभयातुरः ॥ शिलाकंटकदर्भाद्यैर्देहस्यप्रतिकूलकैः ॥ ६७ ॥ क्रियमाणेविलु
ठनेविशीर्णांगोऽसमर्थकः ॥ क्षुत्तृषातपदावाग्न्यादिभिस्तप्तोतितापकैः ॥ ६८ ॥ ॥ ॥



गांधारानेवोपसंपद्येतैवमेवेहाचार्यवान्पुरुषोवेदेतिश्रुत्युक्तवृत्तांतंश्रावयितुमाह । अत्रेति ॥ ६३ ॥ ६४ ॥ अभिनद्धाःसम्यग्बद्धानेत्रहस्त पादायस्य ॥ ६५ ॥ तरुभिर्वृक्षैःसंकटे ॥ ६६ ॥ ६७ ॥ ६८ ॥ ॥ ॥ ॥ ॥

बंधमुक्तौ-वनमुक्त्यर्थं ॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ॥ ७६ ॥ स्वस्थइति । श्रुतिस्थपंडितपदस्यार्थमा
ह । निश्चितोध्वकस्तदुक्तोमार्गोयेनसः उक्तार्थंज्ञातुंसमर्थइत्यर्थः अथश्रुतिस्थमेधावीपदस्यार्थमाह । मार्गतत्परइति । अनुक्तेऽपिप्रयोजक

बंधमुक्तौतथादेशप्राप्तौचोपायवर्जितः ॥ ददर्शकंचिन्नोपायमाक्रोशन्नेवतस्थिवान् ॥ ६९ ॥
तथारागादिभिःषट्कैःशत्रुभिर्दुःखदायिभिः ॥ चौरैर्देहाभिमानाद्यैःस्वानंदधनहारिभिः ॥ ७० ॥
ब्रह्मानंदेप्रमत्तःस्वाज्ञाननिद्रावशीकृतः ॥ बद्धस्त्वंबंधनैर्भोगतृष्णारज्ज्वादिभिर्दृढम् ॥ ७१ ॥
अद्वयानंदरूपात्त्वांप्रच्याव्यातीवधूर्त्तकैः ॥ दूरंनीतोसिदेहेषुसंसारारण्यभूमिषु ॥ ७२ ॥ स
र्वदुःखनिदानेषुकारणादित्रयेषुच ॥ नानायोनिषुकर्माध्यवासनानिर्मितासुच ॥ ७३ ॥ प्रवे
शितोविसृष्टोऽसिबद्धस्वानंददृष्टिकः ॥ अनादिकालमारभ्यदुःखंचानुभवन्सदा ॥ ७४ ॥ ज
न्ममृत्युजरादोषनरकादिपरंपराम् ॥ निरंतरंविषण्णोऽनुभवन्नत्यंतशोकवान् ॥ ७५ ॥ यथा
गांधारदेशीयश्चिरंदैवाद्दयालुभिः ॥ कैश्चित्पांथैःपरिप्राप्तैर्मुक्तदृष्ट्यादिबंधनः ॥ ७६ ॥ स्वस्थ
स्तैरुपदिष्टश्चपंडितोनिश्चिताध्वकः ॥ ग्रामाद्ग्रामांतरंगच्छन्मेधावीमार्गतत्परः ॥ ७७ ॥ गत्वा
गांधारदेशंसस्वगृहंप्राप्यपूर्ववत् ॥ बांधवैःसंपरिष्वक्तःसुखीभूत्वास्थितोऽभवत् ॥ ७८ ॥ त्व
मप्येवमनेकेषुदुःखदायिषुजन्मसु ॥ भ्रांतोदैवाच्छ्रुतेर्मार्गेजातश्रद्धःस्वकर्मकृत् ॥ ७९ ॥

शिक्षयोत्प्रेक्षाशक्तिमानित्यर्थः ॥ ७७ ॥ ७८ ॥ दृष्टांतमुक्त्वादार्ष्टांतिकमाह । त्वमपीति ॥ ७९ ॥

वर्णाश्रमाचारपरोवाप्तपुण्यमहोदयः ॥ ईश्वरानुग्रहाल्लब्धब्रह्मविद्गुरुसंगमः ॥ ८० ॥ विधिव
त्कृतसंन्यासोविवेकादियुतःसुधीः ॥ प्राप्तब्रह्मोपदेशोद्यवैराग्याभ्यासतत्परः ॥ ८१ ॥ पंडि
तस्तत्रमेधावीयुक्त्यावस्तुविचारयन् ॥ निदिध्यासनसंपन्नःप्राप्नुहित्वंपरंपदम् ॥ ८२ ॥ अतो
ब्रह्मात्मविज्ञानमुपदिष्टंयथाविधि ॥ मयाचार्येणतेधीरसम्यक्तत्रप्रयत्नवान् ॥ ८३ ॥ भूत्वावि
मुक्तबंधस्त्वंच्छिन्नाद्वैतात्मसंशयः ॥ निर्द्वंद्वोनिस्पृहोभूत्वाविचरस्वयथासुखम् ॥ ८४ ॥ वस्तु
तोनिष्प्रपंचोऽसिनित्यमुक्तःस्वभावतः ॥ नतेबंधविमोक्षौस्तःकल्पितौतौयतस्त्वयि ॥ ८५ ॥
ननिरोधोनचोत्पत्तिर्नबद्धोनचसाधकः ॥ नमुमुक्षुर्नवैमुक्तइत्येषापरमार्थता ॥ ८६ ॥ श्रुतेः
सिद्धांतएषोऽस्तितथैवत्वंस्वयाधिया ॥ संविचार्यनिदिध्यास्यनिजानंदात्मकंपरम् ॥ ८७ ॥
साक्षात्कृत्यापरिच्छिन्नाद्वैतब्रह्माक्षरंस्वयम् ॥ जीवन्नेवविनिर्मुक्तोविश्रांतःशांतिमाश्रय ॥ ८८ ॥
विचारणीयावेदांतावंदनीयोगुरुःसदा ॥ गुरूणांवचनंपथ्यंदर्शनंसेवनंनृणाम् ॥ ८९ ॥ गुरुर्ब्र
ह्मस्वयंसाक्षात्सेव्योवंद्योमुमुक्षुभिः ॥ नोद्वेजनीयएवायंकृतज्ञेनविवेकिना ॥ ९० ॥ ॥

तइति ॥ ८५ ॥ तत्रश्रुतिंप्रमाणयति । नेति ॥ ८६ ॥ ८७ ॥ ८८ ॥ यथेष्टाचरणंवारयति । विचारणीयाइति ॥ ८९ ॥ ९० ॥ ॥

॥ ९१ ॥ भावाद्वैतमिति । भावेनाहमेवसर्वात्मेत्यंतःकरणवृत्त्यासदैवाद्वैतंकुर्यात् ॥ ९२ ॥ ९३ ॥ ९४ ॥ ९५ ॥ ९६ ॥ ९७ ॥ ९८ ॥

यावदायुस्त्रयोवंद्यावेदांतोगुरुरीश्वरः ॥ मनसाकर्मणावाचाश्रुतेरेवैषनिश्चयः ॥ ९१ ॥ भावाद्वै तंसदाकुर्यात्क्रियाद्वैतंनकर्हिचित् ॥ अद्वैतंत्रिषुलोकेषुनाद्वैतंगुरुणासह ॥ ९२ ॥ इत्येवंबोधितोब्रह्मामृतबोधात्मनाद्विजः ॥ गुरुणाभाष्यकारेणमंडनाख्यःकविर्महान् ॥ ९३ ॥ भाष्यकारोपदेशंचसमाकर्ण्याथमंडनः ॥ कृतकृत्यंस्वमात्मानममन्यतसचेतसा ॥ ९४ ॥ उवाचशंकराचार्यंवचोविनयपूर्वकम् ॥ धन्योऽहंकृतकृत्योऽहंप्रसादात्तेगुरोपरात् ॥ ९५ ॥ इत्युक्त्वाचार्यपादाब्जौगृहीत्वाभक्तिपूर्वकम् ॥ विनिधायस्वशिरसिस्थितस्तंगुरुरब्रवीत् ॥ ९६ ॥ स्वात्मारामाःसुराःप्रोक्तास्तेषुश्रेष्ठोभवान्मतः ॥ अतःसुरेश्वराख्यांत्वंप्राप्तोसिमदनुग्रहात् ॥ ९७ ॥ इत्थंश्रीशंकराचार्योमंडनंकृतिनांवरम् ॥ विजित्योपादिशत्तस्मैपरंतत्त्वंयथाविधि ॥ ९८ ॥ सोऽपिब्रह्माद्वयंशुद्धंसाक्षात्कृत्यसुरेश्वरः॥ जीवन्मुक्तोमुनिर्भूत्वाभाष्यकारांतिकेस्थितः॥ ९९ ॥ पद्मपादप्रभृतिभिःशिष्यैःपरिवृतोयतिः ॥ भाष्यकारोमहीपृष्ठेविचचारयथासुखम् ॥ १०० ॥ वेदांतभाष्यसंदोहैरद्वैतंसंप्रवर्तयन् ॥ तुर्याश्रमोक्तधर्मेषुस्थापयामाससद्यतीन् ॥ १ ॥ इतरेवादिनांपक्षाविलीनाद्वैतसाधकाः ॥ अद्वैतपक्षएवात्रशिष्टेषुभुविविश्रुतः ॥ २ ॥ ॥

भाष्यकारस्यांतिकेसमीपे ॥ ९९ ॥ १०० ॥ संदोहैःसमूहैः ॥ १ ॥ २ ॥ ॥ ॥ ॥ ॥

इतरेषांवादिनांपक्षाविलीनाइत्युक्तंविवृणोति। वाणीति। जनानामज्ञानलक्षणांधकारनिवारणेसूर्यात्मभूतायावेदांतेषुयतीशसूक्तयस्तासुसतीषु काणादीवाणीनैवगणिता कापिलीसातुक्वचिल्लीनाक्वगतेतिनज्ञाता शैवंशैवानांपाशुपतानांतुवचनमशिवत्त्वमवाप आर्हतंचतद्गर्हापदंभजते दौर्गंशाक्तानांचतद्दुर्गतिमश्नुतेस्म वैष्णवंततपालयितुंसमर्थंकोऽपिजनोनास्तीत्यर्थः॥३॥ तथाचश्रीशंकरएवसर्वोत्कर्षेणवर्ततेइत्याह। निरवधीति। निरवधिसुखस्यब्रह्मानंदस्यहेतुर्ज्ञापकःभ्रांतिजनितदुःखानांसमुद्रंहंतीति जन्ममरणात्मकस्यतज्जन्यस्यवाभयस्यहंतानाशकः कैरित्यपेक्षायांस्वनिबंधैरित्याशयेनाह। क्षितीति। भूमौविततान्याप्तानिबंधाग्रंथायस्य स्वाभिप्रायप्रदर्शकशिष्यवर्यैराश्रितोऽसौ

वाणीकाणभुजीचनैवगणितालीनाक्वचित्कापिलीशैवंचाशिवभावमेतिभजतेगर्हापदंचार्हतम्॥ दौर्गंदुर्गतिमश्नुतेभुविजनःपुष्णातिकोवैष्णवंवेदांतेषुयतीशसूक्तिषुजनाज्ञानांध्यसूर्यात्मसु॥ ३॥ निरवधिसुखहेतुर्भ्रांतिदुःखाकरघ्नोजनिमृतिभयहंताशंकराख्योयतीशः॥ क्षितिविततनिबंधःशिष्यवर्याश्रितोऽसौजयतुमनुजवेषःशंभुरात्माजनानाम्॥ ४॥ द्विजवरकुलजन्मावेदवेदांगवेत्ताजगतिविततकीर्तिर्न्यायसंप्राप्तवित्तः॥ क्रतुवरशतयाजीब्रह्मविज्ञानशून्योनहिजयतिकदाचिद्दर्शितंब्रह्मणेत्थम्॥५॥ इतिशांकरदिग्विज०श्रीमन्मुकुंदपदारविंदमकरंदाभिलाषिस०मंडनमिश्रोपदेशोनामनवमःसर्गः॥९॥

जनानामात्मामनुष्यविग्रहःशंकराख्योयतीशःशंभुर्जयतुसर्वोत्कर्षेणवर्ततामित्यर्थः॥ ४॥ उक्ताख्यायिकाभिप्रायमाह द्विजवरेति। द्विजवरकुलजन्मापि वेदवेदांगज्ञातापि जगतिविततकीर्तिरपि न्यायसंप्राप्तवित्तोऽपि क्रतुवरशतयजनशीलोऽपि ब्रह्मसाक्षात्कारशून्योकदाचिदपिनैवजयतीतिमंडनात्मनावतीर्यसर्वकृत्वापि ब्रह्मज्ञानेनस्वकृतार्थतांसंपादयताब्रह्मणादर्शितम्॥ ५॥ इतिश्रीपरमहंसपरिव्राजकाचार्यबालगोपालतीर्थश्रीपादशिष्यदत्तवंशावतंसरामकुमारसूनुधनपतिसूरिकृतेश्रीमच्छंकराचार्यविजयडिंडिमेनवमःसर्गः॥ ९॥ ॥

श्रीगणेशायनमः॥ एवंमंडनोपदेशादिकमुपवर्ण्यभैरवाख्यकापालिकनिर्जयंसपरिकरंनिरूपयितुमुपक्रमते। अथेति। रहसिएकांतेस्थितम्

अथैकदाकचिद्देशेरहःसंस्थंयतीश्वरम् ॥ कश्चित्कापालिकोदुष्टःकृत्वावेषांतरंशुभम् ॥ १ ॥ समागत्याब्रवीद्वाक्यंदंभभक्तिंप्रदर्शयन् ॥ अहोभाग्यंमदीयंयल्लब्धंमेदर्शनंतव ॥ २ ॥ मुने तवगुणाञ्छ्रुत्वादिदृक्षुस्त्वामिहागतः ॥ अद्यभाग्यवशाद्दृष्टोभवान्गुणगणाकरः ॥ ३ ॥ परोप कारिणंशांतंत्वामस्मिशरणंगतः ॥ कथयामिस्ववृत्तांतंयदर्थंत्वामुपागतः ॥ ४ ॥ एकदादैव योगान्मेसंकल्पोऽभून्मुनेह्ययम् ॥ देहेनानेनकैलासंगत्वाहंशूलिनासह ॥ ५ ॥ यथेष्टंक्रीडनं कुर्यामित्यतःशंभुमीश्वरम् ॥ शताधिकंचवर्षाणांतपसातमतोषयम् ॥ ६ ॥ संतुष्टस्तपसाशं भुर्मामुवाचकृपानिधिः ॥ भोभोतापससिद्धस्तेभविष्यतिमनोरथः ॥ ७ ॥ सर्वज्ञस्याथवारा ज्ञोहोष्यस्यग्नौशिरोयदि ॥ तदैवनान्यथेतीत्थमुक्त्वामांतर्द्धिमागतः ॥ ८ ॥ तदारभ्यतदर्थंमे यत्नोनेकविधोभवत् ॥ नासादितंशिरोराज्ञःसर्वज्ञस्याथवामुनेः ॥ ९ ॥ अद्यभाग्यवशाल्लब्ध स्त्वंमेसाक्षाद्गुणाकरः ॥ त्वदायत्तंमुनेभीष्टंवक्तव्यंकिंमयाधुना ॥ १० ॥ शिरःप्रदानेसंकीर्ति र्लाभस्तेभवितामहान् ॥ दुर्लभंमेशिरोराज्ञःसर्वज्ञस्त्वामृतेनहि ॥ ११ ॥ ॥ ॥

॥ १ ॥ २ ॥ गुणगणाकरः गुणवृंदानामाकरः ॥ ३ ॥ ४ ॥ ५ ॥ तंशंभुम् ॥ ६ ॥ ७ ॥ मामां ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ ॥

नन्वेवंविधाद्दुर्घटाप्रार्थनानकर्तव्येतिचेत्तत्राह। वरमिति। अधिकेश्रेष्ठेभवादृशेपुंसिनिष्फलापियाञ्चाश्रेष्ठाअधमेतुसफलापिसासमीचीनान भवतितस्माद्गुणाधिकस्त्वमेवयाचितः। एतेनान्यःप्रार्थिनीयइत्यपिनिरस्तं॥ १२॥ ननुतथाप्येवंयाचितुंमनस्तेकथंक्षमतइत्याशंक्याह। नि र्ममइति॥ १३॥ अतइति। वदान्याभवादृशाःस्थिरफलस्यकीर्तिलक्षणस्यप्राप्तयेक्षणभंगुरंशरीरंत्यक्तवंतइत्याह। दधीचिप्रमुखाइति॥१४॥

वरंयाञ्चाधिकेपुंसिनिष्फलापिनचाधमे॥ सफलापिततस्त्वंमेयाचितोसिगुणाधिकः॥ १२॥ निर्ममोनिरहंकारोनीरागोऽसिमुनेयतः॥ नशरीरेतवाहंतानश्वरेक्षणभंगुरे॥ १३॥ अतोमेन श्वरंदेहिशिरस्त्वंकीर्तिमाप्नुहि॥ दधीचिप्रमुखाःसंतोज्ञात्वेदंनश्वरंवपुः॥ १४॥ परित्यज्य परार्थेतेतत्क्षणेक्षणभंगुरम्॥ लब्धवंतःपरांकीर्तिंनिष्कलंकांस्थिरांमुने॥ १५॥ नार्थोदेहेन भवतांकश्चिदस्तिनजीवने॥ नभोगेच्छाथवासाध्यंसतांलोकोपकारिणाम्॥ १६॥ दुस्त्यजं किंनुसाधूनामुदाराणांभवादृशाम्॥ शरणंमेभवस्वामिन्नित्युक्त्वापतितःक्षितौ॥ १७॥ इत्थ माकर्ण्यतद्वाक्यंशंकरःकरुणानिधिः॥ वैराग्यगर्भितंवाक्यमुवाचाथकपालिनम्॥ १८॥ प तिष्यतिस्वयंदेहःकालेनापिस्वकर्मणा॥ यद्यनेनतवार्थोऽपिसिद्ध्येत्तन्नःसमीहितम्॥ १९॥ तत्प्रयच्छाम्यहंतावत्समायातुरहोभवान्॥ यथाविदुर्नमेशिष्यायतस्तेषांप्रियोऽस्म्यहम्॥ २०॥

॥ १५॥ किंच। परमवैराग्यवतांभवतांकिमसाध्यमित्याह। नार्थइति॥ १६॥ १७॥ १८॥ १९॥ तदिति। कुतइत्यपेक्षाया माह। यथेति॥ २०॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

|| २१ || शारीरकार्येषुशरीरसंबंधिकर्त्तव्येषु || २२ || २३ || आजानसिद्धेननिसर्गसिद्धेन || २४ || २५ || २६ || २७ || जत्रुदे

इत्थंकापालिकःप्रोक्तोमुनिनाशंकरेणसः ॥ गतःस्वमाश्रमंभिक्षुंविज्ञायकरुणानिधिम् ॥ २१ ॥ एकदाशंकराचार्यशिष्येषुसकलेषुच ॥ स्वस्वशारीरकार्येषुतत्परेषुनिजाश्रमे ॥ २२ ॥ रहःसंस्थंमुनिंज्ञात्वाशंकरंकरुणाकरम् ॥ आगतोऽवसरेसोऽपिदांभिकःशंकरांतिके ॥ २३ ॥ बुद्धमाजानसिद्धेनसर्वंदांभिकचेष्टितम् ॥ पद्मपादेनयतिनागुरुभक्तिरतेनतु ॥ २४ ॥ पद्मपादःस्वकंदेहमाच्छाद्याचार्यसन्निधौ ॥ स्थितोऽसौनैवसंबुद्धोदांभिकेनाधमेनतु ॥ २५ ॥ शूलीत्रिपुंड्रसंपन्नःशिरोमालाविभूषितः ॥ शंकराग्रेसमागत्यसंस्थितःकालचोदितः ॥ २६ ॥ तंदृष्ट्वाशंकरोयोगीदेहत्यागेमनोदधौ ॥ आत्मन्यात्मानमाधायनिर्विकल्पसमाधितः ॥ २७ ॥ जत्रुदेशेसचिबुकंनिधायशममास्थितः ॥ तंतथाविधमालोक्यसवैकापालिकाधमः ॥ २८ ॥ तत्क्षणेशूलमुद्यम्यनिःशंकोहंतुमुद्यतः ॥ शूलहस्तंसमालोक्यपद्मपादःकपालिनम् ॥ २९ ॥ स्मरन्नृसिंहमागत्यगुरोरग्रेस्थितोभवत् ॥ सिद्धमंत्रंजजापात्मन्याधायात्मानमात्मना ॥ ३० ॥ मंत्रेणाराधितोदेवोनृसिंहोभक्तवत्सलः ॥ प्रादुर्भूतःक्षणेतस्मिन्दृष्ट्वाकापालिकाधमम् ॥ ३१ ॥ ददाराशुनखैर्दुष्टंहिरण्यकशिपुंयथा ॥ कुर्वन्नट्टाट्टहासंसंत्रासयामासभूतलम् ॥ ३२ ॥ ॥

शेअंससंधिप्रदेशेचिबुकमधरोष्ठाधःप्रदेशम् || २८ || २९ || ३० || ३१ || ३२ || || || ||

श्रुत्वाशब्दंतथाभूतंशिष्याःसर्वेसमागताः ॥ श्रीगुरुंशंकराचार्यंसमाधौददृशुस्ततः ॥ ३३ ॥ श्री
नृसिंहंसमालोक्यप्रणेमुर्भक्तिपूर्वकम् ॥ अन्योन्यंविस्मिताःसर्वेतऊचुर्जातसंभ्रमाः ॥ ३४ ॥
योगुरुःसर्वदेवानांयआत्मासर्वदेहिनाम् ॥ यईशःसर्वभूतानांकथंसोऽत्रसमागतः ॥ ३५ ॥ य
स्मिन्भक्तिंप्रकुर्वंतियतयःसंशितव्रताः ॥ नपश्यंत्यविलंबेनकथंनःसोऽक्षिगोचरः ॥ ३६ ॥ य
तःसर्वंप्रभवतिविश्वमेतच्चराचरम् ॥ येनजीवतियस्मिंश्चप्रलयंयातिसेश्वरम् ॥ ३७ ॥ यंविनो
न्मिषतीदंनोनजीवतिनचोपति ॥ यत्सत्तासत्यवत्सर्वंकरोत्युच्चावचंजगत् ॥ ३८ ॥ यंसमा
श्रित्यमुनयःसर्वज्ञाःसनकादयः ॥ आत्मारामाःसदाभक्तिंकुर्वंतिविगतस्पृहाः ॥ ३९ ॥ यन्ना
मश्रुतिमात्रेणमहामोहमृगःस्वतः ॥ पलायतेअहोभाग्यंसनोनयनगोचरः ॥ ४० ॥ ब्रह्मणः
सृष्टिकर्तृत्वंसंहर्तृत्वंहरस्यच ॥ यतःसभगवानद्यकथंनोदृष्टिगोचरः ॥ ४१ ॥ यस्मिन्स्मृते
ऽर्चितेध्यातेनुतेगीतेऽवलंबिते ॥ कामाद्यहृदिस्थानश्यंतिसंस्मृतेर्हेतवोऽपरे ॥ ४२ ॥ सोऽयंविष्णु
र्महातेजाब्रह्मादीनांपरोगुरुः ॥ अस्मद्दृग्गोचरोजातोनरसिंहःस्वयंप्रभः ॥ ४३ ॥ इत्थंस्तवंप्र
कुर्वंतःपप्रच्छुस्तेसनंदनम् ॥ आराधितःकथंविष्णुस्त्वयासौकरुणांबुधिः ॥ ४४ ॥ ॥



नमस्कृतेस्तुतेवाअवलंबितेशरणतयातेअपरेक्रोधादयः ॥ ४२ ॥ ४३ ॥ ४४ ॥ ॥ ॥ ॥

एवंपृष्टःसप्रत्याहपद्मपादोमुनीन्यतिः ॥ एकदाहमहोपूर्वबलाद्रिशिखरेस्थितः ॥ ४५ ॥ नर
सिंहंस्वमनसाशीलयन्ध्यानमास्थितः ॥ बहूनिमेऽप्यतीतानिदिनानिध्यानलीलया ॥ ४६ ॥
एकदाकश्चिदागत्यकिरातस्तत्रपृष्टवान् ॥ किमर्थंगह्वरेऽद्रेस्त्वंवससीतिसमांप्रति ॥ ४७ ॥
श्रुत्वातस्यकिरातस्यवचोऽहंप्रोक्तवानिति ॥ सखेश्रृणुयदर्थंमेवासोऽद्रेर्गह्वरेसदा ॥ ४८ ॥
आगलांतंनराकारंतदूर्ध्वंसिंहरूपिणम् ॥ मृगंलब्धुंवसाम्यत्रनतत्प्राप्तिरजायत ॥ ४९ ॥ एवंम
द्वाक्यमाकर्ण्यकिरातोममभाग्यतः ॥ तत्क्षणेश्रीनृसिंहाख्यंमृगंबद्धासमेपुरः ॥ ५० ॥ विनि
धायकिरातोऽथमामुवाचकृपानिधिः ॥ अयमेवमृगस्तुभ्यंरोचतेमुनिपुंगव ॥ ५१ ॥ श्रुत्वा
तस्यवचोदृष्ट्वानरसिंहंपरेश्वरम् ॥ विस्मितोभूवमंतस्तुवक्तुंनासंक्षमस्तदा ॥ ५२ ॥ स्वधिया
धैर्यमाश्रित्यवचोभिःश्रुतिगर्भितैः ॥ संस्तूयश्रीनृसिंहंतंपृष्टवानहमादरात् ॥ ५३ ॥ महर्षी
णामगम्यस्त्वंमनसापितपस्विनाम् ॥ कथंजातःकिरातस्यविवशोविस्मितोस्म्यहम् ॥ ५४ ॥
मद्विज्ञप्तिंसमाकर्ण्यमामाहपरमेश्वरः ॥ एकाग्रचित्तमाधायनृसिंहेमयिसर्वदा ॥ ५५ ॥ आ
राधितोयथानेनकिरातेनस्वयाधिया ॥ नतथाध्यानशीलैस्तैर्वेदविद्भिर्महर्षिभिः ॥ ५६ ॥

॥ ५० ॥ ५१ ॥ अंतर्मनसि ॥ ५२ ॥ ५३ ॥ ५४ ॥ एकाग्रचित्तमित्यस्योत्तरेणान्वयः ॥ ५५ ॥ आराधितोऽहम् ॥ ५६ ॥ ॥

॥ ५७ ॥ भवेत्भवति ॥ ५८ ॥ ५९ ॥ ६० ॥ सःभगवान् ॥ ६१ ॥ ६२ ॥ ६३ ॥ श्रीशमिति । श्रियःब्रह्मादिप्रार्थितकरुणाकटाक्षायामहालक्ष्म्याईशंनियंतारं तत्तद्भक्तप्रार्थिततत्तत्फलात्मिकश्रीप्रदंत्वामहंभजेसर्वात्मनाशरणंव्रजामि परमप्रेमास्पदत्वाद्भजनार्हस्त्वमित्याह । परमेष्टदेवमिति । सर्ववेदप्रतिपाद्यत्वात्तत्प्रवर्तकत्वाद्भक्तव्यसनहरणव्यापृतत्वाच्चत्वमेवभजनीयइत्याह । गोविंदमिति । अन्यथा

अतोस्यविवशोनित्यंकिंरातस्यप्रियोस्म्यहम् ॥ एवमुक्त्वान्नृसिंहोमामनुग्राह्यमुहुर्मुहुः ॥ ५७ ॥
वरंदत्वाथतत्रैवस्वयमंतर्धिमागतः ॥ तदारभ्यक्षणेनैवध्यातोदृष्टिपथोभवेत् ॥ ५८ ॥ तथैवाद्य
कृपासिंधुःश्रीनृसिंहोममेश्वरः ॥ मयाध्यातःक्षणेनैवभक्तिवश्यःसमागतः ॥ ५९ ॥ इत्येवंपद्म
पादस्यवृत्तांतंसर्वमादितः ॥ समाकर्ण्याथतेसर्वेनृसिंहैकपरायणाः ॥६०॥ अभवन्नथदेवोऽपिते
षांभक्तिंसमीक्ष्यसः ॥ जगर्जतेनशब्देनसमाधेर्विररामसः ॥ ६१ ॥ भगवाञ्शंकराचार्योनेत्रे
प्रोन्मील्यदैवतम् ॥ श्रीनृसिंहंददर्शाग्रेगर्जंतंभक्तवत्सलम् ॥ ६२ ॥ तद्दर्शनेनसंजातहर्षरोमोद्‌ग
द्गमस्तथा ॥ तुष्टाववरदंभक्त्यास्तोत्रेणानेनभाष्यकृत् ॥ ६३ ॥ श्रीशंभजेत्वांपरमेष्टदेवंगोविं
दमीशानमजंनृसिंहम् ॥ त्यक्त्वान्यबुद्धिंतनुदृश्यवृत्तिंस्वाराज्यमालंब्यपदंभवंतम् ॥ ६४ ॥

दंडप्रदातृत्वाच्चत्वमेवसेव्यइत्याह । ईशानमिति । त्वदन्यस्यसर्वस्यजन्मादिविकारवत्त्वात्त्वैवतद्विनिर्मुक्तत्वाच्चत्वमेवसर्वदोपास्यइत्याह । अजमिति । जीवात्माभिन्नत्वात्तद्बंधहारित्वाच्चत्वमेवतथाभूतइत्याह । नृसिंहमिति । त्वदन्यबुद्धित्यागपूर्वकंत्वत्पदावलंबनंविनासम्यक्भवद्भजनंनसंभवतीत्यतस्तथाभजामीत्याह । त्यक्त्वेति । अन्यबुद्धिं बुद्धिमित्यस्यविवरणंतनुदृश्यवृत्तिं अहंतास्पदायांतनौशरीरेममतास्प

देभोग्यजातेदृश्येयावृत्तिरहमयंममेदंभोग्यमितिवृत्तिस्तांतनुभूतामतिक्षुद्रांवादेहादिदृश्याकारां वृत्तिमितिवा तद्विष्णोःपरमंपदमितिश्रुत्यु
क्तंस्वाराज्यलक्षणंपरपदरूपंभवंतमालंब्यभजइत्यर्थः ॥ ६४ ॥ त्वद्भजनमेवसर्वानर्थनिवृत्तिपूर्वकपरमानंदाविर्भावलक्षणपरमपुरुषार्थकारण
मित्यन्वयंवक्तुंव्यतिरेकमाह । येत्वामिति । सुधर्मलभ्यंनिष्कामधर्मलभ्यं त्वदाराधनलक्षणनिष्कामकर्मपरित्यागएवत्वत्परित्यागइतिभा
वः । तेमोहेनाज्ञानेनवंचिताः स्वार्थाद्भ्रंशिताःसंतःसंसारवार्धौनिमग्नाउद्धारशंकाविनिर्मुक्ता यथाकेनचिद्दुर्दैवेनविषमोदकप्रदानेनवंचितो
मरणमूर्छायांनिमग्नोजीवनाशाविनिर्मुक्तस्तिष्ठतितद्वदित्यर्थः ॥ ६५ ॥ यइति । येतु हेनृसिंहभक्तजनबंधहारिन् भक्तास्त्वामाश्रयंते
आसमंतात्सर्वात्मनाभजंते सर्वभोगेश्वरत्वाद्विषयसुखमपितेषांदुर्लभंनभवतीत्याशयेनाह । ईश्वरमिति । मद्भक्तायांतिमामपीत्युक्तेस्तत्रा

येत्वांपरित्यज्यसुधर्मलभ्यंहीनांक्रियांभोगपरांश्रयंते ॥ तेवंचिताःस्वात्महनोमनुष्यामोहेन
संसारनिधौनिमग्नाः ॥ ६५ ॥ येत्वांनृसिंहेश्वरमाश्रयंतेभक्तिप्रियंस्वात्मसखंस्वमीड्यम् ॥
भक्त्यानतेषांपुनरावृतिःस्यान्मिथ्याभिमानैकसखीजनानाम् ॥ ६६ ॥ ॥ ॥

पिभक्तिरेवापेक्षिता नप्रतिमादियजनवद्बाह्यसामग्रीत्याशयेनाह । भक्तिप्रियमिति । पत्रंपुष्पंफलंतोयंयोमेभक्त्याप्रयच्छति ॥ तदहंभक्त्यु
पहृतमश्नामिप्रयतात्मनइत्युक्तेः । एतत्कुतइत्यतआह । स्वात्मसखमिति । द्वासुपर्णासयुजासखायावितिश्रुतेः । सर्वोऽपियोभेदस्तस्य
जीवकल्पितत्वादित्याशयेनाह । स्वमिति । स्वरूपभूतंनतुभिन्नं तर्हिभेदघटितसखित्वप्रतिपादनपरश्रुतेःकागतिरित्याशंक्य तस्यास्तद
नुवादेन अनश्नन्नन्योअभिचाकशीतीतिश्रुत्येश्वरस्वरूपप्रतिपादनपरतयातत्परत्वाभावादित्याशयेनाह । ईड्यमिति । ईड्यंस्तुत्यं । तेषां
त्वद्भक्तिलब्धज्ञानानांपुनरावरणंस्वस्वरूपविस्मरणंनैवस्यात् यतइयं अहंमनुष्यःकर्ताभोक्ता संसारीसुखीदुःखीत्यादिरूपमिथ्याज्ञानसखी
तद्व्यापकभूता । तथाच । व्याप्यनिवृत्त्याव्यापकनिवृत्तेर्युक्तत्वात्तदपिनभवतीत्याशयः । नष्टोमोहःस्मृतिर्लब्धात्वत्प्रसादान्मयाच्युतेत्यु

क्तेः। एतेषामेवजन्मसार्थकमितिध्वनयितुमाह। जनानामिति ॥ ६६ ॥ तथाचनिष्कामकर्मशुद्धस्वांतास्त्वदनुसंधानप्राप्तचित्तैकाग्र्याः स्वाभिन्नंत्वांनिदिध्यास्यसाक्षात्कृत्य परमात्मानंत्वामेवप्रविशंतीत्याह। त्वामिति। ब्रह्मवेदब्रह्मैवभवतीत्यादिश्रुतेः। एवंसततयुक्तानां भजतांप्रीतिपूर्वकम्। ददामिबुद्धियोगंतंयेनमामुपयांतिते। भक्त्यामामभिजानातियावान्यश्चास्मितत्त्वतः। ततोमांतत्त्वतोज्ञात्वावि शतेतदनंतरमित्यादिस्मृतेश्च। ननुकर्तृत्वाद्यभिमानवतां कथंतद्भिन्नमुक्तेप्रवेशः प्रवेशेवाकथंतत्संपर्कोपपत्तिः प्रवेशसाफल्यंचेत्याशंक्यत त्त्वज्ञानेनसमूलस्याभिमानस्यनिरस्तत्वान्नैवमित्याह। विगतेति। एतेनसुषुप्तिवत्प्रविष्टस्यापिपुनर्निःसरणापत्तिर्निरस्ता ॥ ६७ ॥ किं चसमस्तशास्त्रवेद्यस्त्वमेवेत्याह। यमिति ॥ ६८ ॥ पुरुषादीनांत्वत्तोविलक्षणत्वेतत्रतत्रनिरूप्यमाणंत्वत्सार्वात्म्यंव्याहन्येतेत्याशयेनाह।

त्वामात्मभूतंपुरुषाख्यमंतर्जिज्ञासवोद्वैतमलंविहाय ॥ बुद्ध्यानिदिध्यास्यपरंविशंतिश्रुत्यंतवे द्यंविगताभिमानाः ॥ ६७ ॥ यंसांख्यनिष्ठाःपुरुषंश्रयंतेपातंजलायत्रसमाधिमंतः ॥ यज्ञेषुयं कर्मपरायजंतेतंश्रीनृसिंहंसततंनमामः ॥ ६८ ॥ योभक्तवश्योऽसुरसूनुनोक्तोविष्णुःक्षितौवारि दिवीतिलोके ॥ स्तंभांतरात्प्रादुरभून्नृसिंहोलोकोत्तरंसर्वमयंतमीडे ॥ ६९ ॥ ॥ ॥

यइति। क्षितौजलेस्वर्गेऽतरिक्षेसर्वत्रविष्णुर्विष्णुमयंसर्वंजगदितिसर्वव्यापकत्वेनासुरसूनुनाप्रल्हादेनोक्तोविष्णुर्नृसिंहरूपेणस्तंभमध्यात्प्रा दुरभूत्तंसर्वोत्तमंसर्वमयमीडेस्तौमि भक्तवश्यस्यतदिच्छयाविर्भावोयुक्तइत्याशयेनोक्तंभक्तवश्यइति येभजंतितुमांभक्त्यामयितेतेषुचाप्य हमित्युक्तेः। जलेविष्णुःस्थलेविष्णुर्विष्णुःपर्वतमस्तके। ज्वालामालाकुलेविष्णुःसर्वंविष्णुमयंजगदित्युक्तत्वात्सर्वमयमित्युक्तं ननुतस्य सर्वरूपत्वेसर्वनाशेतन्नाशप्रसंगइत्याशंकानिरासायलोकोत्तरमित्युक्तंकल्पितस्याधिष्ठानाव्यतिरेकेप्यधिष्ठानस्यतद्व्यतिरेकादन्यथारज्जूरग बाधेरज्जुबाधप्रसंगादतएवतदनन्यत्वमारंभणशब्दादिभ्यइतिसूत्रेऽनन्यत्वशब्दप्रयोगइति ॥ ६९ ॥ ॥ ॥

भक्तिवश्यतामुपपादयन्नाह । यमिति । तेसर्वज्ञत्वादिगुणैःप्रसिद्धाब्रह्मादयःसर्वेभीतायंनमंतःप्रल्हादमुदारभक्तिंकोपोपशमार्थंसंप्रेषयामा
सुस्तमहंप्रपद्ये ॥ ७० ॥ इदमेवालोच्यबुद्धिमंतस्तवानुध्यानपरास्त्वांप्रविष्टाइत्याशयेनाह । यमिति । भावेनप्रेमलक्षणयाभक्त्या विशुद्ध
चित्ताध्यायंतश्चधियात्वत्प्रसादलब्धतत्त्वज्ञानेनयंस्वात्मतयाप्रविष्टाःस्वस्वरूपभजनंज्ञात्वाततःपृथक्त्वाभिमानवर्जिताजातास्तं श्रीनृसिंह
मानतोऽस्मि त्रिविधदेहाहंकारंपरित्यज्यपरमात्मानंस्वात्मत्वेनजानामीत्यर्थः ॥ ७१ ॥ वस्तुतःप्रत्यगात्मानस्तवस्वरूपभूताएवदेहाद्यभि

यंब्रह्मरुद्रादिसुराःसमस्ताभीतानमंतोऽसुरबालकंते ॥ संप्रेषयामासुरुदारभक्तिंकोपोपशांत्यै
तमहंप्रपद्ये ॥ ७० ॥ यंकालकालंपरमेश्वराख्यंध्यायंतिभावेनविशुद्धचित्ताः ॥ धीराधियास्वा
त्मतयाप्रविष्टास्तंश्रीनृकंठीरवमानतोऽस्मि ॥ ७१ ॥ यंप्रत्यगात्मानमनन्यभावादेहादिषु
स्वात्ममतिंविहाय ॥ आनंदबोधानुभवंश्रयंतेतंस्वात्मभूतंहरिमानतोस्मि ॥ ७२ ॥ पश्यंति
येत्वांसममात्मतत्त्वंभूतेषुसर्वेषुविलक्षणेषु ॥ सर्वाणिभूतानिसमेत्वयीशेगच्छंतितेधामपरंत्व
दीयम् ॥ ७३ ॥ तेसंतिधन्याभुविशांतचित्ताःप्राप्ताभवेऽस्मिन्पुरुषोत्तमाख्याम् ॥ येत्वांप्रियं
स्वात्मतयाहृदिस्थंपश्यंतिनान्यत्रजडेरमंते ॥ ७४ ॥ ॥ ॥ ॥

मानेनभेदमनुभवंतितदपगमेतुयुक्तंतेषांतथात्वमित्याशयेनाह । यमिति ॥ ७२ ॥ ब्रह्मविदाप्नोतिपरमित्यादिश्रुत्युक्तंमोक्षानन्यसाधनमद्वै
तज्ञानमेवेत्याशयेनाह । पश्यंतीति । सर्वभूतस्थमात्मानंसर्वभूतानिचात्मनि ईक्षतेयोगयुक्तात्मासर्वत्रसमदर्शनः । अविभक्तंचभूतेषु
विभक्तमिवचस्थितमित्युक्तेः ॥ ७३ ॥ नैवतस्यकृतेनार्थोनाकृतेनेहकश्चन । नहिज्ञानेनसदृशंपवित्रमिहविद्यते । इहैवतैर्जितःसर्गोयेषां
साम्येस्थितंमनइत्यादिवचनान्यनुसृत्यतेषांकृतार्थतामाविष्करोति । तेसंतिधन्याइति ॥ ७४ ॥ ॥ ॥ ॥

किंच। सत्यमिति। सत्यंज्ञानमनंतंब्रह्मेतिश्रुतेःपरंब्रह्मसत्यंकालत्रयाबाध्यं वाचारंभणंविकारोनामधेयमितिश्रुतेर्मिथ्यात्वंविनाविज्ञाननिवर्त्यत्वानुपपत्तेर्दृश्यत्वादित्यादियुक्तेश्च दृश्यंकालत्रयेऽपिनास्त्यतस्तत्त्वमस्यहंब्रह्मास्मीत्यादिश्रुत्युक्तोऽखंडैकरसःपरमानंदोहमस्मीतिधिया प्रमयाप्रतीतेसाक्षात्कृतेत्वयिवासुदेवेसर्वाधिष्ठानेसर्वात्मस्वप्रकाशस्वरूपेयेऽनिशंरमंतेतएवसज्जनाबंधनिवर्तकानत्वन्ये। योंतःसुखोंऽतराराम स्तथांतर्ज्योतिरेवयः। सयोगीब्रह्मनिर्वाणंब्रह्मभूतोऽधिगच्छतीतिस्मृतेः। नृलोकइदमेवकर्तुमुचितमितिसूचनायनृलोकइतिपदं॥७५॥

सत्यंपरंब्रह्मनदृश्यमस्तिब्रह्माहमस्मीतिधियाप्रतीते ॥ नित्यंरमंतेत्वयिवासुदेवेतेसज्जनाबंधहनोन्नृलोके ॥ ७५ ॥ दृष्टाद्भुतंरूपमलौकिकंतेद्याहंनमाम्यंतरितोऽस्मिहर्षैः ॥ बुद्ध्यागिरात्वांवपुषावरेण्यंध्यायन्गृणाम्याद्यनमामिनित्यम् ॥ ७६ ॥ अथप्रसन्नोभगवान्नृसिंहोऽकिंचनप्रियः ॥ वरान्दत्वासशिष्यायशंकरायात्मदर्शिने ॥ ७७ ॥ उवाचेदंमहाभागयतींद्रत्वत्कृतंस्तवम् ॥ येपठेयुःप्रियास्तेमेमुच्येरन्भवबंधनैः ॥ ७८ ॥ इत्युक्त्वांतर्बभूवेशोभाष्यकारस्यपश्यतः ॥ ततोहर्षमवाप्योच्चैःशंकरस्तत्रसंस्थितः ॥ ७९ ॥ वेदांतसंप्रदायस्ययथावृद्धिर्महीतले ॥ भवेत्तथैवचक्रेऽसौशंकरोलोकशंकरः ॥ ८० ॥ ॥ ॥ ॥

दृष्टेति। यतएवंभूतस्त्वमतोद्यतवाद्भुतमदृष्टपूर्वमकस्माद्दृश्यमानमलौकिकंनृसिंहात्मकंरूपंदृष्ट्वाहर्षैरंतर्नैवमामि त्वद्दर्शनोद्भूताहर्षावृत्तिविशेषारोमांचमिषाद्बहिरुत्प्लवंतइत्यर्थः। अतो हेआद्यसर्वकारणत्वात्सर्वोत्तमंत्वामेवनित्यंबुद्ध्याध्यायन्गिरागृणामि वपुषानमामीत्यर्थः ॥ ७६ ॥ अकिंचनाःसर्वसंग्रहविनिर्मुक्ताःप्रियायस्य तेषांवाप्रियः ॥ ७७ ॥ ७८ ॥ ७९ ॥ ८० ॥ ॥ ॥

हरिगुरूपचरणरतपद्मपादचरिततात्पर्यमाविष्करोति । विविधेति । विविधजन्मसमुदायैः संचितमुत्कृष्टं निष्कामं पुण्यमपि तत्तदा फलति य दा मनुष्यत्वं प्राप्य श्रौतमार्गे निविष्टो हरिगुरुपदभक्तः सन्पुरुषश्रेष्ठो दैवयोगाद्भवति चेत् । मोक्षं विना कथं तत्साफल्यमित्याशंक्याह । स्यादिति । यदैवंभूतो भवेत्तदा मुक्तिभागी स्यादित्यर्थः ॥ ८१ ॥ यो भैरवाख्यकापालिकं हतवान् श्रीनृसिंहद्वारा तस्य त्रिनेत्रावतारभूतस्य श्रीशंकरस्य मत मेव मुमुक्षुभिः स्वोद्धारार्थमालोचनीयमित्यपि सूचितमित्याशयेनाह । जगतीति । इह जगति श्रुतिमार्गमपि मौर्ख्यान्मूढैरन्यथाकृत्य विविधा मार्गाः

विविधभवसमूहैः संचितं पुण्यमुच्चैस्तदपि फलति दैवाच्चेन्मनुष्यत्वमाप्य ॥ भवति पुरुषसिंहः श्रौ तमार्गे निविष्टो हरिगुरुपदभक्तः स्यात्तदा मुक्तिभागी ॥ ८१ ॥ जगति विविधमार्गाः स्वस्वबुद्ध्यो पदिष्टाः श्रुतिपथमपि मूढैरन्यथाकृत्य मौर्ख्यात् ॥ कुपथमिह जनानां बंधकं संविचार्य त्रिनयन कृतभाष्यैस्तत्त्वमालोचनीयम् ॥ ८२ ॥ ॥ इति श्रीशांकरदिग्विजयसारे श्रीमन्मुकुंदपदा रविंदमकरंदरसाभिलाषिसदानंदाख्यविदुषा विरचिते दुष्टदमनार्थं नृसिंहाविर्भावो नाम दशमः सर्गः ॥ १० ॥ ॥ ॥ ॥ ॥ ॥

स्वस्वबुद्ध्योपदिष्टास्ततः कुपथं जनानां बंधकरमिति सम्यक् विचार्य त्रिनेत्रकृतभाष्यैस्तत्त्वं विचारणीयमित्यर्थः ॥ ८२ ॥ विश्वस्य सर्गस्थितिसं यमानां हेतुं स्वभक्ताघसुधूमकेतुं । दुर्लंघ्यसंसारपयोधिसेतुं हरिं भजेत्सर्वमलं विहातुं ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यबालगोपालतीर्थ श्रीपादशिष्यदत्तवंशावतंसरामकुमारसूनुधनपतिसूरिकृते शंकराचार्यविजयडिंडिमे दशमः सर्गः ॥ १० ॥ ॥ ॥

श्रीगणेशायनमः ॥ एवंश्रीनृसिंहाविर्भावंसपरिकरंनिरूप्याधुनाहस्तामलकादिप्रभावंनिरूपयितुमुपक्रमते । अथेति ॥ १ ॥ २ ॥ हरिहरा

अथप्रख्यातसत्कीर्तिःसशिष्यस्तीर्थभूमिकाः ॥ पर्यटन्नगमद्दिदृक्षुर्गोकर्णाख्यंशिवालयम् ॥ १ ॥ स्नात्वादृष्ट्वाशिवंसांबंस्तुत्वानत्वातिभक्तितः ॥ तिस्रोरात्रीर्निनायाथययौहरिहरालयम् ॥ २ ॥ विधिवद्दर्शनंकृत्वास्तुत्वाहरिहराभिधम् ॥ प्रतस्थेमार्गमाश्रित्यगच्छन्मार्गेऽथशंकरः ॥ ३ ॥ दृष्ट्वासौदंपतीपुत्रंव्यसुमंकेनिधायच ॥ रोदनंबहुकुर्वंतौकृपयेदंवचोऽब्रवीत् ॥ ४ ॥ माशोकं कुरुतंवत्सौनृसिंहोरक्षकोयतः ॥ एवमुक्त्वावचोबुध्यासस्मारन्नृहरिंयतिः ॥ ५ ॥ नृसिंहोरक्ष कइतियदावाणीमुखांबुजात् ॥ निर्गताशंकरस्याथक्षणेतस्मिन्व्यसुःशिशुः ॥ ६ ॥ समुत्था यतयोरंकात्स्थितःसुप्तप्रबुद्धवत् ॥ यतेरित्थंसमालोक्यचरितंपरमाद्भुतम् ॥ ७ ॥ तस्यस्तुतिं प्रकुर्वाणाजनाविस्मयमाययुः ॥ ततोमूकांबिकासद्मप्राप्यपूजांव्यधत्तसः ॥ ८ ॥ दिव्यैःस्तवै स्ततोदेवींचक्राधारप्रकाशकैः ॥ संस्तूयशंकरस्तत्रार्किंचित्कालंनिनायसः ॥ ९ ॥ श्रीवलीना मकंक्षेत्रंततोभिक्षुर्जगामह ॥ ददर्शब्राह्मणांस्तत्रकर्ममार्गेऽतितत्परान् ॥ १० ॥ यत्रासन्ब्राह्म णावेदपाठकाश्चाग्निहोत्रिणः ॥ द्विसहस्रपरीमाणामुख्याःशास्त्रविदांवराः ॥ ११ ॥ यत्रक्षेत्रेव सन्सांबःशिवोव्योम्नीवचंद्रमाः ॥ आल्हादयन्सतांचेतोराजतेस्माद्द्विजप्रियः ॥ १२ ॥ ॥

भिधंदेवं ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ ॥ ॥ ॥ ॥

॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ सपुत्रःपुत्रेणसहितः ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ ॥

यत्रप्रभाकरोविप्रोवेदवेदांगपारगः ॥ प्रवृत्तिशास्त्रनिरतोधनाढ्योन्यवसत्कृती ॥ १३ ॥ तस्य पुत्रोबभूवाथमेधावीब्रह्मवित्तरः ॥ अंतर्बुद्धोबहिर्मूर्खोबभौसजडमूकवत् ॥ १४ ॥ नावोचन्न शृणोत्किंचिन्नवेदंचाप्यपीपठन् ॥ प्रभाकरोऽपिचिंतार्तोभवदृष्ट्वाजडंसुतम् ॥ १५ ॥ उपायः कोऽस्तिलोकेऽस्मिन्येनायंपंडितोभवेत् ॥ अपुत्रत्वंवरंमूर्खपुत्रत्वंनेतिचिंतयन् ॥ १६ ॥ अथ तत्रागतंभिक्षुंशंकराचार्यनामकम् ॥ सर्वज्ञंसर्वशक्तिंचगुणानामाकरंपरम् ॥ १७ ॥ सशिष्यै स्तादृशैर्युक्तंवेदवेदांगपारगम् ॥ श्रुत्वाप्रभाकरोविप्रोहर्षनिर्भरमानसः ॥ १८ ॥ सुतंनीत्वां तिकेतस्ययययौपौरजनैर्वृतः ॥ सपुत्रोदूरतोदृष्ट्वाशंकरंदंडवद्भुवि ॥ १९ ॥ प्रणनामपुनस्तस्य पादयोर्निपपातह ॥ भाष्यकारस्यपादाब्जौगृहीत्वाभक्तिसंयुतः ॥ २० ॥ निधायबालशिर सिप्रणनामपुनःपुनः ॥ तस्यपुत्रोतिमेधावीब्रह्मानंदैकतत्परः ॥ २१ ॥ भगवत्पूज्यपादस्यपा दयोःपतितःक्षितौ ॥ नोदतिष्ठत्तदाभिक्षुःकृपयाविष्टमानसः ॥ २२ ॥ स्वहस्तेनतमुत्थाप्य स्वसमीपेन्यवेशयत् ॥ इत्थंदृष्ट्वाकृपाच्छन्नंशंकरंकरुणाकरम् ॥ २३ ॥ प्रभाकरःसविनयंप्रा हपुत्रस्यचेष्टितम् ॥ भगवन्नस्यवर्षाणिसंव्यतीयुस्त्रयोदश ॥ २४ ॥ नाध्यगीष्टप्रभोवेदान्क्री डतिस्मनबालकैः ॥ भुंक्तेकदाचिन्नोभुंक्तेभाषतेनैवकेनचित् ॥ २५ ॥ ॥ ॥

॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ प्रश्नद्वयोत्तरमाह । नेति । आदिपदेनदृश्यत्वादिकंग्राह्यं किंच मदायत्तक्रियोऽयंदेहादिर्जडोभवति ननु स्वतोऽजडस्यापितवजडस्यदेहादेर्दृश्यमानात्संबंधात्त्वयिजडत्वमस्त्वितिचेत्तत्राह । अलिप्तोहमिति । असंगोनहिसज्जतइत्यादिश्रुतिस्त स्माज्ज्ञानस्वरूपस्यनिरवधिमहिम्नोममवेदांतमहावाक्योत्थधियाब्रह्मानंदेविहरणमित्यर्थः ॥ ३० ॥ जडत्वव्यापकस्यबुद्ध्यादिभास्यत्व

नविघ्नोस्यांतरंवृत्तंयथावज्जडभावतः ॥ इत्युक्त्वापुत्रवृत्तांतंविररामप्रभाकरः ॥ २६ ॥ अथ श्रीशंकराचार्योबालंपप्रच्छयत्नतः ॥ कस्त्वंशिशोकिमर्थंवाजडवद्वर्तसेवद ॥ २७ ॥ इतिश्रुत्वा वचोभाष्यकारस्यमनसाशिशुः ॥ तंसंविज्ञायसर्वज्ञंसर्वब्रह्मविदांवरः ॥ २८ ॥ स्वानुभूतिवचां स्यद्धावेदांतार्थमयानिच ॥ ब्रह्मैक्यनिष्ठान्यात्मज्ञःप्रोवाचगुणसागरः ॥ २९ ॥ नवर्णोविप्रा द्योमयिनचजडत्वादिकलनाजडोयंदेहादिःप्रभवतिमदाधारचलनः ॥ अलिप्तोहंशुद्धोगगनइ वमेबोधवपुषोधियाब्रह्मानंदेनिरवधिमहिम्नोविहरणम् ॥ ३० ॥ नभास्योहंबुद्ध्यासुदृगपिनवा गादिकरणैर्मदायत्ताःसर्वेमतिवचनचक्षुःप्रभृतयः ॥ अवेद्यस्याखंडानुभववपुषोमेऽनवरतंधि याब्रह्मानंदेनिरवधिमहिम्नोविहरणम् ॥ ३१ ॥ ॥ ॥ ॥



स्यनिवृत्त्यातद्व्याप्यंमयिकथंस्थास्यतीत्याशयेनाह । नेति । मदधीनप्रकाशानांवागादींद्रियाणांमत्प्रकाशकतानुपपन्नेत्याशयेनाह । मदायत्ताइति । तस्मादेवंभूतस्यावेद्यस्यादृश्यस्यमम ॥ ३१ ॥ ॥ ॥ ॥ ॥

संसारेविहरणहेतूनामुपशांतत्वादपितत्रात्मन्येवविहरणमुचितमित्याशयेनाह । गताविति । अतएवतत्फलभूतौस्वर्ग[illegible]कावापिलयंप्राप्तौ । धर्माधर्मयोर्लयेकारणमाह । गताविति । तयोरपिदेहात्मबुद्धिप्रयुक्तत्वादपरिच्छिन्नात्मस्वरूपाभिमानवतःकथंतदवस्थानमित्याशयेनाह । उदारवपुषइति । एतदपिकुतइत्यपेक्षायामाह । विगलितेति । अतएवाज्ञानकल्पितभेदस्याभावात्तद्व्यावर्तकोऽभेदश्चप्रलयंगतइत्याह । गताविति । एवंभूतस्यमम ॥ ३२ ॥ तस्मात्स्वाध्यस्ताखिलासंस्पृष्टोनित्यज्ञानानंदस्वरूपोऽहमित्याह । अविद्येति । नन्वेवंतर्ह्याकाशाद यस्तत्रकथंप्रतीयंतइत्याशंक्याह । विवर्ताइति । विषमसत्ताकान्यथाभावरूपास्तस्माद्वस्तुतःसबीजानांतेषामभावात्संसारोऽपियस्मिन्नास्ति

गतौधर्माधर्मौलयमथगतौस्वर्गनरकौगतौरागद्वेषौप्रविलयमुदारात्मवपुषः ॥ गतौभेदाभेदौवि
गलितमहामोहतमसोममस्वात्मानंदेनिरवधिमहिम्नोविहरणम् ॥ ३२ ॥ अविद्याकामादिःप्र
भवतिनयत्रात्मनिपरेविवर्तायस्यैतेवियदनिलतेजोंब्ववनयः॥ नसंसारोयस्मिन्जनिमृतिमयो
दुःखनिबिडःसनित्योबोधात्मानिरवधिरहंसौख्यजलधिः ॥ ३३ ॥ अहंकारातीतोविषयविरहः
स्वात्मरसिकोनिराधारोज्योतिर्भ्रमरचितसंबंधरहितः ॥ श्रुतीनांसिद्धांतोऽपरिमितवपुःस्वानु
भवतःसनित्योबोधात्मानिरवधिरहंसौख्यजलधिः ॥ ३४ ॥ ॥ ॥

सनित्योबोधात्माहं वृत्तिज्ञाननिरासायोक्तंनित्यइतिपदं ॥ ३३ ॥ ननुब्रह्मस्वरूपस्यवस्तुतएवंभूतत्वेऽपि त्वं कथमेवंरूपइत्याशंक्यजीवत्वहेतुदो षानामभावादित्याह । अहंकारातीतइति । अतएवविषयविरहस्तन्ममताविनिर्मुक्तःस्वात्मानंदास्वादनतत्परःसर्वाधिष्ठानभूतत्वात्स्वेतराधा ररहितःस्वयंप्रकाशस्वरूपः । ननुप्रतीयमानेऽपिदेहादितादात्म्यसंबंधेकथमेवंवदसीत्याशंक्य तत्संबंधस्यभ्रांतिज्ञानोत्थत्वात्तस्यचनिवृत्तत्वा द्युक्तमेवंकथनमित्याशयेनाह । भ्रमेति । अहंब्रह्मास्मीत्यादिश्रुतीनांसिद्धांतपर्यवसानभूमिरपरिमितविग्रहःस्वानुभवेननतुवाङ्मात्रेण ॥ ३४ ॥

स्वानुभवंप्रकटयति । स्वतइति । यःस्वतःशुद्धोनत्वागंतुकशुद्धिमांस्तथास्वतएवबुद्धोनत्वागंतुकज्ञानवांस्तथैकरसपरानंदपूर्णःएवंस्वाध्य स्तधियांसाक्षीसाक्षाद्द्रष्टाअतएवांतःकरणवृत्तेरुत्पत्तिंनाशंचसर्वदावेत्ति तथाक्रियांतत्कर्तारंचिदाभासंविषयंशब्दादिरूपंचभासयतिजनि मद्भासकस्यापिजन्मनास्तीत्याशयेनाह । अजइति । ननुतत्तद्भासकतयानुभूयमानानांबुद्ध्यादीनांयद्ययंभासकस्तर्हितस्याप्यन्योभास कोभविष्यतीत्याशंक्यानवस्थाप्रसंगात्तदन्यस्याभावाज्ज्योतिषामपितज्ज्योतिरित्यादिवचनाच्चमैवमित्याशयेनाह । स्वयंज्योतिरिति । एवं

स्वतःशुद्धोबुद्धःसमरसपरानंदविततोधियांसाक्षीवृत्तेःप्रलयमुदयंवेत्तिसततम् ॥ क्रियायःकर्ता रंविषयमजआभासयतिंचस्वयंज्योतिःसोऽहंहृदयकमलार्कोऽस्मिसुखद ॥ ३५ ॥ यथार्कोने त्राणांनभसिगतएकोऽपिबहुधाप्रकाशंसंधत्तेयुगपदयमात्माखिलधियाम् ॥ हृदाकाशेस्थित्वा वयुनघनएकोऽपिजगतां तथाभानंधत्तेसचसुखघनात्माहमजडः ॥ ३६ ॥ ॥ ॥

भूतोयःसअहं नन्वंतःकरणतादात्म्यापन्नस्यतवकथंतद्रूपतेत्याशंक्य युष्मदस्मत्प्रत्ययगोचरयोस्तमःप्रकाशवद्विरुद्धस्वभावयोर्भास्यभासक योर्वास्तवतादात्म्यासंभवादज्ञानकल्पितस्यतस्यनिवृत्तत्वादित्याशयेनाह । हृदयेति । एवंबोधजन्यात्मानंदाविर्भावोऽपिसर्वात्मनःश्रीशं करस्यतवप्रसादादेवेतिध्वनयन्संबोधयति । हेसुखदश्रीशंकर ॥ ३५ ॥ सचप्रत्यगभिन्नःपरमात्माएवसर्वावभासकः । यथाप्रकाशयत्येकः कृत्स्नंलोकमिमंरविः । क्षेत्रंक्षेत्रीतथाकृत्स्नंप्रकाशयतिभारतेत्युक्तेरित्याशयेनाह । यथेति ॥ ३६ ॥ ॥ ॥

एवंसकलावभासकाभेदमभिधाय समस्तकारणाभेदमाविष्करोति। पुरेति। सदेवसोम्येदमग्रआसीदेकमेवाद्वितीयमित्यादिश्रुतेःअनिमि षोनिमेषादिकालविभागविनिर्मुक्तः तद्धेदंतर्ह्यव्याकृतमासीन्नासदासीन्नोसदासीदित्यादिश्रुतिमनुसृत्यस्वयमकलइतिपदद्वयव्यावर्त्यंदर्श यति नेति। नतेजः। तर्हितदभावेतमःस्यान्नेत्याह। नध्वांतमिति। नन्वभयाभावोऽप्रसिद्धइतिचेत्सत्यं तथापिप्रलयेस्वयंप्रकाशरूपेपरमात्मनि भूतानामभावेनभौतिकतेजस्तमसोरभावःसुसंपादःसत्वादिगुणापन्ननामरूपादिकृतिविनिर्मुक्तः कृतिशब्देनाकृतिर्वाग्राह्या एवंभूतःसृष्टेःपू र्वमासीत्ततःसृष्टिसमयेस्वाधीनांनतुस्वतंत्रां मायांतुप्रकृतिंविद्यान्मायिनंतुमहेश्वरं। दैवीह्येषागुणमयीमममायादुरत्ययेत्यादिश्रुतिस्मृत्युक्त मायासंज्ञांस्वशक्तिमखिलोपादानभूतामाश्रित्येदंससर्ज। प्रकृतिंस्वामवष्टभ्यविसृजामिपुनःपुनरित्युक्तेः। आश्रयणमपितत्सत्ताप्रदानरूप

पुरासृष्टेरेकःस्वयमकलआसीदनिमिषोनतेजोनध्वांतंगुणकृतिकलाख्यादिरहितः ॥ स्वशक्तिं मायाख्यामखिलजनिमाश्रित्यमहसाससर्जेदंयोऽसौसचसुखघनात्माहमजडः ॥ ३७ ॥ प्रि योवित्तात्पुत्रादसुतनुमतिभ्यःप्रियइतिश्रुतेर्युक्तेःसिद्धोह्यनुभववशात्सर्वजगताम् ॥ असंदिग्धो नित्योदृगविषयआत्माचलवपुर्यआनंदःसोऽहंनिरवधिशमज्ञानजलधिः ॥ ३८ ॥ ॥

मेवातोनतद्दोषसंसर्गाशंकेत्याशयेनोक्तंमहसासत्तास्फूर्त्यात्मकतेजसा । मयाध्यक्षेणप्रकृतिःसूयतेसचराचरमित्युक्तेः। नन्वेवंभूतसृष्ट्या दिकर्तुस्तदकर्तुश्चकथमभेदइतिचेन्नतत्कर्तृत्वादेर्मायिकत्वेनवास्तवाभेदाप्रतिबंधकत्वात्॥ ३७॥ आनंदाद्ध्येवखल्विमानिभूतानिजायंत इत्यादिश्रुत्याआनंदरूपस्यपरमात्मनोजगत्कारणत्वाभिधानात्प्रेयोवित्तादित्यादिश्रुतेश्चात्माआनंदरूपःपरमप्रेमास्पदत्वाद्व्यतिरेकेघटव दित्यादियुक्तेःपरमप्रेमास्पदतयानुभूयमानत्वाच्चप्रत्यगात्मनआनंदस्वरूपत्वनिर्धारणात्तयोरभेदएवफलतीत्याशयेनाह। प्रियइति। आनं दस्वरूपोजगतामात्माअयंवान्योवाहमयंनाहमितिकस्यापिसंशयविपर्ययाभावादसंदिग्धः। नन्वयमहमितिप्रत्ययोदेहविषयेदृश्यतेतथाच

कथमसंदिग्धआत्मेत्याशंक्याह। नित्यइति। सर्वास्ववस्थास्वेकरसस्यात्मनएवास्मिन्प्रत्ययगोचरत्वान्नतुप्रतिक्षणविनाशिनोदेहस्येत्यर्थः। नन्वस्त्वंतःकरणस्याहंप्रत्ययावगम्यतेत्याशंक्यतस्यापिदृश्यत्वेनविनाशितया नहिद्रष्टुर्दृष्टेर्विपरिलोपोविद्यतइत्यविनाशिदृक्स्वरूपइत्याह। दृगिति। अतएवाविषयः विज्ञातारमरेकेनविजानीयादितिश्रुतेः। अतएवाचलस्वरूपएवाहं शांतिज्ञानादिजलाकरइत्यर्थः॥ ३८॥ तस्मादेवंभूतोऽहंतत्त्वंपदवाच्यार्थोपाधिनिर्मुक्तेपरमात्मनिसर्वदारतिमानित्याह। नेति। करणमिंद्रियगणः आंध्यमज्ञानं विमतंविविधं

नदृश्यंनोद्रष्टानचकरणमांध्यंनविमतंनजीवोनोपाधिर्नचजनिमृतीनैवचजरा॥ नसृष्टिर्नोस्रष्टानचसुकृतपापेनमुदकेचिदानंदेयत्रानिशमिहममाक्रीडनमलम्॥ ३९॥ शिवाद्याःसर्वज्ञानिखिलमुनयोब्रह्मरसिकाविराजंतेयत्राचलनिजमहिम्निस्वरसतः॥ परेभूमानंदेसमरसपदेतत्रसततंविशालाक्रीडामेभवतिसुरवंद्यामृतमयी॥ ४०॥ यमाहुर्वेदांताःपरमपदमीशोऽपिवचनैरखंडंब्रह्माख्यंविधिमुखनिषेधैरविरतम्॥ सएवाहंबालोविधिहरिहरात्मातिविमलोनिजानंदेक्रीडन्विगतकलनोभ्रांतिरहितः॥ ४१॥ ॥ ॥ ॥

मतं उपाधिरंतःकरणचतुष्टयंपुण्यंपापंचतत्फलभूतेमुदकेसुखदुःखे॥ ३९॥ शिवादीनांक्रीडास्थानेयुक्तमेवक्रीडनमित्याशयेनाह। शिवाद्याइति। स्वरसतःपरमरतितः एवंभूताक्रीडादेवैरप्यवेद्येत्याह। विशालेति॥ ४०॥ तथाचलोकैरनुभूयमानोबालोऽपिविधिनिषेधमुखैर्वेदांतैर्भवद्वचनैश्चप्रतिपादितःपरमात्मैवाहं भ्रांतिविनिर्मुक्तत्वादित्याह। यमिति। सत्यंज्ञानमनंतंब्रह्म नेहनानास्तिकिंचनेत्यादिवेदांताः। ईशोभगवाञ्छ्रीकृष्णोऽपि उपद्रष्टानुमंताच नसत्तन्नासदुच्यतइत्यादिवचनैर्यमाह॥ ४१॥ ॥ ॥ ॥

निमित्तंमनश्चक्षुरादिप्रवृत्तौनिरस्ताखिलोपाधिराकाशकल्पः रविर्लोकचेष्टानिमित्तंयथायःसनित्योपलब्धिस्वरूपोऽहमात्मेत्यादिभिर्द्वादश

इतिभावार्थकैःश्लोकैर्मुनिर्द्वादशभिःस्वयम् ॥ स्वतत्वंवर्णयामासहस्तामलकसंज्ञकैः ॥ ४२ ॥
तदारभ्यमुनिर्लोकेप्राप्तोहस्तमलाभिधाम् ॥ ग्रंथोऽपितस्यतत्संज्ञांप्राप्तःसत्सुविराजते ॥ ४३ ॥
उपदेशंविनासम्यग्जातबोधःपरात्मनि ॥ बालकोदेशिकेंद्रोऽयमित्यंतश्चिंतयन्यतिः ॥ ४४ ॥
स्वकरंमस्तकेतस्यदत्वाप्रोवाचशंकरः ॥ अनेकजन्मसंसिद्धोबालोऽयंप्रतिभातिमे ॥ ४५ ॥
नोचेत्कथंपरब्रह्माद्वैतनिष्ठास्यसंभवेत् ॥ एकेनजन्मनापीत्थंसम्यक्सिद्धोऽत्रदुर्लभः ॥ ४६ ॥
प्रभाकरमुवाचेदंवचनंशंकरोयतिः ॥ बालस्यास्यमहत्त्वंतेदृष्टंभोद्विजसत्तम ॥ ४७ ॥ अयंसं
सारनिद्रातःप्रबुद्धोब्रह्मवस्तुनि ॥ अवाङ्मनसविषयानिष्ठास्त्यस्यमहात्मनः ॥ ४८ ॥ त्वया
सार्धंनिवासोऽस्यसंभवेन्नैवकर्हिचित् ॥ नवानेनतवाप्यर्थोजीवन्मुक्तेनभिक्षुणा ॥ ४९ ॥ ना
स्यकुत्रापिसंसक्तिर्नचाहंममतेद्विज ॥ असंगःशिशुरेवायंमहात्मास्तीतिविद्धिभोः ॥ ५० ॥
अहंपितास्यपुत्रोमेकथमेनंत्यजाम्यहम् ॥ इत्थंत्वयानकर्तव्योबालेऽस्मिन्नाग्रहोबुध ॥ ५१ ॥
समाकर्ण्ययतेर्वाक्यंशास्त्रवेत्ताप्रभाकरः ॥ पुत्रवृत्तांतमालोक्यधियासंचिंत्ययुक्तितः ॥ ५२ ॥
त्यक्त्वापुत्रमतिंतस्मिन्हस्तामलकसंज्ञके ॥ प्रणम्याथयतीशंस्वंगृहंविप्रैःसमाययौ ॥ ५३ ॥

भिः ॥ ४२ ॥ ४३ ॥ यतिःश्रीशंकरः ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ ॥

॥ ५४ ॥ शारदांबेतिसमाख्यांवहंती ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ चत्वारोवेदाःषडंगानिन्यायोमीमांसातर्कशास्त्रंपुराणमितिचतुर्दश ॥ ६३ ॥ सइति । सकलंमनसाक्रिययाजनितंसमवेक्ष्यविनाशितयातुजगत् । निरविद्यतकश्चिदतो





ततःश्रीशंकराचार्यःशिष्यैःपरिवृतोययौ ॥ शृंगाख्यंपर्वतश्रेष्ठंप्राप्यतत्रावसत्सुखम् ॥ ५४ ॥
तस्मिन्प्रकल्पयामासप्रासादमतिसुंदरम् ॥ शारदांतत्रसंस्थाप्यसशिष्यस्तांसमर्चयत् ॥ ५५ ॥
समाख्यांशारदांबेतिवहंत्यद्यापिपूजकान् ॥ वसंतीसापिशृंगेरपुरेरक्षतिसर्वदा ॥ ५६ ॥ कश्चि
च्छिष्योयतीशस्यगिरिर्नाम्नाभवत्सुधीः ॥ वीतरागोऽतिनिःसंगोगुरुभक्तोगुरुप्रियः ॥ ५७ ॥
दंतकाष्ठादिशुश्रूषांगुरोश्चक्रेसआदरात् ॥ गुरौतिष्ठतितिष्ठन्ससंप्रयातेव्रजन्यतिः ॥ ५८ ॥ नो
वाचानूच्यमानोऽसौगुरुपादरतिःसदा ॥ एकदाभाष्यपाठादौशांतिंकर्तुंसमुद्यताः ॥ ५९ ॥ पद्म
पादादयःशिष्यास्तानुवाचाथभाष्यकृत् ॥ स्थीयतांगिरिरप्यत्रक्षणादेष्यतिभक्तिमान् ॥ ६० ॥
इत्थंगुरोर्वचःश्रुत्वापद्मपादोऽब्रवीद्गुरुम् ॥ भाष्यार्थेसोऽतिगंभीरेमंदधीःकिंप्रतीक्ष्यते ॥ ६१ ॥
एवंश्रुत्वावचस्तस्यचिंतयामासशंकरः ॥ अहोगर्वोमहानस्यहर्तव्योऽद्यमयैवहि ॥ ६२ ॥ इत्थं
संचिंत्यमनसागिरिंविद्याश्चतुर्दश ॥ व्यादिदेशयतिःशक्तिपातेनैवस्वयंप्रभुः ॥ ६३ ॥ सोऽधि
गम्यगिरिर्विद्यांगुरोःकरुणयासुधीः ॥ संतुष्टावाथतत्रैवगुरुंभक्त्यामुदान्वितः ॥ ६४ ॥ ॥



निखिलादविनाशिकृतेननलभ्यमितीत्यादिभिर्वृत्तैः । इहतोटकमंबुधिसैःप्रथितमित्युक्तलक्षणैः ॥ ६४ ॥ ॥ ॥

॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥ हस्तामलकचरितसूचितमर्थमाविष्करोति । इहेति । संसारभूमौअत्रास्मिन्जन्मनिक
श्चिन्निजमतिविभवेनस्वात्मतत्वंजानाति कश्चित्तुश्रुतिगुरुमतिवाक्यैर्जानाति हिर्महतींप्रसिद्धिंद्योतयति वामदेवादीनांतथाभूतानांतत्रा

सातोटकाव्हयैर्वृत्तैःस्तुतिरद्यापितत्कृता ॥ महीतलेप्रसिद्धास्तिब्रह्मात्मैक्यपरायणा ॥ ६५ ॥ तस्यैवंवा
ग्विलासंतेपद्मपादादयोऽखिलाः ॥ श्रुत्वागर्वंपरित्यज्यपरंविस्मयमाययुः ॥ ६६ ॥ अहोगुरोःकृपाले
शोयस्यजातःसवाक्पतिः ॥ इत्येवंपद्मपादाद्यावदंतोगर्वतांजहुः ॥ ६७ ॥ गिरिंतोटकनामानंवदंत्यद्य
बुधाजनाः ॥ पद्मपादवदेवासौवाग्विलासेवभौगिरिः ॥ ६८ ॥ पद्मपादःसुरेशश्चगिरिर्हस्तामलस्तथा ॥
भाष्यकारस्यशिष्येषुचत्वारस्तेप्रथांगताः ॥ ६९ ॥ सनकाद्यायथालोकेयथावेदाऋगादयः ॥ यथाधा
तुर्मुखान्येवंवेदांतार्थेषुतेबभुः ॥ ७० ॥ इहबहुभवसिद्धोब्रह्मवेदांतसिद्धंजनिमृतिभयशून्यंप्रत्यगात्मा
द्वयंतत् ॥ निजमतिविभवेनस्वात्मतत्वंहिवेदश्रुतिगुरुमुनिवाक्यैःकश्चिदप्यत्रवेद ॥ ७१ ॥ निजमति
विभुशून्योवेदवेदांगशून्यःस्मृतिगतिबलहीनोभक्तिमांश्चेद्गुरौस्यात् ॥ सचभवतिमहात्मावेदवेदांगवे
त्तास्मृतिगतिमतियुक्तोब्रह्मवित्सर्ववंद्यः ॥ ७२ ॥ इतिश्रीशांकरदिग्विजयसारेश्रीमन्मुकुंदपदारविंद
मकरंदाभिलाषिसदानंदाख्यविदुषाविरचितेहस्तामलादिप्रभाववर्णननामैकादशःसर्गः ॥ ११ ॥

ख्यातत्वात् ॥ ७१ ॥ एवंचरितसूचितमर्थमावेदयति । निजेति ॥ ७२ ॥ ॥ इतिश्रीमत्परमहंसपरिव्राजकाचार्यबालगोपालतीर्थ
श्रीपादशिष्यदत्तवंशावतंसरामकुमारसूनुधनपतिसूरिकृतेश्रीमच्छंकराचार्यविजयडिंडिमेएकादशःसर्गः ॥ ११ ॥ ॥ ॥

श्रीगणेशायनमः ॥ एवंहस्तामलकादिप्रभावंप्रतिपाद्यभाष्यव्याख्यानप्रवृत्तिंसपरिकरांनिरूपयितुमुपक्रमते । अथेति ॥ १ ॥ २ ॥ कां



अथवेदविदांश्रेष्ठःसर्ववंद्यःसुरेश्वरः ॥ वार्तिकंसूत्रभाष्येऽसौकर्तुकामोधियायतिः ॥ १ ॥ शि
ष्यमध्येस्थितंवंद्यंगुरुंनत्वेदमब्रवीत् ॥ भगवन्करुणासिंधोस्वानंदामृतदायक ॥ २ ॥ गुरुपा
दाब्जशुश्रूषाशिष्याणांसाधुवर्त्मनाम् ॥ कर्तव्येतिममाप्यद्यकांचिदाज्ञप्तुमर्हसि ॥ ३ ॥ एवं
श्रुत्वावचस्तस्यसुरेशस्याब्रवीद्गुरुः ॥ धन्योऽसिप्रतिभायोग्यस्त्वंसुरेशोऽतिभक्तिमान् ॥ ४ ॥
त्वयाशारीरकेभाष्येकर्तव्यंवार्तिकंमहत् ॥ यथासूत्राणिभाष्यंचतथात्वंवार्तिकंकुरु ॥ ५ ॥ नि
र्मितंतद्यदारभ्यभाष्यंशारीरकेमया ॥ तदारभ्यममाप्येषकामआसीत्सुरेश्वर ॥ ६ ॥ कएवं
कोविदोलोकेप्रतिभायस्यनिर्मला ॥ क्षमाशारीरकेभाष्येवार्तिकंकर्तुमंजसा ॥ ७ ॥ समर्था
प्रतिभाभातितवेदानींममेहभोः ॥ कुरुत्वंवार्तिकंसाधोयुक्तिवाक्यार्थसुंदरम् ॥ ८ ॥ भाष्य
कारवचःश्रुत्वाहृष्टःसन्नब्रवीद्वचः ॥ सुरेशःश्रीगुरुंभक्त्याप्रणम्यासुंमुहुर्मुहुः ॥ ९ ॥ क्वशक्ति
स्तादृशीस्वामिन्भाष्यतात्पर्यबोधिनी ॥ तथापित्वत्कृपालेशाद्यथाशक्तियतेह्यहम् ॥ १० ॥
अस्त्वेवंगुरुणाप्रोक्तोनुज्ञामादायभक्तितः ॥ गतोऽतिहर्षसंपन्नःस्वस्थानेभूत्सुरेश्वरः ॥ ११ ॥
गतेतस्मिन्निदंवाक्यंसद्गुरुंचित्सुखादयः ॥ ऊचुःसंन्यासिनःसर्वेवदंतोऽन्योन्यमांतरम् ॥ १२ ॥

चित्शुश्रूषां ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ क्षमासमर्था ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ गतोभूत् ॥ ११ ॥ १२ ॥ ॥ ॥

॥ १३ ॥ १४ ॥ नहीति । कुतइत्याशंक्यवेदांतार्थस्यातिदुरूहत्वात्तस्यचातिकर्मजडत्वादित्याह । वेदांतार्थइति ॥ १५ ॥ १६ ॥ १७ ॥ ननुपूर्वमस्यैवंभूतत्वेऽपिनेदानींतथाशंकावकाशःसंप्रत्यस्मच्छिष्यत्वाक्रांतस्यास्मन्मतविरुद्धार्थोद्भावनाऽसंभवादित्याशंक्यपरिहरति । गु

भगवन्सर्वभावज्ञकिंचिन्नाविदितंतव ॥ किंचिद्विज्ञप्तुकामाःस्मोऽनुज्ञांसंप्रार्थयामहे ॥ १३ ॥
उच्यतामितितेसर्वैर्गुरुणोक्ताअथाब्रुवन् ॥ योऽयंप्रयत्नआरब्धःसुरेशाख्येनभिक्षुणा ॥ १४ ॥
नहितायकृपासिंधोप्रतिभातीतिनोमतिः ॥ वेदांतार्थेऽतिगंभीरेप्रवृत्तिस्तस्यनोचिता ॥ १५ ॥
श्रुतिस्मृतीतिहासेषुसंसिद्धंपरमेश्वरम् ॥ सर्वभूतनियंतारंकर्मठोयोनिराकरोत् ॥ १६ ॥ का
र्यान्वितेमताह्यस्यशब्दानांशक्तिराग्रहात् ॥ सिद्धेवस्तुनिनैवेतिकथंयोग्यःसवार्तिके ॥ १७ ॥
गुरोःपक्षंसमाश्रित्यमतमद्वैतमाश्रयेत् ॥ इदंचासंगतंभातिप्रत्यक्षंनोविरोधतः ॥ १८ ॥ मह
र्षिर्भगवान्व्यासोवेदांताब्जविभाकरः ॥ सर्ववेदस्यतात्पर्यंजगौब्रह्मणिकेवले ॥ १९ ॥ जैमि
निस्तस्यशिष्योऽपिसर्ववेदस्यकर्मणि ॥ तात्पर्यंसूत्रयामासविरुद्धंगुरुपक्षतः ॥ २० ॥ पुराणवे
दसंसिद्धंलयंद्वैपायनोब्रवीत् ॥ तद्विरुद्धमसौप्राहलयाभावंचजैमिनिः ॥ २१ ॥ ॥

रोरिति । विरोधतःवादेनपराजयंप्राप्यशिष्यत्वंप्राप्तस्यापिपूर्वस्थितविरोधाक्रांतचित्तत्वात् ॥ १८ ॥ किंच यद्यदाचरतिश्रेष्ठस्तत्तदेवेत रोजनइतिन्यायाद्यथाजैमिनिप्रवृत्तिस्तथातच्छास्त्रेकृताभ्यासस्यास्यापिभविष्यतीत्याशयेनाहुः । महर्षिरिति ॥ १९ ॥ २० ॥ २१ ॥

तथाचतयोर्यथामतभेदेवस्तुतोगुरुशिष्यभावोनास्तितथाभगवतोस्यचेत्याशयेनाहुः । मतेति ॥ २२ ॥ ब्राह्मंब्रह्माद्वैतंमतम् ॥ २३ ॥ प्रत्युत विपरीतमेवकरिष्यतीत्याहुः । कर्मण्येवेति ॥ २४ ॥ नन्विदानींतुस्वीकृतसंन्यासेइयंशंकानास्तीत्याशंक्याहुः । बुद्धिपूर्वमिति ॥२५॥



मतभेदेतयोरेवकथंस्याद्गुरुशिष्यता ॥ मतैक्येगुरुशिष्यत्वंभातिनःसुखदंगुरो ॥ २२ ॥ अत आजन्मनोनेनतिष्ठताकिलकर्मणि ॥ निबध्यतेमतंब्राह्मंकथंकिंकेनसंगतम् ॥ २३ ॥ कर्मण्ये वपरंभाष्यंप्रत्युतासौप्रयोक्ष्यति ॥ निर्णीतोऽर्थोनसंयोज्यःसंशयेनिर्निमित्ततः ॥ २४ ॥ बुद्धि पूर्वंनसंन्यासंव्यधत्तविजितोव्यधात् ॥ नविश्वासपदंभातिमतमेतस्यनोगुरो ॥ २५ ॥ कर्मा योग्याजनायेत्रसंन्यासेतेऽधिकारिणः ॥ एवंदुराग्रहोयस्यसयोग्योवार्तिकेकथम् ॥ २६ ॥ अ तःसनंदनःश्रीमान्योग्योऽसौश्रीमतांकृतौ ॥ वार्तिकंकर्तुमाजानसिद्धोवेदांतपारगः ॥ २७ ॥ पुरानोजाह्नवीपारेश्रीमतामाज्ञयामहान् ॥ दृष्टोऽस्यमहिमायेनपद्मपादाख्यतामगात् ॥ २८ ॥ यस्यसाक्षात्प्रसन्नोभूद्वरदोभक्तवत्सलः ॥ श्रीनृसिंहःसदैवास्यस्मृतोऽभ्येतिसमीपताम् ॥ २९ ॥ अथवायंमहाभागआनंदगिरिसंज्ञकः ॥ साक्षाद्बृहस्पतिर्भाष्येकर्तुंयोग्योस्तिवार्तिकम् ॥ ३० ॥ प्रसन्नाशारदायस्यसदैवास्तेसमीपगा ॥ भाष्येसद्वार्तिकंकर्तुंयोग्योऽसौसर्वथामुनिः ॥ ३१ ॥

तत्रैवंशंक्यतेवक्तुंये‍ऽन्येपंग्वादयोनराः । गृहस्थत्वंनशक्ष्यंतेकर्तुंतेषामयंविधिः । नैष्ठिकंब्रह्मचर्यंवापारिव्राजकतापिच । तैरवश्यंगृहीत व्यातेनादावेतदुच्यतइतिमतमनुसृत्येतिभावः ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ॥ ॥ ॥

॥ ३२ ॥ ३३ ॥ ३४ ॥ स्वयंतत्कर्तुमनाएवंवदतीत्यभिप्रायः सस्मितम् ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥

अथश्रीपद्मपादोऽपिगुरुमाहेदमादरात् ॥ भगवन्नार्यसद्बुद्धिर्वेदगुह्यार्थभास्करः ॥ ३२ ॥ श्रीमद्धस्तामलाचार्यःकर्तुंभाष्येत्रवार्तिकम् ॥ समर्थोयेनवेदांतसिद्धांतोदर्शितःपुरा ॥ ३३ ॥ यथाव्यासोहरिःसाक्षाद्यथाशंभुर्भवान्गुरो ॥ सूत्रभाष्यप्रणेतारौतथायंवार्तिकेक्षमः ॥ ३४ ॥ पद्मपादवचःश्रुत्वासस्मितंभाष्यकृज्जगौ ॥ सत्यमस्त्यस्यनैपुण्यंकिंतुनायंप्रवृत्तिभाक् ॥ ३५ ॥ पित्रानियोजितोबाल्येनपपाठाक्षराण्यसौ ॥ आचार्येणोपनीतोऽपिवेदान्नाध्यैष्टसर्ववित् ॥ ३६ ॥ अस्मत्समीपआगत्यपुरापृष्टोयदब्रवीत् ॥ वेदांतशास्त्रसिद्धांतरहस्यंतद्वचःश्रुतम् ॥ ३७ ॥ योऽसावद्वैतसौख्याब्धौनिमग्नःसततंधिया ॥ कथंसोयंप्रवर्तेतप्रबंधेऽतिमहत्तरे ॥ ३८ ॥ इत्थंगुरोर्वचःश्रुत्वाविनेयागुरुमब्रुवन् ॥ श्रवणादिविनाज्ञानंजातमस्यकथंगुरो ॥ ३९ ॥ तानुवाचगुरुर्वाक्यंश्रृणुध्वंभोतपस्विनः ॥ पुरासिद्धोभवत्कश्चिद्यमुनातीरमास्थितः ॥ ४० ॥ विरक्तःश्रौतविज्ञानसंपन्नोब्रह्मतत्परः ॥ योगसिद्धस्तपःसिद्धोविद्यासिद्धोऽभवन्मुनिः ॥ ४१ ॥ स्नानार्थंविप्रकन्याथकाचित्तत्रागताविधेः ॥ बालमंकेगृहीत्वाससिद्धोयत्रस्थितोभवत् ॥ ४२ ॥ बालंसिद्धसमीपेसानिधायाहमुनिंवचः ॥ रक्षणीयःक्षणंबालस्त्वयेत्युक्त्वाकुमारिका ॥ ४३ ॥

विधेः दैववशात् ॥ ४२ ॥ ४३ ॥ ॥ ॥ ॥ ॥ ॥ ॥

॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ हस्तेआमलकफलंयथास्फुटंप्रतीयते ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ५३ ॥ ५४ ॥ कुतइत्यत



सखीभिःसार्द्धमन्यत्रस्नानार्थंसागतातटे ॥ अत्रांतरेपतन्नद्यांदैवाद्बालोममारह ॥ ४४ ॥ सा सखीभिःसहप्राप्तामृतंबालंददर्शह ॥ विललापातिदीनार्तासखीभिःसहकन्यका ॥ ४५ ॥ तदा कर्ण्यमुनिस्त्वंतःकृपयार्द्रीबभूवसः ॥ स्वशरीरंपरित्यज्यप्रविवेशशिशोस्तनुम् ॥ ४६ ॥ उ त्थितंबालकंदृष्ट्वाकन्याहर्षवशादमुम् ॥ गृहीत्वाशीघ्रमुत्थायसासखीभिर्गृहंययौ ॥ ४७ ॥ सो ऽयंसिद्धोविदांश्रेष्ठोगतोहस्तामलाभिधाम् ॥ वामदेववदेवास्यविज्ञानंश्रवणंविना ॥ ४८ ॥ पूर्वा भ्यासवशात्सिद्धंनातःशंकावकाशगा ॥ हस्तामलवदेवास्यसिद्धांतःसमुपस्थितः ॥ ४९ ॥ सा मर्थ्यमस्यविज्ञातंसर्ववेदांतवार्तिके ॥ संप्रवृत्तौतथाप्यस्यरुचिर्नातःप्रजायते ॥ ५० ॥ सुरेशः सर्ववित्कर्तुंभाष्येसद्वार्तिकंक्षमः ॥ भवद्भयोरोचतेनास्यकृतंसद्वार्तिकंत्वहत् ॥ ५१ ॥ अनभी ष्टंबहूनांयत्कारयिष्येकथंन्वहम् ॥ पद्मपादःकरोत्वेकंसूत्रभाष्येनिबंधकम् ॥ ५२ ॥ वार्तिकं तुनकर्तव्यंसुरेशायप्रतिश्रुतम् ॥ सचेन्नकर्तातर्ह्यन्योविदधातुकथंन्विति ॥ ५३ ॥ शिष्याने वंसमादिश्यशंकरोरहसिस्थितः ॥ उवाचाथसुरेशंभोमाकृथाभाष्यवार्तिकम् ॥ ५४ ॥ नरु चिश्चित्सुखादीनांवार्तिकेत्वत्कृतेयतः ॥ कुशलःपूर्वकांडेसौभाष्यंसंयोक्ष्यतेऽन्यथा ॥ ५५ ॥

आह । नेति । किमर्थमित्यपेक्षायामाह । कुशलइति ॥ ५५ ॥ ॥ ॥ ॥ ॥

किंचनास्तिसंन्यासइतितवमतंस्मृत्वैवैवंशंकमानाजाताइत्याह । इत्येवमिति ॥ ५६ ॥ अतस्तेषांप्रतीत्यर्थंत्वमादावेवंकुर्वित्याह । अतइ
ति ॥ ५७ ॥ निष्कर्मगोचरांब्रह्मविषयां ॥ ५८ ॥ ५९ ॥ ६० ॥ स्वचेतसिचिरकालादभीष्टमासीत् ॥ ६१ ॥ येविघ्नंचक्रुःससुरेश्वर

इत्येवंशंकमानास्तेचित्सुखाद्याःसदात्वयि ॥ नास्तिसंन्यासइत्यादिमतंस्मृत्वातवैवहि ॥ ५६ ॥
अतआदौस्वयंग्रंथंब्रह्माद्वैतपरंसकृत् ॥ कृत्वाप्रदर्शयत्वंनोयथैषांप्रत्ययोभवेत् ॥ ५७ ॥ ततो
नैष्कर्म्यसिद्धिंसकृत्वानिष्कर्मगोचराम् ॥ गुरवेदर्शयामासशोधयित्वासुरेश्वरः ॥ ५८ ॥ भा
ष्यकारोपितंग्रंथंपूर्वापरविभागशः ॥ निरवद्यंसमालोच्यदर्शयामासहर्षतः ॥ ५९ ॥ शिष्ये
भ्यस्तेऽपिनिर्दुष्टंग्रंथंदृष्ट्वाविचार्यच ॥ सर्वेभ्योमेनिरेश्रेष्ठंसुरेशंग्रंथकारकम् ॥ ६० ॥ भाष्य
कारोब्रवीच्छिष्यानहोभाष्येनवार्तिकम् ॥ जातंसम्यगभीष्टंमेचिरादासीत्स्वचेतसि ॥ ६१ ॥
इत्युक्त्वाभूद्गुरुस्तूष्णींततःप्राहसुरेश्वरः ॥ वार्तिकेक्रियमाणेयेविघ्नंचक्रुःसतान्प्रति ॥ ६२ ॥ सू
त्रभाष्येनकर्तव्यंवार्तिकंकेनचिद्यदि ॥ कृतंमहीतलेतर्हिप्रसरेन्नकदापितत् ॥ ६३ ॥ एवंशशा
पमुनिराट्पुनराहगुरुंप्रति ॥ नचख्यात्यैनलाभायनिबंधोरचितोमया ॥ ६४ ॥ नोल्लंघनीयमा
चार्यवचनंचेत्यतःकृतः ॥ गृहीत्वेयत्स्वभावोस्तितत्स्वभावोजनोनहि ॥ ६५ ॥ ॥

स्तान्प्रतिउवाच ॥ ६२ ॥ यदिकेनचित्कृतं ॥ ६३ ॥ ६४ ॥ नेति । यद्युक्तंकुशलइत्यादितत्राह । गृहित्व इति ॥ ६५ ॥ ॥

तामाह बाल्यइति। तंपुरुषं ॥ ६६ ॥ ६७ ॥ बंधेयन्मनस्तदेवगृही मोक्षेयन्मनस्तदेवमस्करीयतिः ॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ ॥



ज्ञानवैराग्यसंयुक्तोह्यन्यथातिप्रसंगता ॥ बाल्येयद्बालभावत्वंतत्किंयूनिप्रयातितम् ॥ ६६ ॥ अज्ञत्वेयत्स्वभावोसौकिंतज्ज्ञत्वेसएववा ॥ अन्यथाशास्त्रजन्योयंबोधोऽव्यर्थोभवेन्नृणाम् ॥ ६७ ॥ मनएवगृहीबंधेमनोमोक्षेस्तिमस्करी ॥ तस्मान्नैवस्वभावानांनियतिःकालतःक्वचित् ॥ ६८ ॥ भवत्पादंसमालंब्यकृतंसंन्यसनंमया ॥ तत्त्वोपदेशतोज्ञातंस्वात्मतत्त्वंयथार्थतः ॥ ६९ ॥ न्यायशास्त्रादिशास्त्रेषुनिबंधाबहवःकृताः ॥ इतःपरंमनीषामेभवत्पादनिषेवणे ॥ ७० ॥ इत्युक्त्वोपरतंशिष्यमुवाचवचनंगुरुः ॥ सत्यमुक्तंत्वयावत्सममाज्ञापालकोभवान् ॥ ७१ ॥ तैत्तिरीयकभाष्येत्वंवार्तिकंकुरुसुंदरम् ॥ बृहदारण्यभाष्येथद्वितीयंवार्तिकंकुरु ॥ ७२ ॥ उभयत्रनिबंधौद्वौकृत्वाकीर्तिंत्वमाप्नुहि ॥ माशंकिपूर्ववद्विघ्नंमद्वाक्यंशरणंकुरु ॥ ७३ ॥ पुरस्कृत्यगुरोराज्ञामुभयत्रसवार्तिकम् ॥ कृत्वाप्रदर्शयामासगुरवेशंकरायतत् ॥ ७४ ॥ प्रसन्नंचातिगंभीरंपदवाक्यार्थसुंदरम् ॥ दृष्ट्वातद्भाष्यकारोंतर्हर्षमापविचारतः ॥ ७५ ॥ ततःसनंदनोप्याज्ञामादायगुरुतोयतिः ॥ टीकांशारीरकेभाष्येकृत्वाबह्वर्थगर्भिताम् ॥ ॥ ७६ ॥ गुरवेदर्शयामाससोप्यालोच्यमुरेश्वरम् ॥ आहपंचास्यचरणाःप्रथिताःस्युर्नचाधिकम् ॥ ७७ ॥ तत्रापिब्रह्मनिष्ठंयत्स्पष्टंसूत्रचतुष्टयम् ॥ जानीहिनिश्चयंतस्यप्रचारोभवितायते ॥ ७८ ॥ ॥

नन्नुपूर्ववत्पुनरपितेविघ्नंकरिष्यंतीतिचेत्तत्राह। मेति ॥ ७३ ॥ ७४ ॥ ७५ ॥ ७६ ॥ ७७ ॥ ७८ ॥ ॥ ॥

॥ ७९ ॥ ८० ॥ ८१ ॥ ८२ ॥ ८३ ॥ ८४ ॥ भाष्येभाष्येप्रतीतिप्रतिभाष्यं ॥ ८५ ॥ ८६ ॥ श्रुतीति । जनानामोक्षहेतुंश्रुतिविषयस्यब्रह्मणोविचारंभाष्यसमूहैर्यतिवर्यइहलोकेप्रसाध्यपुनरपिसधीरोविनेयैःशिष्यैः स्वजनगणहितार्थंवार्तिकादिप्रचारंकारयामास ॥ ८७ ॥ इदंकृ

एकांतेपुनराहेदंसुरेशंप्रतिभाष्यकृत् ॥ प्रारब्धकर्मणात्वंवैपुनर्वाचस्पतिर्बुधः ॥ ७९ ॥ भूत्वाथभाष्यसट्टीकांविधास्यसिममप्रियाम् ॥ साचैववार्तिकस्थानापन्नाटीकाभविष्यति ॥ ८० ॥ सुरेश्वरंसमाधायपुनरन्यान्यतीश्वरान् ॥ आनंदगिरिमुख्यान्ससमाधातुंहिभाष्यकृत् ॥ ८१ ॥ सर्वानाज्ञापयामासकुरुध्वंभोयतीश्वराः ॥ सूत्रभाष्यादिभाष्येषुनिबंधान्ब्रह्मतत्परान् ॥ ८२ ॥ गुरोराज्ञांसमादायानंदगिर्यादयोबुधाः ॥ निबंधांश्चक्रिरेब्रह्माद्वैतनिष्ठावभासकान् ॥ ८३ ॥ सूत्रभाष्यादिभाष्येषुगूढार्थस्यावबोधिकाः ॥ कृत्वानंदगिरिष्टीकादर्शयामासशंभवे ॥ ८४ ॥ भाष्यकारोपितट्टीकाःप्रतिभाष्यंविलोक्यच ॥ आहानंदगिरिंधन्यःकृतार्थोऽसीतिहर्षतः ॥ ८५ ॥ सन्निबंधांस्ततःकृत्वावेदांतेचित्सुखादयः ॥ गुरुवेदर्शयामासुःशोधयित्वातआदरात् ॥८६॥ श्रुतिविषयविचारंभाष्यवर्गैःप्रसाध्यस्वयमिहयतिवर्योमोक्षहेतुंजनानाम् ॥ पुनरपिसविनेयैर्वार्तिकादिप्रचारंसुजनगणहितार्थंकारयामासधीरः॥८७॥ अतिगहनपदार्थोब्रह्मविद्भिर्मिलित्वासततमिहविचार्यःसूत्रवेदांतभाष्यैः॥ पुनरनुभवसिद्ध्यैवार्तिकादीनिवीक्ष्यामलसुखपरमात्माज्ञायतांवस्तुबुद्ध्या ॥८८॥ इतिशांकरदि०भाष्यप्रबंधनिर्माणंनामद्वा०॥१२॥

त्वामुमुक्षून्प्रत्याचार्यैर्यदुक्तंतदाह । अतीति ॥ ८८ ॥ इतिश्रीशांकरविजयडिंडिमौद्वादशःसर्गः ॥ १२ ॥ ॥ ॥

श्रीगणेशायनमः ॥ एवंनैष्कर्म्यादिनिबंधप्रवृत्तिमुपवर्ण्य पद्मपादतीर्थयात्राप्रार्थनादिकमुपवर्णयितुमुपक्रमते । अथेति ॥ १ ॥ २ ॥ ॥ ३ ॥ विनिर्वर्त्यकृत्वा ॥ ४ ॥ व्यवसायोनिश्चयः ॥ ५ ॥ क्षुताक्षुधयाप्रकर्षेणपीडनम् ॥ ६ ॥ वस्तुनिपरब्रह्मणि ॥ ७ ॥ किंच त



अथश्रीशंकराचार्यंपद्मपादःकृतांजलिः ॥ कदाचित्प्रार्थयामासगुरुंभक्त्यायतीश्वरः ॥ १ ॥ भगवन्करुणासिंधोबोधपद्मप्रभाकर ॥ भवत्पादंसमाश्रित्यकृतार्थोऽहंनसंशयः ॥ २ ॥ कदा चित्तीर्थयात्रार्थंसंकल्पोजायतेहृदि ॥ गुरूणांचरणांभोजंत्यक्तुंनोत्सहतेमनः ॥ ३ ॥ संकल्प विनिवृत्त्यर्थमाज्ञास्याच्छ्रीमतांयदि ॥ तीर्थयात्रांविनिर्वर्त्यायास्यामिगुरुसन्निधौ ॥ ४ ॥ प द्मपादस्यविज्ञप्तिंसमाकर्ण्याहशंकरः ॥ पद्मपादसमीचीनोव्यवसायस्त्वयाकृतः ॥ ५ ॥ किंतु विक्षेपकारित्वंयात्रायानविचारितम् ॥ प्रातरुत्थायगमनंमध्याह्नेक्षुत्प्रपीडनम् ॥ ६ ॥ श्रमे णवस्त्वनभ्यासोध्यानस्यावसरःकुतः ॥ सतांसमागमस्तत्रयात्रायांदुर्लभोभवेत् ॥ ७ ॥ गुरुः क्षेत्रंजलंतस्यपादौतस्योपदेशजा ॥ दृष्टिरेवहिदेवानांदर्शनंसमुदाहृतम् ॥ ८ ॥ गुरुवाक्यंस माकर्ण्यपुनराहसनंदनः ॥ सत्यमित्थंगुरोकिंतुतीर्थयात्रांविनामम ॥ ९ ॥ अतितीव्रातदुत्कं ठानैवशाम्यतिचेतसि ॥ सुखदुःखेतुसर्वत्रनरोदैवाद्भुनक्तिहि ॥ १० ॥ ॥ ॥

वत्वत्रैवसर्वमस्तीत्याह । गुरुरिति । गुरुरेवक्षेत्रंकुरुक्षेत्रादिक्षेत्रं तस्यगुरोश्चरणौजलं तस्यगुरोरुपदेशाज्जातादृष्टिर्ब्रह्मसाक्षात्कारएवदेवानां दर्शनम् ॥ ८ ॥ ९ ॥ अतीति । यदुक्तंकिंत्वित्यादितत्राह । सुखदुःखइति ॥ १० ॥ ॥ ॥ ॥

यदुक्तंश्रमेणेत्यादितत्राह। ब्रह्मेति। यदुक्तंगुरुरित्यादितत्राह। हृदीति॥ ११॥ १२॥ १३॥ शिष्यैःसह॥ १४॥ १५॥ १६॥ १७॥

ब्रह्मानंदेनिमग्नानांसमाधानंसदासताम्॥ हृदियस्यगुरुस्तस्यसदैवगुरुदर्शनम्॥ ११॥ इत्थं शिष्यवचःश्रुत्वाभाष्यकारोऽब्रवीद्वचः॥ यदाग्रहस्तवास्त्यत्रनमयापिनिवार्यते॥ १२॥ स ज्जनैरेवगंतव्यंसज्जनाःसुखयंतिहि॥ संतःसंतिनिजानंदमग्नाःसंतापनाशकाः॥ १३॥ इत्थं गुरोर्वचःश्रुत्वातंप्रणम्यसनंदनः॥ प्रतस्थेतीर्थयात्रार्थंमार्गमाश्रित्यशिष्यकैः॥ १४॥ शंक रोपिसुरेशाद्यैःशिष्यैःश्रृंगगिरौवसन्॥ कियंतमनयत्कालमात्मारामोविदांवरः॥ १५॥ ए कदैकांतमाश्रित्यसमाधौनिश्चलःस्थितः॥ स्वमातुश्चिंतनंज्ञात्वायोगशक्त्याथशंकरः॥ १६॥ तत्क्षणेव्योममार्गेणगतोऽसौमातुरंतिके॥ मातरंवीक्ष्यहर्षेणप्रणनाममुनिस्ततः॥ १७॥ सा पिवीक्ष्यचिरात्प्राप्तंपुत्रंब्रह्ममयंमुनिम्॥ संतापंसंपरित्यज्यहृष्टचित्ताबभूवह॥ १८॥ असं गोवीतरागोऽपिसर्वत्रसमदृङ्मुनिः॥ शंकरोऽतिदयालुत्वादब्रवीन्मातरंवचः॥ १९॥ मात र्देविनमस्तुभ्यंब्रूहिकिंकरवाणिते॥ ऐहिकंवांछितंदेयंकिंवामुष्मिकमेवते॥ २०॥ इत्थंपुत्र वचःश्रुत्वावाक्यंप्राहातिहर्षतः॥ दिष्ट्यादृष्टोऽसिमेपुत्रकुशलीयतिरूपधृक्॥ २१॥ अस्यां दशायांतेपुत्रदर्शनंदुर्लभंमम॥ दिष्ट्याप्राप्तमतःकृत्यंपरंयत्तद्वदस्वयम्॥ २२॥ ॥

॥ १८॥ १९॥ २०॥ २१॥ अस्यामिति। दिष्ट्याभद्रंजातं अतस्त्वद्दर्शनात्परंकृत्यंममास्तिचेत्त्वमेवमेवदेत्याशयेनाह। अतइति॥ २२॥

जीर्णकलेवरंपुत्रवोढुंशक्नोमिनेदृशम् ॥ संस्कृत्येदंयथाशास्त्रंसुगतिंप्रापयस्वमाम् ॥ २३ ॥
मातुरित्थंवचःश्रुत्वाब्रह्माद्वैतमुपादिशत् ॥ सापरंब्रह्मविज्ञानंश्रुत्वाहात्रनमेगतिः ॥ २४ ॥ नि
शम्यवचनंमातुःसतुष्टावमहेश्वरम् ॥ तत्क्षणेप्रमथाञ्छंभुःप्रेषयामासहर्षतः ॥ २५ ॥ पिनाक
शूलहस्तांस्तान्भस्मनालंकृताकृतीन् ॥ दृष्ट्वाप्राहसतीपुत्रंनेष्टोममशिवालयः ॥ २६ ॥ तत्र
नैवानुगच्छेयंयांतुशीघ्रंयथागताः ॥ प्रमथाःशंभुलोकंस्वंममेष्टोहरिरव्ययः ॥ २७ ॥ शंख
चक्रगदापद्मवनमालाविभूषितः ॥ श्रीवत्सवक्षाःश्रीवक्षाःकृष्णोमेप्राणवल्लभः ॥ २८ ॥ एवं
मातुर्वचःश्रुत्वाविसृज्यशिवपार्षदान् ॥ नारायणंहरिंकृष्णंध्यात्वातुष्टावशंकरः ॥ २९ ॥ स्तो
त्रेणानेनमेधावीश्रीकृष्णंस्वात्मनःप्रियम् ॥ यस्यश्रवणमात्रेणकृष्णेभक्तिःप्रजायते ॥ ३० ॥
श्रियाश्लिष्टोविष्णुःस्थिरचरगुरुर्वेदविषयोधियांसाक्षीशुद्धोहरिरसुरहंताब्जनयनः ॥ गदीशं
खीचक्रीविमलवनमालीस्थिररुचिःशरण्योलोकेशोममभवतुकृष्णोऽक्षिविषयः ॥ ३१ ॥ यतः
सर्वंजातंवियदनिलमुख्यंजगदिदंस्थितौनिःशेषंयोऽवतिनिजसुखांशेनमधुहा ॥ लयेसर्वंस्व
स्मिन्हरतिकलयायस्तुसविभुःशरण्योलोकेशोममभवतुकृष्णोऽक्षिविषयः ॥ ३२ ॥ ॥

असूनिति। असून्प्राणान्सुकरणैश्चित्तनिरोधासाधारणकारणैः ॥ ३३ ॥ पृथिव्यामिति। यःपृथिव्यांतिष्ठन्पृथिव्याअंतरोयंपृथिवीनवे
दयस्यपृथिवीशरीरंयःपृथिवीमंतरोयमयतीत्यादिवेदोयंनियंतारंवदति ।। ३४ ॥ महेति। कृशानुरग्निः आदिपदेनवाय्वादयोग्राह्याः। तथा
चकेनोपनिषदिव्याख्यायते। ब्रह्महदेवेभ्योविजिग्ये तस्यहब्रह्मणोविजयेदेवाअमहीयंत तऐक्षंतास्माकमेवायंविजयोस्माकमेवायंमहिमे

असूनायम्यादौयमनियममुख्यैःसुकरणैर्निरुध्येदंचित्तंहृदिविलयमानीयसकलम् ॥ यमीड्यं
पश्यंतिप्रवरमतयोमायिनमसौशरण्योलोकेशोममभवतुकृष्णोऽक्षिविषयः ॥ ३३ ॥ पृथिव्यां
तिष्ठन्योयमयतिमहींवेदनधरायमित्यादौवेदोवदतिजगतामीशममलम् ॥ नियंतारंध्येयंमु
निसुरनृणांमोक्षदमसौशरण्योलोकेशोममभवतुकृष्णोऽक्षिविषयः ॥ ३४ ॥ महेंद्रादिर्देवोजयति
दितिजान्यस्यबलतोनकस्यस्वातंत्र्यंक्वचिदपिकृतौयत्कृतिमृते ॥ कृशान्वादेर्गर्वंपरिहरतियो
ऽसौविजयिनःशरण्योलोकेशोममभवतुकृष्णोऽक्षिविषयः ॥ ३५ ॥ ॥ ॥

ति तद्धैषां विजज्ञौ तेभ्योऽहप्रादुर्बभूवतन्नव्यजानंतकिमिदंयक्षमिति तेऽग्निमब्रुवन् जातवेद एतद्विजानीहिकिमेतद्यक्षमिति। तथेति त
दभ्यद्रवत्तमभ्यवदत्कोऽसीत्यग्निर्वाअहमस्मीत्यब्रवीज्जातवेदावाअहमस्मीतितस्मिंस्त्वयिकिंवीर्यमित्यपीदंसर्वंदहेयंयदिदंपृथिव्यामिति त
स्मैतृणंनिदधावेतद्दहेति तदुपप्रेयायसर्वजवेनतन्नशशाकदग्धुं सततएवनिववृतेनैतदशकंविज्ञातुं यदेतद्यक्षमिति तथावायुरप्यगच्छत्सो
पितृणंनशशाकादातुमित्यादि ॥ ३५ ॥ ॥ ॥ ॥ ॥ ॥ ॥

यस्यध्यानादिकंविनाकदाप्यनर्थनिवृत्तिर्नास्तीत्याशयेनाह । विनेति । जनताजनसमूहः ॥ ३६ ॥ निरातंकोनिर्भयःवामःसुंदरःउचिताचाराणांसुखदः ॥ ३७ ॥ यदेति । सेतुधृक्वेदोक्तमर्यादाधारकः एवमप्यजःजन्मादिशून्यः । तथाचोक्तं अजोऽपिसन्नव्ययात्माभूता



विनायस्यध्यानंव्रजतिपशुतांशूकरमुखांविनायस्यज्ञानंजनिमृतिभयंयातिजनता ॥ विनायस्यस्मृत्याकृमिशतजनिंयातिसविभुःशरण्योलोकेशोममभवतुकृष्णोऽक्षिविषयः ॥ ३६ ॥ निरातंकोऽशंकोऽशरणशरणोभ्रांतिहरणोघनश्यामोवामोव्रजशिशुवयस्योऽर्जुनसखः ॥ स्वयंभूर्भूतानांजनकउचिताचारसुखदःशरण्योलोकेशोममभवतुकृष्णोऽक्षिविषयः ॥ ३७ ॥ यदाधर्मग्लानिर्भवतिजगतांक्षोभकरणीतदालोकस्वामीप्रकटितवपुःसेतुधृगजः ॥ सतांधातास्वच्छोनिगमगणगीतोव्रजपतिःशरण्योलोकेशोममभवतुकृष्णोऽक्षिविषयः ॥ ३८ ॥ इतिहरिरखिलात्माराधितःशंकरेणश्रुतिविशदगुणोऽसौमातृमोक्षार्थमाद्यः ॥ यतिवरनिकटेश्रीयुक्तआविर्बभूवस्वगणवृतउदारःशंखचक्राब्जहस्तः ॥ ३९ ॥ यतिरपिहरिमीशंकृष्णमालोक्यभक्त्यापुनरपिसुवचोभिःस्तोतुमेवोद्यतोभूत् ॥ विशदमतिरनादिर्दंडवत्तंप्रणम्यद्रुहिणमुखसुरेड्यंशंखचक्राब्जहस्तम् ॥ ४० ॥ ॥ ॥ ॥ ॥ ॥



नामीश्वरोऽपिसन् प्रकृतिंस्वामधिष्ठायसंभवाम्यात्ममायया । यदायदाहिधर्मस्यग्लानिर्भवतिभारत । अभ्युत्थानमधर्मस्यतदात्मानंसृजाम्यहमित्यादि ॥ ३८ ॥ श्रुतिषुविशदागुणायस्यसः ॥ ३९ ॥ द्रुहिणश्चतुर्मुखः ॥ ४० ॥ ॥ ॥ ॥

सदेवसोम्येदमग्रआसीदेकमेवाद्वितीयं तत्सृष्ट्वातदेवानुप्राविशत् सच्चत्यच्चाभवदित्यादिश्रुतिप्रतिपादितःकृष्णोममाक्षिविषयोजयत्वित्याह।
पुरेति ॥ ४१ ॥ परब्रह्मेति । मिहिरःसूर्यः । तथाचश्रुतिः । नतत्रसूर्योभातिनचंद्रतारकंनेमाविद्युतोभांतिकुतोयमग्निः तमेवभांतमनुभातिस
र्वंतस्यभासासर्वमिदंविभातीत्याद्याःशंब्रह्मानंदसुखम् ॥ ४२ ॥ अनादीति । अनाद्यांध्येनानाद्यज्ञानेनाध्यस्तं नेहनानास्तिकिंचनेत्या
दिवेदआदौनिषिध्यपुरः । तत्त्वमसिसर्वंखल्विदंब्रह्म । एकमेवाद्वितीयमित्यादिसिद्धांतवचनैर्जीवजगद्भावनांपरब्रह्मणाऐक्यंस्वतात्पर्यंविष

पुरासृष्टेरासीत्प्रकृतिपुरुषेशोऽद्वयवपुःप्रविश्यस्वांमायांनिरवधिचिदाभासवपुषा ॥ ससर्जेदंवि
श्वंचरमचरमुच्चावचमहोमहेशोयःसोऽयंजयतुममकृष्णोऽक्षिविषयः ॥ ४१ ॥ परब्रह्माद्वैतंश्रुति
शिखरसिद्धांतविषयंनिराधारंमत्वासममममृतमाहुर्मुनिगणाः ॥ स्वयाभासायस्त्वंशशिमिहिर
मुख्यान्विजयसेसएवाहोदेवोममपथिदृशोःशंवितनुषे ॥ ४२ ॥ अनाद्यांध्याध्यस्तंजडमखि
लमाद्यंतवदिदंनिषिध्यादौवेदोवदतिपुनरैक्यंस्वहृदयम् ॥ वचोभिःसिद्धांतैर्वरदभवताजीवज
गतोःसएवत्वंस्वामीममनयनमार्गेविचरसि ॥ ४३ ॥ अनादौसंसारेऽर्जितसुकृतपुंजैःसुमनसां
पराभक्तिर्यस्मिन्प्रभवतिहरौमोक्षफलदा ॥ सतांचेतोयस्मिंस्त्रिभुवनपतौकृष्णवपुषिस्वतोमग्नं
नित्यंममसचमुकुंदोऽक्षिविषयः ॥ ४४ ॥ ॥ ॥ ॥

यद्भूतंपुनर्वदति हेवरदतथाभूतवरप्रद सएवत्वंदृग्स्वरूपोममनेत्रमार्गेविचरसीत्यहोममोपरिश्रीमत्करुणाकटाक्षातिशयइतिभावः ॥ ४३ ॥
किंचासंख्यजन्मार्जितपुण्यपुंजैःशुद्धचित्तानांयस्मिन्मोक्षफलदाभक्तिरुत्पद्यतेयस्मिंश्चसतांनारदादीनांमनःसर्वदासंलग्नमेवास्तितस्यमो
क्षप्रदस्यास्मन्नेत्रगोचरतात्यंताश्चर्यावहेत्याशयेनाह । अनादाविति ॥ ४४ ॥ ॥ ॥ ॥

किंच ब्रह्मेंद्रादिसुरगणैरप्याराध्यंयमाराध्यलब्धतत्प्रसादावेदांतवचोभिःप्रकटितंहरिंबुद्ध्वेमामनुभूयमानामायातरंतिसयस्यममाक्षिविषयस्त स्यभाग्यंकिंवक्तव्यमित्याह । सदेति ॥ ४५ ॥ किंचभीषास्माद्वातःपवतेभीषोदेतिसूर्यः भीषास्मादग्निश्चेंद्रश्चमृत्युर्धावतिपंचमइतिश्रुत्युक्तम हिमापुमान्यस्याक्षिविषयस्तस्यमाहात्म्यंकेनवक्तुंशक्यमित्याह । भयादिति । रविजोयमःव्रजतिस्वव्यापारतत्परोभवति श्रुतौवेदादिग्रह

सदाचारैर्धर्मैःसुकृतमतयोवैदिकपथाःसमाराध्याराध्यंविधिशतमखाद्यैःसुरगणैः ॥ हरिंयंबुद्ध्वांतेश्रुति शिखरगीर्भिःप्रकटितंतरंतीमांमायांममसचमुकुंदोऽक्षिविषयः ॥ ४५ ॥ भयाद्वातोवातिव्रजतिसततं यस्यरविजोभयात्सूर्योभीतस्तपतिहुतभुग्भीतइतिच ॥ यतःसर्वोभीतःक्षपयतिनिजारब्धमुचितंभया तीतोविष्णुर्ममसचमुकुंदोक्षिविषयः॥४६॥यजंत्यद्धायज्ञैःक्रतुविधिपरायंसुरपतिंसमाधौध्यायंतिप्रति दिनमजंयोगनिपुणाः ॥ विविच्याच्छंधीरायमिहपरिपश्यंतिजडतःसदाखंडात्मानंममसचमुकुंदोक्षि विषयः॥४७॥ श्रुतीनांतात्पर्यंफलतिभवतिस्वात्मनिपरेस्मृतीनांनिष्ठात्वंश्रुतिगणविधीशेंद्रजनकः॥ पु राणेगीतस्त्वंविविधफलदःसर्वजगतांससर्वात्माकृष्णोममखलुमुकुंदोऽक्षिविषयः॥ ४८ ॥ इत्थंयतींद्रेण विभुःपरात्माकृष्णःस्तुतोवेदवचोभिराद्यः॥ प्रोवाचगंभीरवचोयतींद्रंबद्धांजलिंस्वाभिमुखेस्थितंतम्॥४९॥

णमुपलक्षणमित्यभिप्रेत्याह । सर्वइति ॥ ४६ ॥ किंचत्रिकांडात्मकवेदप्रतिपाद्यस्त्वंममाक्षिविषयोऽसीत्याह । यजंतीति ॥ ४७ ॥ न न्विद्रचंद्रादिप्रतिपादनपरेणवेदेनाहमेकांतेनकथंप्रतिपाद्यतेइत्याशंक्यत्वत्तःप्रागसत्वात्तेषां श्रुतिस्मृतीतिहासपुराणतात्पर्यविषयस्त्वमेवे त्याशयेनाह । श्रुतीनामिति । किंचवेदतत्संप्रदायप्रवर्तकब्रह्मादिजनकोऽपित्वमेवेत्याह । श्रुतीति ॥ ४८ ॥ ४९ ॥ ॥

अहोइति । मायाविनिनिर्गुणइत्युक्त्याप्राप्तंविरोधंवारयति । नेति ॥ ५० ॥ वरंप्रयच्छति । अद्वैतमार्गइति ॥ ५१ ॥ यदर्थमाहूतस्त दप्यस्त्वित्याश [illegible]नाह । इयमिति ॥ ५२ ॥ वपुषांदेवताशरीराणांमध्येपरमसुंदरंशरीरम् ॥ ५३ ॥ प्रोवाचेति । इहलोकेपुंनाम्नोनरका

अहोम[illegible]स्ते ऽस्खलितामयीश्वरेमायाविनिब्रह्मणिनिर्गुणेपरे ॥ नयत्रमायानृतकार्यकारिणीप्राप्तोऽसि तत्रात्[illegible]केवलेस्थितिम् ॥ ५० ॥ अद्वैतमार्गोऽपिपरिष्कृतस्तेवेदार्थमालोच्यधियानिबंधाः ॥ भाष्य प्रधानाराचेतास्त्वयायेयास्यंतिजिज्ञासुजनेप्रचारम् ॥ ५१ ॥ इयंसतीतेजननीसुभद्रारतापरेशेमयिवा सुदेवे ॥ प्रयातुमेधाममयासहैवविमानमारुह्यखगप्रधानम् ॥५२॥ इत्युक्तवत्यथहरौजननीतदैवभिक्षो र्दधारवपुषांरुचिरंशरीरम् ॥ त्यक्त्वावपुर्मनुजजंजरयानिरस्तमारुह्यकेशवगणैःसुविमानमार्या ॥ ५३ ॥ प्रोवाचपुत्रंसुसतीकृतार्थाधन्योऽसिधन्योसिमहानुभाव ॥ सार्थःकृतःपुत्रइतीहशब्दोलोकंयथेष्टंगमि तात्वयाहम् ॥५४॥ इत्थंतयोक्तेमधुसूदनोऽसावंतर्द्धिमागात्सविमानवर्यः ॥ सद्यःसलक्ष्मीःसगणःस्वयं भूःश्रीशंकरेणैवचपूज्यमानः ॥ ५५ ॥ अथश्रीशंकराचार्यःप्रापय्यनिजमातरम् ॥ वैकुंठंहरिसांनिध्यं स्वयंतत्रांगणेस्थितः ॥५६ ॥ मातुर्देहस्यसंस्कारंकर्तुकामोयतीश्वरः ॥ आजुहावाथतद्बंधून्बांधवास्तेस मागताः॥५७॥ भाष्यकारंनिनिंदुस्तेदूषणैःस्वप्रकल्पितैः॥प्राप्तांद्दृष्ट्वाभाष्यकारेणवह्निंनैवददुस्ततः॥५८॥

त्रायतइत्यर्थकःपुत्रशब्दस्त्वयासार्थकःकृतः इतःपरंकदापिममनरकेपतनासंभवात्तंदृष्ट्वात्थः ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ भाष्यकार मिति । हेकितवास्मिन्कर्मणियतेस्तवकिमधिकारोऽस्तीत्यादिदूषणैः ॥ ५८ ॥ ॰ ॥ ॰ ॥ ॥ ॥

मंदरसमीपे ॥ ५९ ॥ तेनेति । नन्वशास्त्रीयमेतत्कर्मकिमित्याचार्यैरनुष्ठितमित्यत आह । सर्वशक्तिमानिति । धर्मव्यतिक्रमोदृष्टईश्वराणांचसाहसम् । तेजीयसांनदोषायवन्हेःसर्वभुजोयथेत्युक्तेः ॥ ६० ॥ ६ तसूर्यः भं ॥ ६३ ॥ ६४ ॥ व्यासोक्तमर्थंसमासेनाह ।



स्वयंकाष्ठानिसंचित्यसद्मतीरेनिवेश्यच ॥ ममंथदक्षिणंबा... रविजोयम् ...वाह्निर्विनिःसृतः ॥ ५९ ॥ तेनदेहंददाहासौसर्ववित्सर्वशक्तिमान् ॥ बंधून्विप्रांश्चतत्रत्यान्शशापाथयतीश्वरः॥ ६० ॥ इतःपरंभवंतोपिवेदवन्हिबहिःकृताः ॥ शूद्राचाराश्चसंन्यासिभिक्षाशून्याभविष्यथ ॥ ६१ ॥ गृहोपकंठएवास्तुश्मशानंवोह्यतःपरम् ॥ एवंशप्ताहितत्रत्याब्राह्मणाःशंकरेणते ॥६२॥ अद्यापिवेदहीनास्तेवन्हिशून्यास्तथाद्विजाः॥ भवंतिब्राह्मणाभासाःपरहंसावहेलनात् ॥ ६३ ॥ शप्त्वैवंभाष्यकारोपिविप्रांस्तत्रनिवासिनः ॥ योगशक्त्यास्वयंशीघ्रमाययौश्रृंगपर्वतम् ॥ ६४ ॥ सकलजनहितैषीमातरंस्वांयथेष्टंहरिभजनपरांवैकुंठलोकंनिनाय ॥ श्रुतिहरिगुरुभक्तिंदर्शयित्वायतींद्रःश्रुतिमतविमुखांस्तान्ब्राह्मणान्वैशशाप ॥ ६५ ॥ इहजगतिमहेशोनाथआत्माजनानांप्रवरगुणविशिष्टःसर्वलोकोपकारी ॥ मनुजसमविहारोमानुषंप्राप्यदेहंभवतिशठविनिंद्यस्तेषुसंबंधवांश्चेत् ॥ ६६ ॥ ॥ इतिशांकरदिग्विजयसारेश्रीमन्मुकुंदपदारविंदमकरंदाभिलाषिसदानंदाख्यविदुषाविरचितेश्रीशंकरेणनिजमातुर्हरिधामप्रापणंनामत्रयोदशःसर्गः ॥१३॥



सकलेति ॥ ६५ ॥ उक्तकथासूचितमर्थमाविष्करोति । इहेति ॥ ६६ ॥ ॥ इतिश्रीमत्परमहंसपरिव्राजकाचार्यबालगोपालतीर्थश्रीपादशिष्यदत्तवंशावतंसरामकुमारसूनुधनपतिसूरिकृतेश्रीशंकराचार्यविजयडिंडिमेत्रयोदशः सर्गः ॥ १३ ॥ ॥ ॥

श्रीगणेशायनमः ॥ एवमाचार्यकृतंमात्रुद्धारादिकंनिरूप्याथपद्मपादतीर्थयात्रांनिरूपयितुमुपक्रमते । अथेति । सनंदनःपद्मपादः ॥ १ ॥

अथानुज्ञांसमादायतीर्थयात्रांसनंदनः ॥ ययौक्षेत्रसरिद्देवस्थानानिविविधानिसः ॥ १ ॥ पश्यं
श्चक्रेयथायोग्यस्नानपूजादिकाःक्रियाः ॥ स्वानुभूत्याद्वयानंदेतिष्ठन्नेवचचारह ॥ २ ॥ दक्षिणा
दिशमासाद्यकुंभयोनिनिषेविताम् ॥ कालहस्तीश्वरंलिंगंप्रत्यक्षंदृष्टवान्मुनिः ॥ ३ ॥ स्नात्वा
जलाशयेसांबंपूजयामासशंकरम् ॥ मनसाभावकुसुमैःस्तुत्वासम्यङ्नामह ॥ ४ ॥ कांचीक्षेत्रं
ततोगत्वाविश्वनाथंसमर्च्यसः ॥ तत्समीपेरमाकांतंसंतुष्टावप्रियैःस्तवैः ॥ ५ ॥ पुंडरीकपुरंभि
क्षुर्ययौयत्रमहेश्वरः ॥ नृत्यतिस्वयमानंदपूर्णोयोगिभिरावृतः ॥ ६ ॥ तत्रगत्वाथतत्रत्यंजनं
पप्रच्छभोइह ॥ किंतीर्थमितितत्रत्यःपृष्टःसन्नुत्तरंददौ ॥ ७ ॥ तीर्थमत्रस्वयंगंगाशिवगंगेतिविश्रु
ता ॥ एकदाकृपयाशंभुर्गंगांसस्मारशोभनाम् ॥ ८ ॥ नदीसाप्यत्रसंभूतातेनेदंतीर्थमुत्तमम् ॥
शिवगंगेतिविख्यातंनामतःसर्वपूजितम् ॥ सतच्छ्रुत्वासमाश्चर्यंविस्मितोभूत्ततःस्वयम् ॥ ९ ॥
तत्रस्नात्वामहादेवंपूजयामासभक्तितः ॥ धियाध्यानंसमाश्रित्यस्थितोऽसौशिवसन्निधौ ॥१०॥
ततोरामेश्वरंद्रष्टुंयात्रांचक्रेसनंदनः ॥ कावेरींपथिसंप्राप्तांदृष्ट्वास्नात्वाननामताम् ॥ ११ ॥ मा
तुलंद्रष्टुकामोऽसौसशिष्यस्तद्गृहंयतिः ॥ प्रविवेशतमायांतंदृष्ट्वातन्मातुलस्तदा ॥ १२ ॥

॥ २ ॥ कुंभयोनिरगस्त्यः ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ ॥ ॥ ॥

रुरोदप्रेम्णा ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ मद्भागिनेयस्याहोएवंविधाबुद्धिरितिमुदमादौल

हर्षमापततःसर्वेबांधवाश्चसमागताः ॥ कश्चिद्गुरोदृष्ट्वातंहर्षसंप्रापकश्चन ॥ १३ ॥ बहवोहर्ष
यंतस्तंचक्रुर्वार्ताःपरस्परम् ॥ केचिद्धर्मंगृहस्थस्यप्रशशंसुस्तथापरे ॥ १४ ॥ संन्यासधर्मम
न्योन्यंतेषुकश्चिद्विचक्षणः ॥ संन्यासस्यैवमुख्यत्वंवर्णयामासयुक्तिभिः ॥ १५ ॥ एवंश्रुत्वास
तानाहपद्मपादोविवेकवान् ॥ धन्योगृहाश्रमीयस्यपूज्याःसर्वेसदाश्रमाः ॥ १६ ॥ देवताःपि
तरोयस्यप्रार्थयंतिसदाभवम् ॥ पूज्यंतेऽतिथयोयत्रतस्माच्छ्रेष्ठोगृहाश्रमी ॥ १७ ॥ एवंधर्मा
न्समादिश्यभिक्षांचक्रेसनंदनः ॥ मातुलीयेगृहेशिष्यैर्भुक्त्वातत्रैवतस्थिवान् ॥ १८ ॥ पप्रच्छ
मातुलोऽप्येनंपद्मपादंसकर्मठः ॥ तवशिष्यस्यपार्श्वेस्तिकिमिदंपुस्तकंवद ॥ १९ ॥ तमाहप
द्मपादोयंटीकाग्रंथोमयाधुना ॥ कृतोवेदांतसूत्राणांभाष्येब्रह्मात्मतत्परे ॥ २० ॥ मातुलोप्प्या
हमेदेहिपुस्तकंदृश्यतेमया ॥ दत्तवान्पद्मपादोऽपिमातुलायातिहर्षतः ॥ २१ ॥ सोप्यालोच्य
मुदंप्राप्यप्रापखेदंततोंततः ॥ ब्रह्माद्वैतमतंदृष्ट्वाश्रुत्यायुक्तयापरिष्कृतम् ॥ २२ ॥ प्राभाकरम
तंदृष्ट्वानिरस्तंयुक्तिभिर्दृढम् ॥ मत्सरंकृतवानंतर्बहिःसाधुवदाचरन् ॥ २३ ॥ उवाचपद्मपादं
सन्यस्येदंपुस्तकंगृहे ॥ सुखंपरिचरन्धन्यगच्छरामेश्वरंततः ॥ २४ ॥ ॥ ॥

ब्ध्वातत्पश्चात्स्वमतविरुद्धंश्रुत्यादिपरिष्कृतमद्वैतंदृष्ट्वाखेदंप्राप ॥ २२ ॥ २३ ॥ २४ ॥ ॥ ॥ ॥

मातुलाज्ञांपुरस्कृत्यपुस्तकंन्यस्यतद्गृहे ॥ प्रतस्थेपद्मपादोऽपिसशिष्यस्तीर्थभूमिकाः ॥ २५ ॥
प्रस्थातुःपद्मपादस्यवामनेत्रंस्फुरद्बहु ॥ असूसुचत्तदप्येतंखेदमागामिनंध्रुवम् ॥ २६ ॥ चुक्षा
वोच्चैःपुरःकश्चित्सर्वंचागणयन्नसौ ॥ जगामाथगतेतस्मिन्मेनेऽतस्तस्यमातुलः ॥ २७ ॥ अयं
ग्रंथोयदालोकेसंप्रचारंगमिष्यति ॥ तदास्माकंगुरोःपक्षोनष्टएवभविष्यति ॥ २८ ॥ अतोवि
नाशनीयोऽयंयतःस्वमतघातकः ॥ गुरोःपक्षोविनष्टश्चेदनर्थःकिमतःपरम् ॥ २९ ॥ केवलंपु
स्तकस्यैवदाहोयदिकृतोमया ॥ तदालोकेविनिंद्यःस्यामतइत्थंकरोम्यहम् ॥ ३० ॥ पुस्तके
नसहैवाद्यधक्ष्यामिनिजमंदिरम् ॥ सनिशीथेविचार्येत्थंदत्तवांश्चहुताशनम् ॥ ३१ ॥ स्वगृहेग्रं
थसहितेपद्मपादस्यमातुलः ॥ चुक्रोशदाहयत्यग्निर्मदीयंगृहमांतरम् ॥ ३२ ॥ तत्क्षणेभस्मसा
ज्जातंग्रंथेनसहसद्मतत् ॥ प्रसन्नोभूद्गृहंदग्ध्वाकर्मठोमूढधीर्द्विजः ॥ ३३ ॥ अथश्रीपद्मपादोपि
व्रजन्शीघ्रंसशिष्यकः ॥ रामेश्वरंरमानाथचरिताश्रयमाययौ ॥ ३४ ॥ यत्रश्रीरामचंद्रेणसा
नुजेनाघनाशिना ॥ धनुर्दिव्यंक्षितौन्यस्तंसशरंचाद्भुतोपमम् ॥ ३५ ॥ तस्थिवान्यत्रकाकु
त्स्थोदर्भाणामुपरिस्वयम् ॥ यत्रागस्त्येनसंवादोराघवस्याभवत्पुरा ॥ ३६ ॥ ॥

॥ ३४ ॥ ३५ ॥ संवादःसमुद्रतरणोपायःकःसेतुर्बंधनीयइत्येवमादिरूपः ॥ ३६ ॥ ॥ ॥ ॥

पाथोधौजलधौ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ महादेवइति । रामईश्वरोयस्येतिबहुव्रीहिंमहादेवउक्तवान् । रामस्येश्वरइ

सेतुंबबंधपाथोधौयत्रस्थित्वारघूद्वहः ॥ तत्रस्नात्वासमानर्चरामंरामेश्वरंयतिः ॥ ३७ ॥ तुष्टावपरयाभ त्त्यारामंरामेश्वरंस्तवैः ॥ वैदिकैर्ऋषिभिःप्रोक्तैःसपुराणोद्भवैर्यतिः ॥ ३८ ॥ अहोपापहरोरामःसेतूरा मेश्वरस्तथा ॥ त्रयाणांयत्रसंबंधःपुण्योसौपाथसांनिधिः॥३९॥ रामस्यरामनाथस्यसेतोश्चमहिमाद्भु तः ॥ महापातकिनःसद्यःपुनंत्यत्रत्रयोयतः ॥ ४० ॥ इत्येवंपद्मपादःसंवर्णयामासभूरिशः ॥ महत्त्वंत त्प्रसंगेथपृष्टवान्कश्चनद्विजः ॥ ४१ ॥ भोयतेवदसर्वज्ञयाथातथ्येनकृत्स्नशः ॥ श्रीरामेश्वरइत्यत्रसमा सःकोविनिश्चितः ॥ ४२ ॥ महादेवोबहुव्रीहिंरामस्तत्पुरुषंजगौ ॥ ब्रह्मादयःसुरास्त्वाहूरामेशेकर्मधार यम् ॥ ४३ ॥ एवंसनंदनेनोक्तंसमासंत्रिविधंद्विजः ॥ श्रुत्वाहर्षवशादाहसर्वज्ञोऽसीतिभिक्षुकम् ॥४४॥ ततःसनंदनःशिष्यैःपरावृत्यातिहर्षतः ॥ मातुलीयंगृहंवेगादाजगामसमुत्सुकः ॥ ४५ ॥ तत्रागत्यस ग्रंथस्यदाहंश्रुत्वागृहस्यसः ॥ अतिखेदमवाप्याहहाकष्टमितिमातुलम् ॥ ४६ ॥ मातुलोऽप्याहतंभि क्षुंपश्चात्तापंप्रदर्शयन् ॥ ममाज्ञातस्त्वयावत्सपुस्तकंमद्गृहेधृतम् ॥ ४७ ॥ गृहदाहेतथादुःखंनास्ति मेऽद्यसनंदन ॥ ग्रंथदाहेयथाजातंदुःखंकिंवर्णयाम्यहम् ॥ ४८ ॥ इत्थंनिशम्यतद्वाक्यंपद्मपादोऽब्रवी द्वचः ॥ गतंहिपुस्तकंनैवगतामेबुद्धिरीदृशी ॥ ४९ ॥ ॥ ॥ ॥

तितत्पुरुषंरामोजगौ । ब्रह्मादयस्तुरामश्चासावीश्वरश्चेतिकर्मधारयंजगुः ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ॥

एवमुक्त्वावचस्तस्मिन्दिनेभिक्षुःसनंदनः ॥ टीकांकर्तुंपुनर्धीरस्तादृशींवैसमुद्यतः ॥५०॥ तादृशींबुद्धिमालोक्यमातुलोऽस्ययतेस्तदा ॥ भोजनेप्राक्षिपद्द्रव्यंदुष्टंबुद्धिविनाशकृत् ॥५१॥ भुक्त्वासनंदनोभिक्षांस्वयमेकांतमास्थितः॥ टीकांकर्तुमनाःसम्यङ्नाक्षमिष्टसपूर्ववत् ॥५२॥ततःसपद्मपादोऽपिसशिष्यःप्रस्थितस्तदा ॥ गुरूणांदर्शनार्थीसन्केरलानाजगामह ॥५३॥ तदैवशंकराचार्योव्योममार्गेणकेरलान् ॥ आगतोसौददर्शाग्रेविनेयान्सकृतांजलीन् ॥ ५४ ॥ अन्योन्यंकुशलंपृष्ट्वागुरुशिष्यसमागमे ॥ ब्रह्मसत्रमभूत्तत्रपरानंदावभासकम् ॥५५॥ ततःसनंदनोविद्वानाचार्यंकरुणाकरम् ॥ आहगद्गदयावाचाग्रंथनाशभ्रमान्वितः ॥५६॥ रामेशंगंतुकामोहंमातुलीयेगृहेपथि ॥ मातुलंद्रष्टुकामोगांतेनाप्यानंदितोसकृत् ॥ ५७ ॥ तद्गृहेभाष्यटीकांस्वांन्यस्यरामेश्वरंगतः ॥ स्वगृहंदीपयामाससटीकंसदुराशयः ॥५८॥ परावृत्त्याहमागच्छन्मातुलेनातिसांत्वितः ॥ पुनःकर्तुंनशक्नोमितादृशींरचनामहम् ॥ ५९ ॥ सनंदनवचःश्रुत्वागुरुराह कृपानिधिः ॥ विषमःकर्मणांवत्सविपाकःपूर्वमेवमे ॥ ६० ॥ निश्चितःससुरेशायकथितोऽपिमयातदा ॥ शृंगाद्रौयात्वयापूर्वंवाचितापंचपादिका ॥ ६१ ॥ मत्समीपेऽथसाचित्तान्नापयातालिख्यताम् ॥ समाश्वास्यगुरुःशिष्यमाचख्यौपंचपादिकाम् ॥ ६२॥ पूर्वयैवानुपूर्व्याचतच्चित्रंनैवशंकरे ॥ सपंचपादिकांलिख्यनृत्यतिस्मसनंदनः ॥ ६३ ॥ ॥ ॥ ॥ ॥ ६२ ॥ ल्यन्वार्थः ॥ ६३ ॥

॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥ कालटीग्रामगाःकालट्याख्यग्रामवासिनः ॥ ७१ ॥ ७२ ॥ पद्मपादकृतग्रंथनाशादिना महतामपिगुर्वाद्याज्ञोल्लंघनादवश्यमनिष्टंभवतीतिसूचितमित्याह । श्रुतीति ॥ ७३ ॥ तन्मातुलकृतैवंविधग्रंथदाहेनयत्सूचितंतदाह । प्र

अथतत्रागतोराजशेखराख्योनराधिपः ॥ नाटकत्रितयंयेनयतयेश्राविततंपुरा ॥ ६४ ॥ प्रणिपत्यनृपो भाष्यकारपादौकृतांजलिः ॥ भूत्वाग्रेतस्थिवांस्तंसनृपंपप्रच्छशंकरः ॥ ६५ ॥ यापुरावाचितासाकिंप्रथ तेनाटकत्रयी ॥ सचोवाचवचोराजाभाष्यकारंकृतांजलिः ॥ ६६ ॥ भगवन्यामयापूर्वंवाचितानाटकत्र यी ॥ भवदग्रेप्रमादात्साभस्मीभूताहुताशने ॥ ६७ ॥ तंप्रत्याहनृपंभिक्षुराजोभोराजशेखर ॥ लिखाद्य त्वंमयेदानींवाच्यतेसात्रयीमुखात् ॥ ६८ ॥ शंकरोक्तांयथापूर्वंसराजानाटकत्रयीम् ॥ लिखन्हर्षादती वाऽसौविस्मयंप्रापमानसे ॥ ६९ ॥ राजोवाचलिखित्वातंभगवंतंयतीश्वरम् ॥ भगवन्कांकरोम्यद्यशुश्रू षांश्रीमतामहम् ॥ ७० ॥ तंप्रत्याहयतिर्वाक्यंराजन्शप्तामयापुरा ॥ कालटीग्रामगाविप्राविधेयास्तेतथै वच ॥ ७१ ॥ एवमेवकरिष्यामीत्येवमुक्त्वानृपस्तदा ॥ प्रणिपत्ययतींद्रंसपरिक्रम्यययौपुरीम् ॥ ७२ ॥ श्रुतिहरिगुरवस्तेसर्वदावंदनीयाःकविभिरपिमहद्भिर्ब्रह्मविद्भिश्चसिद्धैः ॥ यदिचविधिबलात्तेलंघिताःस्यु र्महद्भिर्भवतिपरमनिष्टंतर्हितेषामपीति ॥ ७३ ॥ प्रवरगुणविशिष्टंशास्त्रसिद्धांतयुक्तंभ्रमहरमभिरामंयन्नि बद्धंमहद्भिः ॥ हितमपिजनतायाभ्रांतधीभिर्विमूढैस्तदपिभवतिदाह्यंलोकविद्वेषिभिश्च ॥ ७४ ॥ इति शांकरदि॰ श्रीमन्मुकुंदपदारविंदमकरंदाभिलाषिस॰ वि॰ सनंदनतीर्थयात्रानामचतुर्दशःसर्गः॥१४॥

वरेति ॥ ७४ ॥ इतिश्रीमच्छंकराचार्यविजयडिंडिमेचतुर्दशः सर्गः ॥ १४ ॥ ॥ ॥ ॥

गणेशंमहेशंरमेशंदिनेशंभवानींस्तुनिंव्यासमाचार्यवर्यम् ॥ यतीशंनुमःशारदांवांतथाग्रंथकारंकृतीशंद्विजेशंगुरुंच ॥ १ ॥ अथश्रीशं

अथश्रीभाष्यकारेंद्रःकदाचिद्दैवयोगतः ॥ राज्ञासुधन्वनासार्द्धंसंगम्योदारबुद्धिना ॥ १ ॥ शि
ष्यवर्गैर्युतस्तस्यदेशेऽसौतस्थिवान्यतिः ॥ तेनार्चितःसशिष्यश्चभक्त्याराज्ञासुधन्वना ॥ २ ॥
विजिगीषुर्दिशःसर्वाराजानमिदमब्रवीत् ॥ राजन्नत्रमहीपीठेवेदांताध्वप्रवर्त्तनम् ॥ ३ ॥ कर्तु
कामोऽस्म्यहंतत्रसाहाय्यंकर्तुमर्हसि ॥ यथावेदांतमार्गोऽयंसंगच्छेतप्रचारताम् ॥ ४ ॥ इति
श्रुत्वामुनेर्वाक्यंराजावचनमब्रवीत् ॥ भगवन्करुणासिंधोवेदपद्मविभाकर ॥ ५ ॥ दासोऽ
स्म्यहंकरिष्यामिशुश्रूषांतवपादयोः ॥ जयस्वामिन्महींसर्वांमयिभृत्येस्थितेंऽतिके ॥ ६ ॥
अथशिष्यवरैर्युक्तःसोनुयातःसुधन्वना ॥ विजिगीषुर्दिशःसर्वाआदौरामेश्वरंगतः ॥ ७ ॥ व्रज
न्पथिसुरासक्ताञ्छाक्तिकाञ्जितवानसौ ॥ कुमार्गंत्याजयित्वातान्स्थापयामाससत्पथि ॥ ८ ॥
यथाधिकारमेवासौजनान्संस्थापयन्भुवि ॥ गतोरामेश्वरंतंचपूजयित्वाथशंकरः ॥ ९ ॥ राम
नाथंययौतत्रतंसमर्च्यततोमुनिः ॥ चौलद्रविडपांडयांश्चजित्वाकांचींततोऽजयत् ॥ १० ॥ वें
कटानवजित्यासौकर्णाटकभुवंययौ ॥ ततोजेतुंप्रतस्थेऽसौवेदबाह्यान्कपालिनः ॥ ११ ॥

कराचार्यकृतदिग्विजयंवर्णयितुमुपक्रमते । अथेति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ सुरासक्तान्मदिरापानासक्तान् ॥ ८ ॥
॥ ९ ॥ १० ॥ ११ ॥ ॥ ॥ ॥ ॥ ॥

क्रकचोनामकापालीश्रुत्वाशंकरमागतम् ॥ संमुखेदृप्तआगत्ययतिमध्येऽव्यवस्थितः ॥ १२ ॥ भाष्यकारमुवाचेदंवचनंगर्वबृंहितम् ॥ शिरःकपालंसंत्यज्यकथंभस्मत्वयाधृतम् ॥ १३ ॥ अकृत्वाभैरवीमर्चांकथंमोक्षमवाप्स्यसि ॥ नह्येवंमुंडनेनैवमोक्षोजायेतदेहिनाम् ॥ १४ ॥ निशम्यैवंवचस्तस्यसुधन्वाख्योनराधिपः ॥ कापालिकाधमंमूढंसमाजान्निरवासयत् ॥ १५ ॥ गच्छन्नूचेयतीशंसभवतांवैशिरांस्यहम् ॥ विभिंद्यांनैवचेत्तर्हिनाहंस्यांक्रकचाभिधः ॥ १६ ॥ सगत्वानगरेविप्रवधार्थंचसमुद्यतः ॥ समाजंमेलयित्वास्वंयुद्धायसमुपस्थितः ॥ १७ ॥ दृष्ट्वाकपालिनांसंघंसुधन्वाकुपितस्तदा ॥ तस्मिन्नेवक्षणेराजायुद्धायसमुपस्थितः ॥ १८ ॥ कापालिकाःसमागम्यत्रिशूलैःपट्टिशैःशरैः ॥ विप्राणांमारणेसक्ताःकलुषीकृतलोचनाः ॥ १९ ॥ केचित्सुधन्वनासार्द्धंचक्रुर्युद्धंभयंकरम् ॥ केचिद्विप्रवधोद्युक्ताःक्रोधेनविवशीकृताः ॥ २० ॥ विप्राःपलायिताःसर्वेशंकरंशरणंगताः ॥ शरण्यःशंकरोऽस्माकंशरणंचेतिवादिनः ॥ २१ ॥ विप्राणांहननेसक्तानागतान्वैकपालिनः ॥ दुष्टान्दृष्ट्वायतिःशंभुर्दृप्तांस्तानुद्यतायुधान् ॥ २२ ॥ हुंकारेणैवसर्वांस्तान्भस्मसात्संचकारह ॥ सुधन्वनापितेसर्वेनीताःकालवशंशठाः ॥ २३ ॥ हतान्कापालिकान्दृष्ट्वाक्रकचःकुपितोऽब्रवीत् ॥ कुमताश्रितपश्यत्वंप्रभावंत्वद्विनाशकम् ॥ २४ ॥

एवमुक्त्वाकपालंसकरेधृत्वातथाक्षिणी ॥ दध्यौनिमील्यमुरयाकपालंपूरितंपपौ ॥ २५ ॥ अधंदधत्ससस्माररभैरवंस्वेष्टदैवतम् ॥ स्मृतःसन्भैरवोदेवआविर्भूतस्तदंतिके ॥ २६ ॥ दृष्ट्वा सभैरवंदेवंक्रकचःकुपितोब्रवीत् ॥ प्रजह्येनंविभोभिक्षुंतवभक्तजनद्रुहम् ॥ २७ ॥ एवंतेननियुक्तोऽसौक्रुद्धस्तंभैरवोऽवदत् ॥ अरेपापदुराचारदुष्टकापालिकाधम ॥ २८ ॥ साक्षाच्छिवावतारेऽस्मिन्मद्रूपेशंकरेऽनघे ॥ अपराद्धंत्वयायस्मादतस्त्वांनाशयाम्यहम् ॥ २९ ॥ एवमुक्त्वाशिरस्तस्यसंजहारकरेणसः ॥ ततःश्रीशंकरेणापिस्तुतोऽसौभैरवोगतः ॥ ३० ॥ अंतर्धानंततःशिष्यैःशंकरोऽपिस्थितोमुदा ॥ ब्राह्मणान्रक्षयित्वासौघातयित्वाकपालिनः ॥ ३१ ॥ अपरांतसमुद्रंचप्रतिपेदेयतीश्वरः ॥ ततःप्रतस्थेगोकर्णमवगाह्यसरित्पतिम् ॥ ३२ ॥ तत्रगत्वायतिःस्थित्वापाठयामाससद्यतीन् ॥ वेदांतभाष्यसंदोहंब्रह्माद्वैतपरायणम् ॥ ३३ ॥ निशम्याथद्विजःकश्चिद्धरदत्तसमाह्वयः ॥ वेदांतभाष्यसिद्धांतंसांख्यादिमतबाधकम् ॥ ३४ ॥ सगत्वानगरंतत्रनीलकंठमुवाचह ॥ भगवन्शंकरोनामविजिगीषुर्यतिर्महान् ॥ ३५ ॥ आगतोऽत्रस्थितःशंभुमंदिरेयतिभिःसह ॥ इत्थंनिशम्यतद्वाक्यंहसन्नूचेसशैवराट् ॥ ३६ ॥ ॥

॥ ३७॥ ३८॥ सुरेशःसुरेश्वराचार्यः॥ ३९ ॥ ४० ॥४१॥ शैवमतखंडनप्रकारश्चतुर्थेसर्गेद्रष्टव्यः ॥४२॥ तत्त्वमितिवाक्यस्थतत्त्वंपदार्थयोर्जीवेशयोः॥४३॥तत्रहेतुमाह। विरुद्धधर्मवत्त्वेनेति। परोक्षत्वापरोक्षत्वादिविरुद्धधर्मवत्त्वात्तत्रदृष्टांतस्तेजस्तिमिरयोरिवेति। यतउक्तयुक्तिविरोधस्तस्मात्तौभिन्नौपरस्परभेदाश्रयावेवांगीकर्तव्यावित्याह। अतइति॥४४॥ ननुरविबिंबतत्प्रतिबिंबयोर्व्यभिचारस्तयोश्चांचल्याचांचल्यादि

शोषयेत्सप्तसिंधून्योरविंध्योम्भोनिपातयेत् ॥ पटवद्वेष्टयेद्व्योमनजयेन्मांतथापिसः ॥ ३७ ॥ इत्थमुक्त्वासनिरगात्पुराच्छिष्यगणैःसह ॥ शिवालयंसमागत्यभाष्यकारंददर्शह ॥ ३८ ॥ शिष्यैःसहसमाविश्यसभायांतत्रतस्थिवान् ॥ नीलकंठंसुरेशोऽपिदृष्ट्वागुरुमुवाचसः ॥ ३९ ॥ आज्ञामेस्याद्गुरूणांचेच्छ्रीमतांभवतांगुरो ॥ अनेननीलकंठेनशैवेनादौममापिच ॥ ४० ॥ विवादोस्त्वत्रभवतांश्रीमतांतदनंतरम् ॥ प्रत्याहनीलकंठस्तंविजानेतवकौशलम् ॥ ४१ ॥ स्वयमेषब्रवीत्वत्रमुनिवर्योमयासह ॥ ततःश्रीशंकरस्तस्यमतंशैवंचखंडह ॥ ४२ ॥ नीलकंठःस्वकंपक्षंत्यक्त्वाऽद्वैतमथाक्षिपत् ॥ तत्त्वंपदार्थयोरैक्यंतवेष्टंतन्नयुज्यते ॥ ४३ ॥ विरुद्धधर्मवत्त्वेनतेजस्तिमिरयोरिव ॥ अतोजीवेश्वरौभिन्नौस्वीकर्तव्यौत्वयाधुना ॥ ४४ ॥ नन्वभेदोऽत्र किन्नस्याद्बिंबतत्प्रतिबिंबयोः ॥ मैवंस्यात्प्रतिबिंबस्यमिथ्यात्वादभिदाकथम् ॥ ४५ ॥ ॥

विरुद्धधर्मवत्त्वेऽपिभेदाभावस्यसत्त्वात्तथाचविरुद्धधर्मयोरपितयोर्बिंबप्रतिबिंबयोरिवाभेदोऽस्त्वित्याशंकतेसिद्धांती। नन्विति। परिहरतिवादी मैवमिति। प्रतिबिंबस्यमिथ्यात्वाद्बोध्यस्यतयोरभेदस्यायोग्यत्वाद्व्यभिचाराभावात्तद्दृष्टांतेनजीवेशयोरभेदसाधनमनुपपन्नमित्यर्थः ४५

ननुपरेशनिष्ठसार्वज्ञ्यस्यजीवनिष्ठमौढ्यस्यचविरुद्धधर्मस्यमायिकतयाबाधादुभयोरपिचैतन्यस्वरूपताविशेषाद्वास्तवोऽभेदएवास्त्वित्याशंक्य तेसिद्धांती। नन्विति ॥ ४६ ॥ परिहरति मैवमिति। प्रमाणसिद्धस्यबाधासंभवात्ततएवमायिकत्वासिद्धेरभेदस्यवास्तवत्वासिद्धेर्मैवमित्यर्थः। विपक्षेबाधकमाह। प्रमाणसिद्धस्यापिबाधनंयदीष्टंतर्हिलोकेभेदोदत्तजलांजलिर्भवेत्क्वापिनस्यादित्यर्थः॥ ४७॥ कुतइत्यपेक्षायामाह। गोत्वेति। विपरीतयोर्गोत्वाश्वत्वयोर्बाधात्पशुत्वाविशेषात्तद्रूपेणगवाश्वयोरैक्यसंभवादित्यर्थः॥ ४८॥ तस्मादेतद्दोषपरिहारार्थंप्रमाणसि

ननुजीवेशयोर्मायाकृतसार्वज्ञ्यमूढते ॥ विहायचित्स्वरूपस्याविशेषादस्तुचाभिदा ॥ ४६ ॥
मैवंप्रमाणसिद्धस्यभेदस्ययदिबाधनम् ॥ इष्टंतर्हिभवेल्लोकेभेदोदत्तजलांजलिः ॥ ४७ ॥ गो
त्वाश्वत्वादिभेदानांबाधनंस्याद्भवन्मते ॥ पशुरूपैकतासिद्धाकिन्नस्यादीशजीववत् ॥ ४८ ॥
मानसिद्धस्यहानंचेदिष्टंतर्हिभवेन्नहि ॥ नाहमीश्वरइत्येतन्नातोऽभेदस्तयोर्भवेत् ॥ ४९ ॥ एवं
युक्तिशतैर्नीलकंठोऽद्वैतमतंप्रति ॥ आक्षेपंकृतवान्भिक्षुःपरिहारवचोब्रवीत् ॥ ५० ॥ शृणुत
त्त्वमसीत्यत्रसंप्रदायविदांस्थितिम् ॥ विरुद्धताधीर्वाच्यांशेनश्येत्सोऽसौपुमानिव ॥ ५१ ॥
अविरोध्यंशमादायतत्त्वंपदगतार्थयोः ॥ ऐक्यमाहस्फुटंवेदोविरोधःकोऽत्रभातिते ॥ ५२ ॥

द्धस्यबाधोनास्तीत्यवश्यमभ्युपेयंतदभ्युपगमेतुभट्टाभिमतोभेदोदत्तजलांजलिरित्याशयेनाह। मानेति। अतोभेदानुभवात्तयोर्जीवेशयोरभेदोनसंभवति॥४९॥५०॥ शृण्विति। यथासोऽयंदेवदत्तइत्यत्रतदेतत्कालविशिष्टवाच्यांशेविरोधात्तंपरित्यज्याविरोधिविशेष्यांशमादायपिंडमात्रैक्ये नकोऽपिविरोधइत्याह। विरुद्धतेति ॥५१॥ अविरोध्यंशमिति। तथाचतत्त्वंपदगतार्थयोःपरोक्षत्वापरोक्षत्वादिविशिष्टांशंपरित्यज्यचैतन्यमात्राविरोध्यंशमादायतत्त्वमसीतिवेदःतत्त्वंपदार्थयोर्जीवेशयोरैक्यंस्फुटंवदत्यतोऽत्राभेदेकोऽपिविरोधोनास्तीत्यर्थः॥५२॥

यत्तुभेदोदत्तजलांजलिःस्यादित्याद्युक्तंतत्राह । गोत्वेति । वैषम्यंस्फुटयति । गवाश्वयोरिति । यथात्रतत्त्वमसीतिवेदवाक्यमभेदबोधकं तथागवाश्वयोरभेदबोधकंप्रमाणंन हियस्मादेवंतस्माद्वैषम्यमित्यर्थः ॥ ५३ ॥ ननुतथापिनाहमीश्वरइत्यनुभूयमानेभेदेसतीत्युक्तप्रमाणेना पिकथमभेदःसाधयितुंशक्यतइत्याशंक्योक्तानुभवस्यव्यावहारिकभेदविषयत्वाद्वेदवाक्यस्यपारमार्थिकाभेदगोचरत्वान्मैवमित्याशयेनाह । अत्रेति । व्यवहारेव्यवहारावस्थायां ॥ ५४ ॥ किंचभेदस्यप्रत्यक्षादिप्रमाणसिद्धस्यश्रुतिगम्यत्वेतस्याअनुवादकत्वप्रसंगस्तदगम्याभेद स्यतद्गम्यत्वेविरोधप्रसंगः विरोधेचनप्रत्यक्षादिभिःश्रुतिर्बाध्याकिंतुवाधिकातानतपबाध्यतस्याःप्रवृत्त्यसंभवादित्याशयेनाह । प्रत्यक्षादीति

गोत्वाश्वत्वादिदृष्टांतोविषमस्त्वेतदाहृतः ॥ गवाश्वयोरभेदस्यप्रमाणंबोधकंनहि ॥ ५३ ॥ अ त्रजीवेशयोर्भेदोव्यवहारेनवस्तुतः ॥ श्रुतिसिद्धस्तयोरेवह्यभेदःपारमार्थिकः ॥ ५४ ॥ प्रत्य क्षादिप्रमासिद्धोभेदोयंसार्वलौकिकः ॥ अभेदस्त्वागमेनैवप्रतिपाद्यतएतयोः ॥ ५५ ॥ प्रत्यक्षा दिप्रमाणैश्चेद्विरोधःस्याच्छ्रुतेस्तदा ॥ बाध्याःस्युस्तेप्रत्यक्षाद्याबलीयस्त्वाच्छ्रुतेरपि ॥ ५६ ॥ यथेदंरूप्यमित्यस्यनेदंरूप्यमितिप्रथा ॥ बाधिकास्यात्तथावेदोऽध्यक्षादेर्बाधकोभवेत् ॥५७॥ नोपजीव्यविरोधोऽपितात्त्विकांशस्यबाधनात् ॥ व्यावहारिकभागोऽस्याऽध्यक्षादेर्नैवबाध्यते ॥५८॥

॥ ५५ ॥ तदपबाधनायैवतस्याःप्रवृत्तेर्बलीयस्त्वम् ॥ ५६ ॥ ननुप्रत्यक्षस्यज्येष्ठत्वात्कथंकनीयस्याःश्रुतेस्तद्बाधकतेतिचेन्न ज्येष्ठत्वंहि बाध्यत्वेहेतुः नतुबाधकत्वे कनीयसापिशुक्तिज्ञानेनज्येष्ठस्यरजतज्ञानस्यबाधदर्शनादित्याशयेनाह । यथेदमिति ॥ ५७ ॥ ननुप्रत्यक्षमुप जीव्योत्पन्नस्यभेदस्यकथंतद्बाध्यतेतिचेत्तत्राह । नेति । श्रुतिर्हितात्त्विकप्रामाण्यंप्रत्यक्षस्यबाधतेनचव्यावहारिकंप्रामाण्यंनाशयति ये नोपजीव्यविरोधः । तत्त्वज्ञानोत्पत्तिस्तुमिथ्याभूतप्रामाण्येभ्योऽपिनविरुद्धा वर्णेष्वारोपितेभ्योह्रस्वदीर्घादिधर्मेभ्योऽपिपदार्थज्ञानोत्प

त्तिदर्शनादितिभावः ॥ ५८ ॥ तथाचप्रत्यक्षभ्रांतिज्ञानस्यचंद्रप्रादेशिकज्ञानवत्कल्पितभेदविषयत्वाच्छ्रुतेश्चपारमार्थिकाभेदगोचरत्वान्न कोपिविरोधइत्याशयेनाह । जीवेशयोरिति । तत्रापिवाच्यगतभेदःप्रमांतरगोचरोलक्ष्याभेदस्तुश्रुतिबोध्यइत्याह । तत्रेति ॥ ५९ ॥ तमाह । अध्यक्षेति । अध्यक्षादिविरुद्धांशंप्रत्यक्षादिभिरभेदायोग्यतयानुभूयमानंविशिष्टांशंविहायनिर्विरुद्धंविशेष्यांशमादायतयोस्तत्त्वंप दार्थयोश्चितोरैक्यंश्रुतिस्तत्त्वमसिवाक्यंजगौ ॥ ६० ॥ तथाचप्रत्यक्षादिगोचरविरुद्धांशैक्याबोधकत्वात्तदविषयचिन्मात्राभेदावेदकत्वा न्नकोऽपिविरोधइतिफलितमाह । सार्वज्ञ्यमिति ॥ ६१ ॥ ननुमौढ्यादिधर्मान्वितजीवस्वरूपात्सार्वज्ञ्यादिधर्मान्वितेश्वरस्वरूपाच्चाति

जीवेशयोर्भिदाभ्रांतिरैक्यंत्वागमसंमतम् ॥ तत्रापिस्याद्भिदावाच्येनलक्ष्येब्रह्मजीवयोः ॥५९॥
अध्यक्षादिविरुद्धांशंत्यक्त्वालक्षणयातयोः ॥ निर्विरुद्धमुपादायचितोरैक्यंश्रुतिर्जगौ ॥ ६० ॥
सार्वज्ञ्यंचविमूढत्वंत्यक्त्वाध्यक्षादिगोचरम् ॥ शुद्धंतयोर्यदैक्यंतन्नचाध्यक्षादिगोचरम् ॥ ६१ ॥
ननुसार्वज्ञ्यमूढत्वान्वितजीवेशरूपताम् ॥ विहायान्यत्तयोरूपंनास्तिस्याद्यत्रलक्षणा ॥ ६२ ॥
मैवंसमीक्ष्यमाणेतुसर्वज्ञत्वविमूढते ॥ कल्पितेमाययायत्रावश्यंतद्रूपतातयोः ॥ ६३ ॥ शरी
राद्यहमंतस्यजडत्वात्कल्पितत्वतः ॥ परिशिष्टमुपादेयंरूपंजीवस्यवास्तवम् ॥ ६४ ॥ ॥

रिक्तंतयोःशुद्धमेकस्वरूपंनास्त्येवात्रोक्तंकथंलक्षणेतिनीलकंठःशंकते । नन्विति । यत्रतत्त्वमसिवाक्ये ॥ ६२ ॥ परिहरति । मैवमि ति । समीक्ष्यमाणेपरिदृश्यमानेसर्वज्ञत्वविमूढत्वेमाययायत्रचिन्मात्रेकल्पिते तद्रूपतापरमार्थतस्तत्स्वरूपताजीवेशयोरवश्यमभ्युपेया क ल्पितत्वेपरिदृश्यमानत्वंहेतुर्विचार्यमाणइतितदर्थः ॥ ६३ ॥ एतदेवस्फुटयति । शरीरादीति । देहादेरहंकारपर्यंतस्यजडत्वात्कल्पित त्वात्तद्बाधेपरिशिष्टंजीवस्वरूपमवश्यमंगीकर्तव्यं तदेवत्वंपदलक्ष्यमित्यर्थः ॥ ६४ ॥ ॥ ॥ ॥

तथाविमतंकल्पितंदृश्यत्वाद्रज्जुसर्पादिवदित्यादियुक्त्यामिथ्यात्वेनावश्यमभ्युपेयस्यसमस्तप्रपंचस्याधिष्ठानंसद्रूपंबलादंगीकार्यंनिरधिष्ठान भ्रमायोगान्निरवधिबाधायोगाच्चतदेवतत्पदलक्ष्यमित्याह। एवमिति ॥ ६५ ॥ अतइति। यतएवमतोनिरुपाधिसत्स्वरूपेब्रह्मणिसार्वज्ञ्यमूढत्वेआरोपात्कल्पितेनतुवास्तवे। तत्रदृष्टांतः। सत्येनिरुपाधिकेस्फटिकेलौहित्यादिकंयथाकल्पितंतद्वत् ॥ ६६ ॥ किंच। भेदबुद्धिर्यदियथार्थास्यात्तर्हिभेददर्शिनःपुरुषस्य मृत्योःसमृत्युमाप्नोतियइहनानेवपश्यतीत्याद्याश्रुतिर्नैवब्रूयात् यस्मादनर्थसंबंधोविपरीतदर्शिनएवयुज्यते तस्माद्भेदबुद्धेरपार्थतेत्याह। भेदबुद्धिरिति ॥ ६७ ॥ एवंभेददृशःश्रुतभयान्यथानुपपत्त्याभेदबुद्धेरयथार्थतामुपवर्ण्य तत्रकोमोहः

एवंजगदसद्युक्त्याधिष्ठानंब्रह्मसद्भवेत् ॥ यथारज्जावहिभ्रांतिस्तथेशेकल्पितंजगत् ॥ ६५ ॥
अतःसार्वज्ञ्यमूढत्वेनिरुपाधौनवस्तुतः॥ अध्यासात्कल्पितेसत्येस्फटिकेलोहितादिवत् ॥६६॥
भेदबुद्धिर्यदासत्यातदाभेददृशोभयम् ॥ नैवब्रूयाच्छ्रुतिस्तस्माद्भेदबुद्धेरपार्थता ॥ ६७ ॥ अभेदोयदिनेष्टःस्यान्मुक्तितज्ज्ञानतोनसा ॥ ब्रूयाद्भूतेततोविज्ञोह्यभेदःश्रुतिसंमतः ॥ ६८ ॥ कल्पितंश्रुतिमानेननिरस्तंप्रबलेनतत् ॥ सिद्धमैक्यंतयोर्वेदान्नाधिकंमानमिष्यते ॥ ६९ ॥

कःशोकएकत्वमनुपश्यतः तरतिशोकमात्मवित्। ब्रह्मविदाप्नोतिपरमित्यादिश्रुतावभेददर्शिनःश्रुतपुरुषार्थान्यथानुपपत्त्याऽभेदस्यतात्त्विकत्वमाविष्करोति। अभेदइति ॥ ६८ ॥ ननुनाहमीश्वरइतिप्रत्यक्षस्यकागतिरित्याशंक्यतत्प्रत्यक्षज्ञानस्यभ्रमत्वाच्चंद्रगतप्रादेशिकत्वप्रत्यक्षस्य शास्त्रेणेवश्रुतिमानेनबाधसंभवादभेदएवजीवेशयोर्वास्तवइत्याशयेनाह। कल्पितमिति। तथाचोक्तबुद्धिर्भ्रमःशास्त्रेणबाध्यमानत्वाच्चंद्रप्रादेशिकत्वबुद्धिवदित्यर्थः। ननुश्रुत्युत्थज्ञानस्यैवप्रत्यक्षज्ञानेनबाधःकिंनस्यादित्याशंक्याह। वेदादिति ॥ ६९ ॥

ननुमुनिभिःकपिलादिभिरात्मादेस्तत्त्वंबहुप्रकारेणनिर्णीतंविहायभवतोक्तंतत्त्वंकथमवधार्यंबह्नूनामनुसरणस्यन्याय्यत्वादितिनीलकंठःशंकते। ऋषिभिरिति। समाधानंप्रतिजानीते। शृण्विति॥ ७०॥ श्रुतिस्मृत्योरिति। तथाचप्रमाणलक्षणस्थंजैमिनीयंसूत्रं विरोधेत्वनपेक्षंस्यादसतिह्यनुमानमिति औदुंबरींस्पृष्ट्वोद्गायेदितिश्रुतिविरुद्धासर्वौदुंबरीवेष्टयितव्येतिस्मृतिर्मानंनवेतिसंशयेऽष्टकादिस्मृतिवन्मानमितिप्रासंपूर्वपक्षंतुशब्देनापाकरोति। कुतइत्यपेक्षायामाह। विरोधेस्मृतेःप्रामाण्यमनपेक्षमनादरणीयंस्याद्धियस्मादविरोधेमूलभूतश्रुत्यनु

ऋषिभिर्बहुधातत्त्वंनिर्णीतंतदपास्यच॥ भवतोक्तंकथंतत्त्वंसंधार्यमितिचेच्छृणु॥ ७०॥ श्रुतिस्मृत्योर्विरोधेहिस्मृतिःस्यात्तत्रदुर्बला॥ पौरुषेयतयातस्यास्तत्रचभ्रांतिसंभवात्॥ ७१॥
श्रुतेरपौरुषेयत्वान्निर्दोषत्वान्महत्त्वतः॥ स्वतःसिद्धप्रमाणत्वात्प्राबल्यंसिद्धमेवच॥ ७२॥
अतःश्रौतेमतेयोज्यमृषीणांसंमतंमतम्॥ विरुद्धांशंपरित्यज्यश्रुतेरत्यंतगौरवात्॥ ७३॥
ननुयुक्त्यान्वितंग्राह्यमृषेर्वाक्यंश्रुतेरिव॥ प्रतिदेहमसौभिन्नआत्मादुःखादिभेदतः॥ ७४॥
आत्मैक्येतुदरिद्रस्ययौवराजसुखंभवेत्॥ अयंदुःखीसुखीचायमनुभूतिःकथंत्विति॥ ७५॥

मापकतयास्मृतिरपिमानमितितदर्थः॥ ७१॥ तथाचमुनिवचनानांपौरुषेयतयासंभावितदोषवत्वाद्वेदस्यत्वपौरुषेयतयादोषगंधस्याप्यसंभावितत्वात्प्रबलप्रमाणत्वादन्यप्रमाणाऽनपेक्षमाणत्वात्तत्प्राबल्यमविवादमित्याह। श्रुतेरिति॥ ७२॥ तथाचवेदविरुद्धवचसांबहूनामप्यनुसरणंनन्याय्यंकिंतुतेषुश्रुतिविरुद्धमंशंपरित्यज्यावशिष्टोऽविरुद्धोंऽश उपादेयइत्याशयेनाह। अतइति॥ ७३॥ एवमुक्तोनीलकंठःशंकते। नन्विति। युक्तिमाविष्करोति। प्रतीति॥ ७४॥ विपक्षेतिप्रसंगमाह। आत्मैक्यइति। किंचायंसुखीअयंदुःखीत्यनुभूतिःकथंस्यात्॥ ७५॥ ॥ ॥ ॥ ॥ ॥ ॥

किंचमोक्षोऽपिभवदभिमतोनयुक्तइत्याह । पुरुषार्थइति । दुःखनाशएवपुरुषार्थोमोक्षोनतुसुखप्राप्तिर्यस्मात्सर्वंसुखंदुःखयुक्तमेवातोहेयमेवा तःसुखप्राप्तिलक्षणोमोक्षोभवत्संमतोयुक्तोनभवतीत्यर्थः ॥ ७६ ॥ सुखदुःखादिवैचित्र्यस्यहेतोःपक्षावृत्तित्वादात्मभेदासाधकत्वान्नेतिपरि हरति । मैवमिति । तथाचोक्तहेतुर्बुद्धेर्भेदंसाधयतिसचास्माकमिष्टएवेत्याशयेनाह । प्रतिदेहमिति । सुखदुःखादिवैचित्र्यस्यांतःकर णनिष्ठत्वेकामःसंकल्पइत्यादिश्रुतिर्मानम् ॥ ७७ ॥ ननुसुख्यहंदुःख्यहमित्यात्मनिष्ठंसुखादिकमवगाहमानःप्रत्ययःकथमुपपत्स्यतइत्या शंक्य ध्यायतीवलेलायतीवेत्यादिश्रुत्याबुद्धितादात्म्यापन्नआत्मनितद्धर्मारोपादित्याशयेनाह । पात्रस्थेष्विति ॥ ७८ ॥ तथाचोपा

पुरुषार्थोदुःखनाशःसुखंदुःखसमन्वितम् ॥ हेयंसर्वंतवमतेमोक्षःकःस्याद्भवन्मतः ॥ ७६ ॥ मै वंसुखादिवैचित्र्यंबुद्धेर्धर्मोनचात्मनः ॥ प्रतिदेहमसौबुद्धिर्भिन्नादुःखादिधर्मिणी ॥ ७७ ॥ पा त्रस्थेषुयथासूर्योजलेषुप्रतिबिंबितः ॥ स्वच्छेषुस्वच्छवद्भातिचंचलेष्वतिचंचलः ॥ ७८ ॥ चं चलत्वादयोधर्मानसूर्येसंतितावता ॥ तथादुःखादयोबुद्धेर्नानात्वात्स्युरनेकधा ॥ ७९ ॥ आ त्मनोनैवतेसंतिसूर्यस्येवाविकारिणः ॥ एतेनस्वर्गनरकौबंधमोक्षौभवाभवौ ॥ ८० ॥ ॥

धिधर्माश्चंचलत्वादयआरोपात्प्रतीयमानाअपिप्रतिबिंबेभासंतेबिंबंकदापिनसंस्पृशंतितथानानाविधांतःकरणधर्माआरोपादुपलभ्यमाना अपिप्रमातरिनिरुपाधिकमात्मानंकदापिनसंस्पृशंतीत्याशयेनाह चंचलत्वादयइति ॥ ७९ ॥ आत्मनइति । एतेनात्मनएकत्वेकस्य चित्स्वर्गःकस्यचिन्नरकःकस्यचिद्बंधःकस्यचिन्मोक्षःकस्यचिज्जन्मकस्यचिन्मरणंकथमुपपद्यतइत्याशंकापिपरिहृता स्वर्गादीनांप्रमातृनिष्ठ त्वात्तेषांचबुद्धिरूपोपाधिभेदाद्भिन्नत्वादित्याह । एतेनेति ॥ ८० ॥ ॥ ॥ ॥ ॥

व्याख्यातावविति । नचास्त्यौपाधिकैस्तैरात्मनोलेपइत्याह । नैवेति ॥ ८१ ॥ अवच्छेदभेदेनसुखादिभेदेदृष्टांतमाह । एकस्मिन्निति ॥ ८२ ॥ एतद्विशदयति । पादइति तयानुभूत्यासौप्रमातानभिद्यतेनवांतःकरणावच्छेदभेदेनभिद्यते ॥ ८३ ॥ फलितमाह । तथाचेति ॥ ८४ ॥ अथभेदस्यप्रमाणाविषयत्वादवास्तवत्वंसाधयति । श्रुतीति ॥ ८५ ॥ एतदुपपादयति । अध्यक्षादेरितिद्वाभ्यां ॥ ८६ ॥

व्याख्यातौमातृनिष्ठत्वान्मातॄणांबुद्धिभेदतः ॥ भिन्नत्वान्नैवतैरात्मालिप्यतेव्योमसूर्यवत् ॥८१॥ एकस्मिन्नपिदेहेऽस्मिन्मातुर्दुःखसुखेयथा ॥ पादाद्यंगेषुभिन्नेषुस्तस्तथाभिन्नधीमताम् ॥ ८२ ॥ पादेमेसुखमस्त्यद्यवेदनाशिरसीतिच ॥ अनुभूतिस्तयानासौभिद्यतेजीवएववा ॥ ८३ ॥ तथाचास्त्येकएवासौसर्वदेहेषुभासकः ॥ उपाधेरेवभिन्नत्वात्कथंभेदःपरात्मनि ॥ ८४ ॥ श्रुतिसिद्धात्मनोभेदेमानमन्यन्नदृश्यते ॥ येनभेदप्रसिद्धिःस्यात्तस्माद्भेदोनवास्तवः ॥ ८५ ॥ अध्यक्षादेःप्रमाणस्यविषयत्वंनचात्मनः ॥ तद्भेदस्यविषयत्वमध्यक्षादेःकथंभवेत् ॥ ८६ ॥ प्रतियोग्यात्मविज्ञानाधीनज्ञाताभिदायतः ॥ ब्रह्मात्मैक्यमतःसिद्धंश्रुतिभिर्युक्तिभिस्तथा ॥८७॥ विषयोत्थसुखस्यैवदुःखत्वंहेयतातथा ॥ नैवंब्रह्मसुखंकिंतुपुरुषार्थस्तदेवहि ॥ ८८ ॥ योभूमातत्सुखंनाल्पेसुखमस्तीतिवैदिकम् ॥ वाक्यंब्रह्मसुखेमानंसिद्धंब्रह्मसुखंततः ॥ ८९ ॥ ॥

॥ ८७ ॥ यत्तुपुरुषार्थइत्याद्युक्तंतन्निराचष्टे । विषयेति । अशरीरंवावसंतंनप्रियाप्रियेस्पृशतइत्यादिश्रुत्यादुःखाविनाभूतविषयसुखस्यतत्रासंस्पर्शाभिधानादितिभावः ॥ ८८ ॥ ननुतथाविधमोक्षस्वरूपस्यब्रह्मणःसुखरूपत्वेकिंप्रमाणमित्याशंक्याह । यइति । ब्रह्मसुखेब्रह्म

स्वरूपभूतेसुखे ॥ ८९ ॥ यस्माद्भेदसिद्धोऽभेदस्तस्माद्योभेदवादीसवेदबाह्यत्वेनासंभाष्यत्वात्सर्वथोपेक्षणीयइत्याशयेनाह । तस्मादिति ॥ ९० ॥ श्रुत्यैवभेददर्शिनोनिंदितत्वाद्ब्रह्माद्वैतमेवश्रुतितात्पर्यविषयभूतंवेदवादिभिरादर्तव्यमित्याशयेनाह । मृत्योरिति ॥ ९१ ॥ अतोऽपरिच्छिन्नात्परब्रह्मणः ॥ ९२ ॥ विभेदजनकेऽज्ञानेनाशमात्यंतिकंगतेइतिस्मृत्याब्रह्मात्मनोर्भेदस्याऽज्ञानकल्पितत्वादद्वैतात्मसाक्षा

तस्माद्ब्रह्माद्वयेसिद्धेवेदांतैर्युक्तिभिस्तथा ॥ वेदबाह्योभवेद्वादीभेदंयस्त्वात्मनोवदेत् ॥ ९० ॥
मृत्योःसमृत्युमाप्नोतिनेहनानास्तिकिंचन ॥ अन्योसावन्यएवास्मीत्येवंज्ञोदेवतापशुः ॥ ९१ ॥
अतोन्यदार्तमित्यादिभेदनिंदापुरःसरम् ॥ ब्रह्माद्वैतात्मनोरैक्येतात्पर्यंभवतिश्रुतेः ॥ ९२ ॥
अज्ञानंभेदकंयस्यसम्यग्ज्ञानेनबाधितम् ॥ आत्मनोब्रह्मणोभेदमसंतंकःकरिष्यति ॥ ९३ ॥
श्रुत्वेत्थंनीलकंठोपितूष्णीमेषबभूवह ॥ वेदांतैःसिद्धमद्वैतंमनसासंविचारयन् ॥ ९४ ॥ एवं
युक्तिशतैःशैवंनीलकंठंविजित्यतम् ॥ अद्वैतेस्थापयामासभाष्यकारोदयानिधिः ॥ ९५ ॥ नी
लकंठंजितंश्रुत्वाशंकरेणमहात्मना ॥ विद्योदयनादयस्तुकलिमुख्याश्चकंपिरे ॥ ९६ ॥ नैज
भाष्याणिदेशेषुसौराष्ट्रादिषुभिक्षुराट् ॥ वितत्यबहुधाकृष्णपुरींद्वारवतीमगात् ॥ ९७ ॥ भुज
योःशंखचक्रादितप्तचिह्नभृतोजनाः ॥ जिताःशंकरशिष्यैस्तेवैष्णवाःपांचरात्रिकाः ॥ ९८ ॥

त्कारेणतन्नाशेसर्वानर्थकरभेदस्यस्थातुमप्यशक्यत्वाद्ब्रह्माद्वैतज्ञानमेवपरमपुरुषार्थानन्यसाधनमित्युक्तमित्याह । अज्ञानमिति ॥ ९३ ॥ उपसंहरति । श्रुत्वेति ॥ ९४ ॥ ९५ ॥ ९६ ॥ ९७ ॥ ९८ ॥ ॥ ॥ ॥ ॥

॥ ९९ ॥ १०० ॥ गिरावक्तव्यंचेतिशेषः ॥ १ ॥ २ ॥ ३ ॥ ननुमुमुक्षुभिर्ब्रह्मानुसंधानमेवसर्वथाकुतोनकर्तव्यमित्याशंक्य कृषिर्भूवा चकःशब्दोणश्चनिर्वृतिवाचकः । तयोरैक्यंपरंब्रह्मकृष्णइत्यभिधीयतइतिनिरुक्तिवचनेनकृष्णब्रह्मशब्दयोःपर्यायत्वाभिधानात्तत्संधानमे वब्रह्मानुसंधानमित्याशयेनाह । कृषिरिति ॥ ४ ॥ ५ ॥ तथायत्सत्तामाश्रित्यजायंतेयेनानंदेनानंदीभवंतियेनचिदात्मनास्फुरंतिसस

तत्रस्थित्वास्वयंकृष्णपूजनंकृतवान्यतिः ॥ घोषयामाससर्वत्रध्येयोनारायणस्त्विति ॥ ९९ ॥ यस्यसंसारसंतापोवारणीयोभवेन्मतः ॥ कृष्णभक्तिरतेनैवभाव्यंतेनसदैवहि ॥ १०० ॥ नारकीयातनायस्यबाधिकाभातितेनच ॥ कृष्णकृष्णेतिकृष्णेतिस्मर्तव्यंमनसागिरा ॥ १ ॥ देहाभिमानोयस्यातःप्रबलोननिवर्तते ॥ शरण्यंकृष्णमाश्रित्यस्थेयंतस्यैवचिंतने ॥ २ ॥ अविद्याकामकर्मादिहेतुकंबंधनंभवेत् ॥ निवर्त्यंयस्यतेनादौध्येयःकृष्णोहृदिस्थितः ॥ ३ ॥ कृषिर्भूवाचकःशब्दस्तेनसत्ताप्रदोहरिः ॥ आनंदवाचकोणश्चसर्वानंदकरोह्यतः ॥ ४ ॥ सत्तामाश्रित्यभूतानिजायंतेसुखलेशतः ॥ आनंदेनैवजीवंतिज्ञानमानंदतोऽपृथक् ॥ ५ ॥ सत्यज्ञानसुखात्मासौकृष्णाख्यःपरमेश्वरः ॥ आत्माप्रियःसुहृत्साक्षीध्येयोऽतःसर्वदेहिनाम् ॥ ६ ॥

त्यज्ञानानंदस्वरूपोब्रह्मादिशब्दावबोध्यःकृष्णएवसर्वेषामप्यनुसंधातुंयोग्यइत्याह । सत्येति । अहमात्मागुडाकेशसर्वभूताशयस्थितइत्यादिवचनान्यनुसृत्याह । आत्मेति ॥ ६ ॥ ॥ ॥ ॥ ॥ ॥

 त्रिभिर्गुणमयैर्भावैरेभिःसर्वमिदंजगत् मोहितंनाभिजानातिमामेभ्यःपरमव्ययमित्यादिवचनान्यनुसृत्याह । कृष्णमिति ॥ ७ ॥ ८ ॥ ९ ॥ 



कृष्णंविस्मृत्यलोकोऽयंजडासत्यासुखात्मनि ॥ देहादौसज्जतेमूढोमाययाभ्रमितोऽसकृत् ॥७॥
अतोवदामिभूतानांसत्सुखाविर्भवायच ॥ सर्वबंधहरःकृष्णोध्येयोज्ञेयोऽर्च्यएवसः ॥ ८ ॥ एवं
सदुपदेशंसघोषयित्वायतीश्वरः ॥ कृष्णभक्तिंदृढीकृत्यययावावंतिकांपुरीम् ॥ ९ ॥ तांप्रवि
श्यमहेशंस्वंववंदेपार्वतीपतिम् ॥ स्थित्वाशिवालयेतत्रपद्मपादंवचोऽब्रवीत् ॥ ११० ॥ पद्मपा
दयतिश्रेष्ठगच्छत्वंभास्करंप्रति ॥ कथयास्मत्प्रवृत्तिंभोस्तस्याग्रेप्राज्ञमानिनः ॥ ११ ॥ गुरो
राज्ञांपुरस्कृत्यभास्करस्यगृहंययौ ॥ प्रविश्यासौगृहंतस्यपद्मपादोऽथभास्करम् ॥ १२ ॥ दृ
ष्ट्वाब्रवीदिदंवाक्यंशिष्यमध्येऽव्यवस्थितम् ॥ भगवाञ्छंकराचार्योजयतिस्मसयोगिराट् ॥१३॥
अद्वितीयमतंलोकेप्रथयन्श्रुतिसंमतम् ॥ आहसत्वांममस्वामीभाष्यकारउदारधीः ॥ १४ ॥
शारीरकेत्वयाकारिवृत्तिःस्वोत्प्रेक्षयातुया ॥ तांतिरस्कृत्यवेदांतैर्युक्तिभिःस्मृतिभिःसताम् ॥१५॥
शारीरकेस्वयंभाष्यंब्रह्माद्वैतात्मतत्परम् ॥ कृत्वाविजित्यविबुधांस्त्वांविजेतुंसमागतः ॥ १६ ॥
गृह्यतांमनसालोच्यसुमतंकुमतंत्यज ॥ यद्वास्मत्तर्कदंभोलिघातात्संरक्ष्यतांमतम् ॥ १७ ॥ 
इत्येवमुक्तवंतंतंहसन्नूचेऽथभास्करः ॥ अश्रुत्वामामकंवृत्तंजल्पतिस्मनिरंकुशः ॥ १८ ॥

॥ ११० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ अकारिकृता सतांमुनीनां ॥ १५ ॥ १६ ॥ दंभोलिरशनिः ॥ १७ ॥ १८ ॥ ॥

कणभुगिति । तदतिप्रसिद्धंकणादस्यजल्पितंकपिलस्यचप्रलापनंस्वल्पंकृत्वास्वल्पप्रलापंकृत्वायेननिरस्तम् ॥ १९ ॥ १२० ॥ २१ ॥ २२ ॥

कणभुग्जल्पितंस्वल्पंकपिलस्यप्रलापनम् ॥ कृत्वायेननिरस्तंतत्तस्याग्रेकोऽस्तिभिक्षुकः ॥ १९ ॥ श्रुत्वेत्थंपद्मपादस्तंप्राहमैवंवदात्रभोः ॥ गिरीणादारणेदक्षष्टंकोवज्रस्यनक्षमः ॥ १२० ॥ इत्थं तंपद्मपादोपिप्रोच्ययुक्तियुतंवचः ॥ ततस्तेनसशिष्येणभास्करेणाजगामह ॥ २१ ॥ समीपे भाष्यकारस्यशिष्यवर्गावृतस्यच ॥ दंडवत्प्रणिपत्याहगुरुंशिष्यःसनंदनः ॥ २२ ॥ आगतोऽयं गुरोभट्टभास्करोऽसावितिस्फुटम् ॥ सोऽपिशिष्यैःसमागत्यप्रणम्याभिमुखेस्थितः ॥ २३ ॥ शंकराचार्यमालोक्याब्रवीद्वाक्यंसभास्करः ॥ श्रुतंमयापिलोकेभ्यस्तवशिष्यमुखात्तथा ॥ २४ ॥ शारीरकेत्वयाभाष्यंब्रह्माद्वैतपरंकृतम् ॥ कथमद्वैतमार्गस्तेसंमतस्तत्रमेवद ॥ २५ ॥ अथ श्रीशंकराचार्योब्रह्माद्वैतमतंश्रुतेः ॥ संमतंतत्त्वमस्यादिवाक्यैरित्थंसमाददे ॥ २६ ॥ एकमे वाद्वितीयंसत्परब्रह्मास्तिवस्तुतः ॥ असंगममलंज्योतिःकूटस्थंनिर्विकल्पकम् ॥ २७ ॥ तदे वाविद्ययाजीवभावंप्राप्तमनेकधा ॥ ईश्वरत्वंप्रपंचत्वंतेनैवात्मनिकल्पितम् ॥ २८ ॥ तयाक ल्पनयानादौसंसारेभ्रांतिकल्पिते ॥ जन्ममृत्युजरादुःखैःसंबद्धंस्वंप्रपश्यति ॥ २९ ॥ ॥

॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ तदेवेति । तेनैवाविद्यावृतेनजीवत्वंप्राप्तेनात्मन्येवस्वस्मिन्नेव ॥ २८ ॥ तथाभूतकल्पनयैवसं सरतीत्याह । तयेति ॥ २९ ॥ ॥ ॥ ॥ ॥ ॥ ॥

एतदुपपादयति । पुण्येति ॥ १३० ॥ विश्रांतिमिति । तदेतद्वेदानुवचनेनब्राह्मणाविविदिषंतियज्ञेनदानेनतपसानाशकेन यस्यदेवेपराभक्तिरित्यादिश्रुतिमनुसृत्याह । स्ववर्णेति ॥ ३१ ॥ शांतोदांतउपरतस्तितिक्षुःसमाहितोभूत्वात्मन्येवात्मानंपश्येदित्यादिश्रुतिमनुरुध्याह । प्राप्येति । तद्विज्ञानार्थंसगुरुमेवाभिगच्छेदित्यादिवचनानुरोधेनाह । गुरुमिति ॥ ३२ ॥ तदिति । ब्रह्मविदाप्नोतिपरं तरतिशोकमात्म

पुण्यपापेप्रकल्प्योभेसुखंदुःखंचविंदति ॥ अधश्चोर्ध्वंभ्रमन्नद्वैतंभ्रांतिबुद्ध्याप्रपश्यति ॥ १३० ॥ विश्रांतिंनैवकुत्रापिविंदत्यत्रमहीतले ॥ स्ववर्णाश्रमधर्मेणभगवत्तोषणात्सदा ॥ ३१ ॥ प्राप्य साधनसंपत्तिंमुमुक्षुत्वमवाप्यच ॥ गुरुमाश्रित्यवेदांतवाक्यैरद्वैतबोधकैः ॥ ३२ ॥ तत्त्वमस्यादिमुख्यैस्तैःश्रुत्वात्मानंचिदद्वयम् ॥ विनिश्चित्यपरब्रह्माद्वैततत्त्वंविमुच्यते ॥ ३३ ॥ एवंवेदांतवाक्यानांसंमतंमतमद्वयम् ॥ विनिर्णीतंमयासूत्रभाष्येवेदांतनिर्णये ॥ ३४ ॥ इत्याचार्यवचःश्रुत्वाप्रोक्तवान्भट्टभास्करः ॥ स्यादेवंयदिसंसिद्ध्येदविद्याभवतोमता ॥ ३५ ॥ काचेयं भवतोऽविद्यासंमताबंधकारिणी ॥ भेददृष्टिरविद्याचेत्तदावाच्यंत्वयायते ॥ ३६ ॥ भेददृष्टेरविद्यात्वंकिंनामाभिमतंकिल ॥ विद्याया‍व्यतिरिक्तत्वमविद्यात्वमथास्तिवा ॥ ३७ ॥ ॥

विदित्यादिश्रुतिमनुसृत्याह । विनिश्चित्येति ॥ ३३ ॥ ३४ ॥ ३५ ॥ कुतोनसिद्ध्यतीत्याशंक्यविकल्पासहत्वादित्याशयेनपृच्छति । केति । किंभेददृष्टिरविद्याकिंवाततोभिन्नेतिविकल्प्यआद्येपिभेददृष्टेःस्वाभिन्नमविद्यात्वंवक्तव्यमित्याह । भेदेति ॥ ३६ ॥ भेददृष्टेरिति । किंविद्याव्यतिरिक्तत्वाद्भेददृष्टिरविद्येत्युच्यतेकिंवातदभावत्वादितिविकल्पयति । विद्यायाइति ॥ ३७ ॥ ॥ ॥

अभावइति । अंत्यंप्रत्याह । तत्रेति । भेददृष्टेर्भावत्वेनापरोक्षप्रतीतेरभावरूपत्वासंभवादित्याह । अपरोक्षेति ॥ ३८ ॥ प्रथमंनिराह । त थेति । विद्यातोऽन्यतिरिक्तंहिद्रव्यादिनचभेददर्शनंतद्रूपंयेनततोविलक्षणंभवेदित्याह । भेदेति ॥ ३९ ॥ विद्यातइति । यतएवमतोभेद दृष्टिरविद्येतिनैवसंभवतीत्यर्थः । नन्वस्तुभेददर्शनव्यतिरिक्ताविद्याविरोधिनीविद्यानिवर्त्याअविद्येतिद्वितीयंकल्पमनुवदति । अथेति । ॥ ४० ॥ एवंभूताविद्यापिकिमनित्यानित्यावेतिविकल्प्यदूषयति । सेति ॥ ४१ ॥ ननुनित्यत्वेऽपितत्त्वज्ञानेनास्यानिवृत्तिसंभवान्नोक्त

अभावोवाथविद्यायास्तत्रांत्योनैवयुज्यते ॥ अपरोक्षप्रतीतेःस्यान्नाभावोभेददर्शनम् ॥ ३८ ॥
तथाद्येपर्युदासोऽपिविद्यातोनैवयुज्यते ॥ अपरोक्षप्रतीतेःस्यान्नाविद्याभेददर्शनम् ॥ ३९ ॥
विद्यातोयेनचान्यत्स्यादतोविद्यानसंभवेत् ॥ अथाविद्यात्वयाभिन्नासंमताभेददर्शनात् ॥ ४० ॥
साप्यनित्याथवानित्यातत्रांत्योनैवयुज्यते ॥ अनिर्मोक्षप्रसंगादप्यद्वैतस्यक्षतेस्तथा ॥ ४१ ॥
ब्रह्मवन्ननिवर्त्यास्यात्तत्त्वज्ञानेनसापिच ॥ अविद्यासिद्धमेवेष्टमविद्यावादिनस्तव ॥ ४२ ॥ अ
थानित्यामतातत्रवक्तव्यंजायतेकुतः ॥ अनित्याकार्यरूपास्याद्भ्रातिजन्याथवाभवेत् ॥ ४३ ॥

दोषद्वितयप्रसरइत्याशंक्याह । ब्रह्मवदिति । तथाचाविद्यानित्यत्ववादिनस्तवमोक्षाद्वैतरूपेष्टमपिअज्ञानसिद्धमेवनतुविचारतः नित्यज्ञा नानिवर्त्यत्वप्रसिद्ध्येष्टसिद्धेर्दूरनिरस्तत्वादित्यर्थः ॥ ४२ ॥ आद्येप्याह । अथेति । तत्रापिकिंमृदादिकारणजन्यघटादिकार्यवत्कार्यरूप त्वादनित्याकिंवाभ्रांतिजन्यरज्जूरगतुल्यत्वादनित्येति विकल्पयति । अनित्येति ॥ ४३ ॥ ॥ ॥ ॥

उभयत्रेति । उभयविधकार्यस्यापिनिर्निमित्तकत्वाभावात्तन्निमित्तंवाच्यंतत्किमविद्यैवोतान्यत् । नाद्यः । तत्राप्युक्तविकल्पोत्थानादनव स्थापातात् द्वितीयेऽपितत्किंब्रह्मोतान्यत् नाद्यः कूटस्थस्यनिर्विशेषस्यतस्यतथात्वानुपपत्तेः नद्वितीयः तस्यानिरूपणात् एकमेवाद्वितीय मितिश्रुतिविरोधाच्चेत्याशयेनाह । अनवस्थादयइति ॥४४॥ नन्वनिर्वचनीयाविद्यावादिनामस्माकमेतानिदूषणानिभूषणान्येवेत्याशंक्या ह । किंचेति । किंत्वयाभिमताविद्याब्रह्मणःस्याद्रुतजीवस्य आद्यंप्रत्याह । नाद्यइति ॥ ४५ ॥ ४६ ॥ सजीवःकिंब्रह्मणोऽतिरिक्तःकिंवातद



उभयत्रनिमित्तंकिंभवतोऽभिमतंवद ॥ अनवस्थादयोदोषाउभयत्रभवंतिते ॥ ४४ ॥ किंच स्याद्ब्रह्मणोऽविद्याजीवस्याथमतात्वया ॥ नाद्यःशुद्धंपरब्रह्ममतंतेवैप्रतिश्रुतौ ॥ ४५ ॥ शुद्धचै तन्यरूपत्वान्नित्यानंदस्वभावतः ॥ ब्रह्मणोनैवसंगच्छेदविद्यामलिनाजडा ॥ ४६ ॥ जीवस्या पिनयुज्येतयतस्तेसंमतंपरम् ॥ ब्रह्मैवजीवरूपेणसंसृतौसंप्रवर्तते ॥ ४७ ॥ हंतभोकिंत्वयाऽवि द्यासंमतासानिराश्रया ॥ खपुष्पतुल्यामिथ्याचजितंदंभिभिराग्रहात् ॥ ४८ ॥ तस्मादविद्या नास्त्येवनवेशस्यास्तिभेददा ॥ किंतुजीवस्यदेहादावात्मबुद्धिर्भ्रमात्मिका ॥ ४९ ॥ ॥

नतिरिक्तः । नाद्यः । अपसिद्धांतापातान्नद्वितीयउक्तदोषप्रसरादित्याशयेनद्वितीयंप्रत्याह । जीवस्येति ॥ ४७ ॥ ननुनिराश्रयैवसा स्त्वितिचेत्तत्राह । हंतेति । तर्हियुक्तियुक्तमप्यनंगीकुर्वद्भिरस्माकंमतंसर्वैरप्यपरिहार्यमितिस्वमतोत्कर्षताख्यापनायव्यापृतैर्दुराग्रहवद्भि र्जितमित्युपहासेनोत्तरमाह । जितमिति ॥ ४८ ॥ तस्मादिति । नन्वेवंतर्हिमायाचाविद्याचस्वयमेवभवतीत्यादिवचनोक्ताविद्यास्वरू पंतवकिमभिमतमित्याशंक्यदेहादावात्मत्वग्रहणेनब्रह्मस्वरूपाग्रहणात्मिकेत्याह । किंत्विति ॥ ४९ ॥ ॥ ॥

ब्रह्मणइति । एतदविद्यानिवर्तिकैवतत्त्वमस्यादिवाक्योत्थाविद्येत्याशयेनाह । तत्त्वमस्यादीति । आदिनामननिदिध्यासनग्रहः ॥ ॥ ५० ॥ ५१ ॥ ननुतत्त्वज्ञानेनाविद्यानिवृत्तावपिनकार्यविनाशरूपोबाधःप्रपंचस्यसंभवतिकिंतुनिवृत्त्ययोग्यंविश्वं निवृत्त्ययोग्यब्रह्मकार्यत्वात्प्रपंचस्येत्याह । नेति । एवंचप्रपंचस्यसत्यत्वमेवसिद्धं नतुभवदभिमतंमिथ्यात्वमित्याह । प्रपंचस्येति ॥ ५२ ॥ वेदेष्वित्यादिविवृणोति । ब्रह्मेति । सदेवसोम्येदमग्रआसीत् सच्चत्यच्चाभवदित्यादिश्रुतिषुकारणस्वरूपेणकार्यस्वरूपेणचस्वयंब्रह्मैवस्थितंप्रपंचोनसद्रूपब्रह्मातिरिक्तस्तदुपादेयत्वाद्यद्यदुपादेयंतत्ततोनभिद्यते यथामृदोघटइतिसन्नयात्प्रपंचस्यसत्यतयानमिथ्यात्वमित्याशयेनाह । ततइति ॥ ५३ ॥

ब्रह्मणोऽप्रतिपत्तिश्चाविद्यास्माभिरियंमता ॥ तत्त्वमस्यादिवाक्यानांश्रवणादिभिरादरात् ॥५०॥
उत्पन्नाब्रह्मविद्यायातयासाचोभयात्मिका ॥ अविद्याविप्रणश्येद्द्वैग्रहणाग्रहणाभिधा ॥ ५१ ॥
नप्रपंचस्यबाधोऽस्तिब्रह्मकार्यत्वतोऽस्यहि ॥ प्रपंचस्यास्तिसत्यत्वंसिद्धंवेदेषुसन्नयात् ॥ ५२ ॥
ब्रह्मैवकारणत्वेनकार्यत्वेनचवैस्वयम् ॥ स्थितंततोनमिथ्यात्वंप्रपंचस्यास्यसंभवेत् ॥ ५३ ॥
नब्रह्मगोचरंज्ञानंमिथ्याभवितुमर्हति ॥ ननुप्रपंचसत्यत्वेकथंमोक्षोभवन्मते ॥ ५४ ॥ मैवंयस्य
मतेमिथ्याकथंमोक्षोऽस्तितन्मते ॥ ननुप्रपंचबाधेस्यात्तत्त्वज्ञानेनमुक्तिता ॥ ५५ ॥ ॥

किंच तत्त्वमस्यादिवाक्योत्थंब्रह्मविषयंज्ञानंसत्यंमिथ्यावा नाद्यः ब्रह्मातिरिक्तास्तित्ववादिनस्तवापसिद्धांतापातान्नद्वितीयःमिथ्याभूतस्यस्वाप्निकज्ञानस्यसत्यभूतजाग्रदविषयत्वस्येवमिथ्याभूतस्यज्ञानस्यसत्स्वरूपगोचरत्वायोगादित्याशयेनाह । नेति । ननुप्रपंचस्यसत्यत्वेकथंज्ञानात्तन्निवृत्तिर्नहिसत्यंवस्तुज्ञानान्निवृत्तंदृष्टं तदनिवृत्तौचकथं मोक्षोभवन्मतइत्याशंकते । नन्विति ॥ ५४ ॥ प्रपंचस्यसत्यत्वे मोक्षःसंभवतीतिस्वसिद्धांतसमर्थनायशंकासमाधानाभ्यांपरराद्धांतमपाकर्तुमनोधत्ते । मैवंयस्येति ॥ ५५ ॥ ॥ ॥

॥ ५६ ॥ ५७ ॥ मैवमिति । मिथ्याभूतस्यनिवृत्तस्यापिपुनःपुनरुत्पत्तिदर्शनात्तथाभूतनिवृत्तेरकिंचित्करत्वान्मोक्षासिद्धेरित्याह । नित्यमिति ॥ ५८ ॥ एवंपरमतेदूषणमभिधायस्वमतेतन्निराकरोति । अस्मदिति ॥ ५९ ॥ नहिप्रतिज्ञामात्रादर्थसिद्धिरित्याशंक्यनिदर्शनमाह । यथेति । तार्क्ष्यस्यगरुडस्यध्यानेन ॥१६०॥ दृष्टांतांतरमाह । यथेति । तथाच तरतिशोकमात्मविदितिश्रुत्याशोकनिवृत्तिसा

स्वप्नबंधोयथामिथ्याजाग्रद्बोधेननश्यति ॥ तथाजाग्रत्प्रपंचोऽयंबंधोनश्यतिबोधतः ॥ ५६ ॥
यथास्वप्नपिशाचोसन्बाधितःसुखदोभवेत् ॥ तथामिथ्याप्रपंचोऽयंबाधितोमोक्षदोभवेत् ॥५७॥
मैवंनित्यंयथास्वप्नोजायतेचनृणांतथा ॥ बंधोभवन्मतेनित्यंस्यान्नमोक्षःकदाचन ॥ ५८ ॥
अस्मन्मतेतुबोधेनश्रौतकर्मयुतेनच ॥ सत्योऽपिबंधएवासौनृणांसद्योनिवर्तते ॥ ५९ ॥ यथा
सत्यंविषंतार्क्ष्यध्यानेनविनिवर्तते ॥ तथैवज्ञानकर्मभ्यांसत्योबंधोनिवर्तते ॥ १६० ॥ यथैनो
ब्रह्महत्यादिसत्यंवैसेतुदर्शनात् ॥ निवर्ततेतथाबंधोज्ञानेनविनिवर्तते ॥ ६१ ॥ प्रपंचोब्रह्मणो
भिन्नाभिन्नोऽयंसंमतोऽस्तिमे ॥ भेदाभेदोह्यतःसिद्धःप्रपंचस्यतथात्मनाम् ॥ ६२ ॥ ब्रह्मणास
हसद्युक्त्याश्रुतीनांसंमतोऽप्यसौ ॥ भेदाभेदमतेऽपिस्याद्विरोधइतिचेच्छृणु ॥ ६३ ॥ ॥

धनत्वेनविहितस्यात्मज्ञानस्यस्वल्पभूतशोकस्यापिनिबर्हणसामर्थ्यंकल्प्यतइतिभावः ॥ ६१ ॥ एवंप्रपंचस्यसत्यत्वंप्रसाध्य तस्य जीवानांचब्रह्मणाभिन्नाभिन्नतांसाधयितुमुपक्रमते । प्रपंचइति ॥ ६२ ॥ ब्रह्मणेति । यतोवाइमानिभूतानिजायंते द्वासुपर्णासयुजासखायौ सर्वंखल्विदंब्रह्म तत्त्वमसीत्यादिश्रुतीनामप्यसौभेदाभेदःसंमतइत्याह । श्रुतीनामिति । ननुभेदाभेदयोर्विरोधान्नैकत्रसमवायइत्याशंक्य

परिहरति। भेदेति ॥ ६३ ॥ एकस्येति। तस्यतत्पूर्वैंप्रमाणपूर्वकंनानात्वमवगम्यतेतथाचप्रमाणा द्यत्राभेदोऽभ्युपगम्यतेतत्रप्रमाणसिद्धोऽपिभेदःकुतोनांगीक्रियतेइत्याह। कस्मादिति ॥ ६४ ॥ यत्रहिप्रमाणविरोधस्तत्रहिविरुद्धमितिप्रत्ययोयत्तुयथाप्रमाणेनावगम्यतेतस्यतथात्वमविरुद्धमेव यथाकुंडलमिदंसुवर्णमितिप्रत्ययेव्यक्तभेदाभेदौचकास्तस्तद्वदित्याशयेनाह। यदिति। प्रतीयतेचसर्वमेवगवाश्वादिवस्तुजातंजात्यात्मनाऽभिन्नंव्यक्त्यात्मनाभिन्नमतोममतेनकोऽपिविरोधइत्याह। वस्तुजातमिति ॥ ६५ ॥ क्वचिदपिवस्तुभिन्न

एकस्यैकत्वमस्तीतिप्रमाणादवगम्यते ॥ नानात्वंतस्यतत्पूर्वैंकस्माद्भेदोऽपिनेष्यते ॥ ६४ ॥
यत्प्रमाणैःपरिच्छिन्नमविरुद्धंहितत्तथा ॥ वस्तुजातंगवाश्वादिभिन्नाभिन्नंप्रतीयते ॥ ६५ ॥
नह्यभिन्नंहिभिन्नंचक्वचित्केनचिदेवहि ॥ वस्त्वेकरूपमेवेतिवक्तुमप्यत्रशक्यते ॥ ६६ ॥ सद्द्रव्यत्वादिनासर्वमभिन्नंजातिरूपतः ॥ व्यक्त्यात्मनातुभिन्नंतत्स्यादन्योन्यविभेदतः ॥ ६७ ॥
प्रतीयतेचेदुभयंविरोधःकोऽयमुच्यते ॥ अविरोधेविरोधेचप्रमाणंकारणंमतम् ॥ ६८ ॥ एकरूपंप्रतीतत्वाद्विरूपंतत्तथेष्यताम् ॥ एकरूपंभवेदेकमितिनेश्वरभाषितम् ॥ ६९ ॥ भिन्नाभिन्नंयतःसर्वंवस्तुजातंप्रतीयते ॥ भेदाभेदमतंतस्मान्निरवद्यमवेहिभोः ॥ १७० ॥ ॥

मभिन्नंनचकिंतुसर्वमपिवस्त्वेकरूपमेवेत्यत्रवादिकदंबेकेनचिदपिवादिनावक्तुंनहिशक्यतइत्याह। नहीति ॥ ६६ ॥ तत्रहेतुमाह। सदिति ॥ ६७ ॥ ६८ ॥ तथाप्रतीतत्वादेवप्रमाणसिद्धमपिनाभ्युपेयमित्यनुपपन्नंतथाभूतेश्वराज्ञाभावादित्याह। एकरूपमिति ॥ ६९ ॥ फलितमाह। भिन्नाभिन्नमिति ॥ १७० ॥ ॥ ॥ ॥ ॥ ॥ ॥

ननुप्रमाणेनापिप्रतीयमानमसंभवितंकथमभ्युपगंतुंशक्यंप्रतीयमानमपिमायाविकृतंवस्तुसत्वेननकेनचिदुपादीयतइत्युपहासपूर्वकंपरिहरति । नन्विति ॥ ७१ ॥ भेदाभेदवादीब्रूते । सत्यमिति ॥ ७२ ॥ किंतदिति । किमेकस्मिन्नधिकरणेयुगपदवस्थानायोग्यत्वमनयोर्विरुद्धत्वंकिंवाघटत्वपटत्वयोःक्रमेणाप्येकस्मिन्नधिकरणेऽवस्थानायोग्यत्वमितिविकल्पार्थः ॥ ७३ ॥ कार्यकारणयोस्तुभिन्नाभिन्नात्वे नोक्तद्विविधायाअपिविरुद्धतायाःसंभवः मृद्घटयोःसुवर्णकुंडलयोःसर्वजनीनाबाधितासंदिग्धसामानाधिकरण्यप्रत्ययेनभेदाभेदयोर्व्यवस्थितत्वा

ननुशीतोष्णयोर्यद्वद्विरोधित्वंपरस्परम् ॥ विभेदाभेदयोस्तद्वद्विरुद्धत्वंविभातिनः ॥ ७१ ॥ सत्यंतवापराधोनोकिंतुतेबुद्धिरीदृशी ॥ वक्तव्यंतेविरोधोऽपिसंमतःकीदृशोभवेत् ॥ ७२ ॥ किंतत्सहानवस्थानंतेजस्तिमिरयोरिव ॥ विभिन्नदेशवर्तित्वंविरोधःसंमतोऽथवा ॥ ७३ ॥ नोभयंप्रकृतेब्रह्मकार्यकारणरूपतः ॥ भातिप्रपंचरूपेणतथाब्रह्मात्मनास्थितम् ॥ ७४ ॥ तदुत्पत्तेस्तत्स्थितेश्चतत्रैवप्रलयात्तथा ॥ प्रपंचस्यविरोधेहित्रयमेतन्नसंभवेत् ॥ ७५ ॥ नहिशीतोष्णयोर्दृष्टाकार्यकारणताक्वचित् ॥ दृष्टांतोविषमस्तस्माद्भेदाभेदमयंजगत् ॥ ७६ ॥ ॥

दित्याशयेनाह । नोभयमिति ॥ ७४ ॥ ननुसच्चिदानंदरूपेणब्रह्मणातद्विरुद्धस्यप्रपंचस्यकथमभिन्नतेत्याशंक्ययतोवाइमानिभूतानिजायंते येनजातानिजीवंति यत्प्रयंत्यभिसंविशंतीति श्रुत्युक्तजन्मस्थितिलयानांत्रयाणांविरोधेसत्यसंभवादित्याशयेनाह । तदिति ॥ ७५ ॥ शीतोष्णयोर्घटत्वपटत्वयोश्चकार्यकारणताविरहाद्विषमोदृष्टांतइत्याह । नहीति ॥ ७६ ॥ ॥ ॥ ॥

भेदाभेदव्यवस्थापकंसामानाधिकरण्यप्रत्ययमाह । सर्वमिति । अत्यंताभेदेदेहेमकुंडलेतिअत्यंतभेदेगौरश्वइतिवत्सामानाधिकरण्यानुपल
ब्धेरुक्तप्रत्ययस्यतद्व्यवस्थापकतेतिभावः । सामानाधिकरण्योपपादिकांसर्वस्यतदुपादेयकार्यतापरांश्रुतिंपठति तज्जलानिति । ततोजा
यतइतितज्जं तस्मिन्लीयतइतितल्लंतेनानतिचेष्टतइतितदनमित्यर्थः । उपसंहरति । भिन्नाभिन्नमिति ॥ ७७ ॥ सापेक्षरूपतःकारणा

सर्वंचखल्विदंब्रह्मतज्जलानितिचश्रुतेः ॥ भिन्नाभिन्नंपरब्रह्मसिद्धंसापेक्षरूपतः ॥ ७७ ॥ कार्य
रूपेणनानात्वमभेदःकारणात्मना ॥ हेमात्मनायथाऽभेदःकुंडलाद्यात्मनाभिदा ॥ ७८ ॥ त
ज्ज्ञानंतत्त्वविज्ञानंतेनैवमुच्यतेजनः ॥ इत्थंश्रुतीनांतात्पर्यंयुक्त्याप्येवंप्रतीयते ॥ ७९ ॥ स्या
देवंयदिवेदांतनिर्णयेस्यात्स्वतंत्रता ॥ तवकिंतुश्रुतेर्भावोगूढोऽस्तिविदितोनते ॥ १८० ॥ अवि
द्यायांविकल्पास्तेकृतास्तत्रोत्तरंश्रृणु ॥ कार्यकारणरूपेणमताविद्याद्विधाहिनः ॥ ८१ ॥ अ
नादिभावरूपायाऽविद्याकारणरूपिणी ॥ उपादानंप्रपंचस्यसंमतासैवकार्यतः ॥ ८२ ॥ द्विती
याकार्यरूपायाऽहंममाध्यासरूपिणी ॥ सर्वलोकप्रसिद्धासासर्वानर्थकरीमता ॥ ८३ ॥ तयो
र्मध्येत्वयाचोद्यंकृतंकस्यावदस्फुटम् ॥ प्रथमायाःसचेत्प्रश्नस्ताविनाब्रह्मकारणम् ॥ ८४ ॥

पेक्षयाऽभेदःकार्यापेक्षयाभेदइति सापेक्षरूपतइत्येतद्विवृणोति । कार्येति ॥ ७८ ॥ एतज्ज्ञानमेवतत्त्वज्ञानंतदेवमोक्षानन्यसाधनमित्याह ।
तदिति । एवंविधंश्रुतितात्पर्यमस्यतदुक्तयुक्तिंविनातुनप्रतीयतइत्याह । इत्थमिति ॥ ७९ ॥ एवमुक्तःश्रीशंकराचार्यउवाच । स्यादेवमिति
॥ १८० ॥ ८१ ॥ ८२ ॥ ८३ ॥ ८४ ॥ ॥ ॥ ॥ ॥ ॥ ॥

कथमिति । किंविवर्तकारणमुतपरिणामिकारणमित्यर्थः । आद्यंनिराह । विवर्तत्वमिति । अतत्त्वतोऽन्यथाभावलक्षणविवर्तसाधकाविद्यांविनाकदाचिदपितन्नसंभवतीत्यर्थः ॥ ८५ ॥ द्वितीयंपरिशेषयति । ब्रह्मणइति । परिणामोऽपिब्रह्मणःकिमेकदेशेनोतकात्स्र्न्येनेति विकल्प्याद्यमनूद्यदूषयति । सचेति ॥ ८६ ॥ निरवयवश्रुतिविरोधान्नायंपक्षःसाधुरित्याह । निष्कलमिति । एतच्छ्रुतिविरोधान्ममैवांशोजीवलोकेजीवभूतःसनातनइत्यादिवचनमभेदाभिप्रायंद्रष्टव्यं पादोऽस्यविश्वाभूतानीत्यादिवचनंतुविश्वाल्पतामात्रप्रतिपादनपरंस्वा

संमतंतेतदावाच्यंकथंब्रह्मास्यकारणम् ॥ विवर्तत्वमृतेऽविद्यांसंभवेन्नैवकर्हिचित् ॥ ८५ ॥ ब्रह्मणःपरिणामोऽस्तिप्रपंचःपरिशेषतः ॥ सचब्रह्मैकदेशेनपरिणामोमतोयदि ॥ ८६ ॥ निष्कलंनिष्क्रियंब्रह्मेत्येवंश्रुत्याविरुध्यते ॥ एकदेशेनतस्यैवंपरिणामःश्रुतेर्बहिः ॥ ८७ ॥ कात्स्र्न्येनपरिणामोहिब्रह्मणोऽभिमतोयदि ॥ ब्रह्माभावोह्यनिर्मोक्षःशिष्टाग्राह्यत्वमेवच ॥ ८८ ॥ कूटस्थत्वस्यभंगःस्यात्तदातवमतेकिल ॥ अनेकदोषदुष्टोऽसावाग्रहस्तवभातिमे ॥ ८९ ॥ सगुणेसकलेऽशुद्धेपरिणामस्यसंभवः ॥ निर्गुणेनिष्कलेशुद्धेपरिणामःकथंभवेत् ॥ १९० ॥ ॥

भाविकंनिरवयवत्वमौपाधिकंतुसावयवत्वमितिवाच्यमुपाधेर्विदार्यनिरवयवेसावयवतासंपादनाशक्तत्वात्वज्रधारासमाविद्धेऽप्याकाशेसावयवताऽप्रतीतेः किंचोपाधिभिःस्वात्मानंविदार्यसंसारमनुभावयताब्रह्मणास्वात्मनिव्यामोहएवप्रकटितःस्यात् किंच द्रव्येणैवद्रव्यविदारणं स्यादृष्टं नचास्तिसृष्टेःप्राग्द्रव्यांतरं सदेवसोम्येदमग्रआसीदेकमेवाद्वितीयमित्यादिश्रुतेः ॥ ८७ ॥ द्वितीयमनूद्यदूषयति । कात्स्र्न्येनेति ॥ ८८ ॥ ८९ ॥ १९० ॥ ॥ ॥ ॥ ॥ ॥ ॥

कात्स्न्र्येनविश्वाकारेणपरिणतस्यब्रह्मणःपृथगवस्थानासंभवात्तदवस्थानप्रतिपादनपरश्रुतिविरोधाद्वेदबाह्यत्वात्त्वदीयंमतंसर्वथोपेक्षणीयमि त्याह । ब्रह्मणइति ॥ ९१ ॥ श्रुतीरेवोदाहरति । एकमेवेति । अपूर्वानपरंकार्यकारणभावविनिर्मुक्तम् ॥ ९२ ॥ सर्वस्मात्कार्यवर्गात्परस्मा दक्षरात्प्रकृतेःपरः ॥ ९३ ॥ एवमादिरूपोवेदःकेवलस्याकारणताप्रतिपादनपरस्तवमतेऽस्यर्थंविरुद्धइत्याह । कारणमिति । तथाचवेदविरुद्धं

ब्रह्मणोविश्वरूपेणावस्थानंस्यात्सदातव ॥ पक्षोयंश्रुतिबाह्यःस्याद्वेदस्योल्लंघनादपि ॥ ९१ ॥ एकमेवाद्वितीयंचनेहनानास्तिकिंचन ॥ अपूर्वानपरंब्रह्मतस्यकार्यंनकारणम् ॥ ९२ ॥ अप्रा णोह्यमनाःशुभ्रोह्यक्षरात्परतःपरः ॥ अबाह्यानंतरंब्रह्मेत्यादिवेदःसहस्रशः ॥ ९३ ॥ कारणंके वलंब्रह्मनास्तीत्येवंवदत्यसौ ॥ अहोतेवैभवंबुद्धेर्वेदवित्त्वाभिमानिनः ॥ ९४ ॥ किंचलोकानु सारेणकार्यकारणतात्वया ॥ स्वीकर्तव्यातदालोकेमृत्सुवर्णादिकारणम् ॥ ९५ ॥ यादृशंता दृशंकार्यंकुंभादिकटकादिकम् ॥ दृष्टंयथातथाब्रह्मयादृशंसच्चिदात्मकम् ॥ ९६ ॥ शुद्धंबुद्धं सदानंदंनिर्विकल्पंनिरंजनम् ॥ निर्गुणंनिष्कलंनित्यंप्रपंचोपितथाभवेत् ॥ ९७ ॥ जडोऽशु द्धोमृषादुःखःसगुणःसकलश्चलः ॥ सविकल्पःकथंजातःप्रपंचोब्रह्मकारणात् ॥ ९८ ॥ ॥

वदतोदुराग्रहेणवेदवित्त्वंप्रकटयतस्तवाहोधाष्ट्र्यातिशयइत्याह । अहोइति ॥ ९४ ॥ लौकिकीबुद्धिरपित्वयानसंपादितावैदिकीतुदूरापेते त्याशयेनाह । किंचेति । यद्येवंतदासुवर्णकार्यंकुंडलादियथालोकेतत्सदृशंदृष्टंतथाब्रह्मकार्यमपितत्सदृशमेवापेक्षितंनतुतथोपलभ्यतेऽतो भ्रांतोसीत्याह । तदेत्यादिना ॥ ९५ ॥ ९६ ॥ ९७ ॥ सकलःसावयवः ॥ ९८ ॥ ॥ ॥ ॥

यस्मादेवमतःकेवलंब्रह्मकदाचिदपिजगत्कारणंनसंभवतीत्याह । ततइति । तथाचश्रुतौश्रुतापिजगत्कारणताब्रह्मणोयथोपपन्नातथाकल्प्येत्याह । द्वैतस्येति ॥ ९९ ॥ २०० ॥ एवंचयादृशंविश्वंतथाविधंकिंचित्प्रकल्प्यतत्सचिवस्यब्रह्मणस्तत्कारणतोपपादनीयेत्याह । यादृशइति ॥ १ ॥ तामिति । ननुश्रुतौब्रह्ममात्रंजगत्कारणंश्रुतंत्वयाधिकंकल्प्यतेचेत्तर्हितववेदबाह्यताकुतोनास्तीत्याशंक्याह । श्रुतिसंमत



ततोनकेवलंब्रह्मकारणंसंभवेत्कदा ॥ द्वैतस्यास्यप्रपंचस्याध्यक्षादिविषयस्यच ॥ ९९ ॥ विनाब्रह्मचिदानंदंकारणंनश्रुतौश्रुतम् ॥ ब्रह्मैवकारणंतस्मात्साध्यंयुक्त्यातथागमैः ॥ २०० ॥ यादृशोयंप्रपंचोस्तिजडोदुःखमयस्तथा ॥ तादृशंकारणंमायाऽविद्याऽज्ञानादिशब्दिता ॥ १ ॥ तामादायपरंब्रह्मकारणंश्रुतिसंमतम् ॥ मायांतुप्रकृतिंविद्यान्मायिनंतुमहेश्वरम् ॥ २ ॥ परास्यशक्तिर्विविधाश्रूयतेस्वगुणैर्वृता ॥ अजामेकामजोह्येकस्त्रिगुणांनिर्गुणोपिसन् ॥ ३ ॥ जुषमाणोनुशेतेचानीशयाशोचतीतिच ॥ श्रुतावविद्यामायाचेत्यादिशब्दैःस्फुटंश्रुता ॥ ४ ॥ नमायाऽविद्ययोर्भेदोयतोऽभेदस्तयोःश्रुतः ॥ स्फुटंचपंचमेवेदेपुराणेवैष्णवेतथा ॥ ५ ॥ ॥

मिति । तथाविधाश्रुतीरेवोदाहरति । मायामिति ॥ २ ॥ परेति । अजामेकांलोहितशुक्लकृष्णांबह्वीःप्रजाःसृजमानांसरूपाः अजोह्येकोजुषमाणोऽनुशेतेजहात्येनांभुक्तभोगामजोन्यइतिश्रुतिमर्थतोनुक्रामति । अजामिति ॥ ३ ॥ अनीशयाशोचतिमुह्यमानइतिश्रुतिंपठति मायाचाविद्याचस्वयमेवभवतीतिश्रुतौ ॥ ४ ॥ अतोमायाविद्ययोर्भेदोनास्तीत्याह । नेति । पंचमेवेदेमहाभारते ॥ ५ ॥ ॥

विष्णुपुराणवचनंपठति । तरतीति । यस्मिन्हृदिनिवेशितेयोगीविततामविद्यांतरति ननुतत्तरणेपिमायातरणमृतेतदप्रयोजकमित्याशं क्याऽविद्यातोमायानविलक्षणेत्याशयेनाह । मायामिति । तस्मैअप्रमेयायविद्यात्मनेनमः ॥ ६ ॥ वेदवाक्यानितुतत्साधकानिपठिता न्येवेत्याशयेनाह । मायामिति ॥ ७ ॥ गीतावचनान्यपितत्साधकानिसंतीत्याह । प्रकृतिमिति ॥ ८ ॥ ९ ॥ १० ॥ मोक्षधर्मवाक्य

तरत्यविद्यांवितताांहृदियस्मिन्निवेशिते ॥ योगीमायाममेयायतस्मैविद्यात्मनेनमः ॥ ६ ॥
मायामाश्रित्यवेदोऽपिब्रह्मणःपरमात्मनः ॥ कारणत्वंजगौयस्माच्छुद्धेनैवास्तिसंभवः ॥ ७ ॥
प्रकृतिंस्वामवष्टभ्यविसृजामिपुनःपुनः ॥ भूतग्राममिमंकृत्स्नमवशंप्रकृतेर्वशात् ॥ ८ ॥ म
याध्यक्षेणप्रकृतिःसूयतेसचराचरम् ॥ हेतुनानेनकौंतेयजगद्विपरिवर्तते ॥ ९ ॥ प्रकृतिंस्वा
मधिष्ठायममममायादुरत्यया ॥ गीतासुतत्रतत्रेत्थंजगादपरमेश्वरः ॥ २१० ॥ मायाह्येषाम
यासृष्टायन्मांपश्यसिनारद ॥ नारायणीयआख्यानेश्वेतद्वीपपतिर्जगौ ॥ ११ ॥ सदसद्भ्या
मनिर्वाच्याभावरूपापरात्मनि ॥ कारणत्वंसमारोप्यप्रपंचाकारतांगता ॥ १२ ॥ यामाया
साचसर्वत्रहेतुत्वेनश्रुतौस्मृतौ ॥ प्रपंचंप्रतिनिर्णीतामोहविक्षेपकारिणी ॥ १३ ॥ ॥

मपिप्रमाणयति । मायेति ॥ ११ ॥ एवंप्रमाणमभिधायास्मदभिमताविद्यायाविकल्पासहत्वंनदूषणमपितुभूषणमेववक्तुंतत्स्वयमाविष्क रोति । सदसद्भ्यामिति । परमात्मनिकारणत्वंतज्ज्ञारोपितमित्याशयेनोक्तं परमात्मनीति ॥ १२ ॥ अवश्यंचैवमभ्युपेयंश्रुतौश्रुतत्वा त्तथैवनिर्णीतत्वाच्चेत्याह । येति । आवरणशक्त्यामोहस्यविक्षेपशक्त्याविक्षेपस्यचकारिणी ॥ १३ ॥ ॥ ॥

विमतंमायोपादानंभवितुमर्हतिअनिर्वाच्यत्वादैंद्रजालिकनिर्मितवृक्षादिवदित्यादियुक्त्युपोद्बलितोक्तश्रुत्याकारणत्वेनकल्पितामायागीकृ
तेत्याशयेनाह । सदिति ॥ १४ ॥ असंगोदासीनादिस्वरूपस्यपरब्रह्मणःश्रुतंकारणत्वंमायासाचिव्यमृतेऽनुपपद्यमानंतांकल्पयतीत्य
र्थापत्तिप्रमाणेनापिसासिध्यतीत्याशयेनाह । यइति ॥ १५ ॥ एवंकारणाविद्यास्वरूपंसप्रमाणमभिधायाथकार्याविद्यास्वरूपमाह । द्वि
तीयेति ॥ १६ ॥ एतेनसाऽविद्याभेदृष्ट्यभिन्नातद्भिन्नावेत्यादिविकल्पाःप्रत्युक्ताइत्याह । भिन्नेति । उभयत्रकारणाविद्यायांकार्याविद्या
यांचोभयोरापत्तिर्वाच्यत्वादित्यर्थः ॥ १७ ॥ यत्तु किंचस्याद्ब्रह्मणोऽविद्येत्याद्युक्तंतत्राह । अविद्येति । अयमर्थः । मामहंनजानामीति

सदसद्भ्यामनिर्वाच्यंकार्यंवैदृश्यतेयथा ॥ तादृशंकारणंमायाकल्प्यतेश्रुतियुक्तिभिः ॥ १४ ॥
यस्त्वसंगउदासीनःशुद्धोबुद्धोऽमलोऽमरः ॥ कथंसकेवलोहेतुःस्यात्प्रपंचस्ययुक्तिभिः ॥ १५ ॥
द्वितीयाकार्यरूपायाऽहंममाध्यासरूपिणी ॥ प्रसिद्धासर्वलोकेसानर्थहेतुर्नृणांसदा ॥ १६ ॥
भिन्नाभिन्नादिरूपायेस्वबुद्ध्योत्प्रेक्षितास्त्वया ॥ उभयत्रविकल्पास्तेऽनवकाशाभवंत्यतः ॥ १७ ॥
अविद्यासैवचैतन्येशुद्धेब्रह्मणिकेवले ॥ ईश्वरत्वंचजीवत्वंकल्पयत्यतिशक्तितः ॥ १८ ॥ ॥

प्रतीतेरेकाश्रयविषयताऽविद्याया अवगंतव्या नचजीवस्तद्विषयस्तस्यातिस्पष्टतयाप्रतीयमानत्वान्नह्यप्रकाशमानंकिंचिद्रूपांतरमस्ति जीव
स्ययेनाकारेणविषयोभवेदस्तिचचैतन्यमात्रस्याप्रकाशमानंब्रह्माभिधानंरूपांतरं अहमितिवद्ब्रह्माहमितिप्रतीत्यभावात् नचस्वयंप्रकाश
स्यब्रह्मणोविद्याश्रयत्वंविरुद्धमितिशंक्यं तद्विषयत्ववत्तदाश्रयस्याप्यविरुद्धत्वाच्चित्प्रकाशस्याविद्यासाधकस्यतदनिवर्तकत्त्वान्नचाश्रयवि
षयभेदस्यावश्यकत्वादेकाश्रयविषयत्वंविरुद्धमितिवाच्यमपवरकांधकारस्यतथात्वदर्शनात् ननुशुक्त्यज्ञानेतद्भेददर्शनादज्ञानेऽयंनियमइ
तिचेन्न तत्राप्यवच्छिन्नचैतन्यविषयाज्ञानस्यतदाश्रयत्वादिति अतिशक्तितःआवरणविक्षेपात्मशक्तिद्वयेनजीवत्वमीश्वरत्वंचकल्पयति

नचावरणशक्तौप्रमाणाभावःब्रह्मस्वरूपानवभासानुपपत्तेरेवमानत्वात्ननुकोयमनवभासोनाम प्रकाशविनाशइतिचेत्सकिंस्वरूपप्रकाशस्यो
तागंतुकप्रकाशस्य नाद्यस्तस्यनित्यत्वान्नद्वितीयस्तन्नाशेऽपिस्वरूपप्रकाशसत्वेनानवभासानुपपत्तेरितिचेन्न नास्तिनप्रकाशतइतिस्वरूप
विपरीतव्यवहारविषयत्वयोग्यत्वस्यैवानवभासशब्दार्थत्वात्तथाविक्षेपशक्तिरप्यविद्यायाःस्वीकर्तव्यारजतादिविभ्रमस्यशुक्तिकाद्यविद्यास
द्भावानुविधायित्वात् ॥ १८ ॥ अनृताअनिर्वाच्याअविद्याअनृतमनिर्वचनीयंभेदंप्रपंचंच ॥ १९ ॥ तवमतसिद्धिरप्यविद्यांविनसदुर्घटे

जीवेब्रह्मणिभेदंसाकल्पयंतीनिराकृतौ ॥ प्रपंचंविविधाकारंदर्शयत्यनृतानृतम् ॥ १९ ॥ पर
ब्रह्मानभिज्ञेनभेदाभेदप्रजल्पिना ॥ स्वीकर्तव्यात्वयाविद्यास्वानुभूतिप्रसिद्धये ॥ २२० ॥ किं
चप्रपंचसत्यत्वंविरुद्धंस्वीकृतंत्वया ॥ मानंतत्रनपश्यामःसाधकंत्वद्भ्रमादृते ॥ २१ ॥ विचि
त्रशक्तिशालिन्याविभ्रमाधारयातया ॥ जगज्जीवेशभेदानांजनन्याऽविद्ययाविना ॥ २२ ॥
भेदाभेदप्रलापादिप्रपंचंकःसृजेन्मुधा ॥ श्रुतीनांमुख्यमेवार्थंत्यक्त्वान्यंकःप्रकल्पयेत् ॥ २३ ॥
अतोन्यदार्तमित्याद्यामृषात्वेऽस्यास्तिवेदगीः ॥ नेहनानास्तिकिंचेतिनानात्वप्रतिषेधिनी ॥२४॥

त्याह । परेति ॥ २२० ॥ मानंविनाजगत्सत्यत्वंकथ्यमानमपिभ्रमविजृंभितमित्याह । किंचेति ॥ २१ ॥ स्वानुभूतिप्रसिद्धयइत्येत
द्विवृणोति । विचित्रेति ॥ २२ ॥ भेदेति । तथाचश्रुतिसिद्धमर्थंविहायान्यार्थाश्रयणंविदुषोऽयुक्तमित्याशयेनाह । श्रुतीनामिति ॥२३॥
प्रपंचसत्यत्वेनास्तिप्रमाणमित्युक्तंतन्मिथ्यात्वेत्वस्तिप्रमाणमित्याह । अतइति । अतोब्रह्मणःसकाशादन्यदार्तंबाधत्वादार्तियुक्तंइहब्रह्म
ण्युपलभ्यमानंनानानास्तिकिंचनेतिनानात्वप्रतिषेधिनीवेदगीरपीयंविश्वस्यमिथ्यात्वेमानमस्तीत्यर्थः ॥ २४ ॥ ॥ ॥

समस्तमिति । सर्वंखल्विदंब्रह्मवाचारंभणंविकारोनामधेयमित्यादिश्रुत्यापिबहुप्रकारेणप्रपंचोबाध्यएवेत्येतत्स्पष्टमुदाहृतंविरुद्धयोरैक्यायोगाद्बाधसामानाधिकरण्याश्रयणान्मिथ्यात्वंविनाबाधासंभवाडुक्तश्रुतिस्तन्मिथ्यात्वेप्रमाणमित्यर्थः ॥ २५ ॥ एतदेवदृष्टांतेनस्पष्टयति । सर्पेति । गुणेरज्जौ ॥ २६ ॥ २७ ॥ प्रत्यक्षादिभिरुपलभ्यमानमिदंसर्वमध्यस्ततयाधिष्ठानसत्तातिरिक्तसत्ताशून्यत्वादधिष्ठानब्रह्मानति

समस्तंखल्विदंब्रह्मेत्यादिश्रुत्याप्यनेकधा ॥ प्रपंचोबाध्यएवेतिस्पष्टमेतदुदाहृतम् ॥ २५ ॥
सर्पदंडादिवस्तूनांकल्पितानांगुणेजनैः ॥ पृष्टेतत्त्वेब्रवीत्याप्तःसर्वंरज्जुरिदंत्विति ॥ २६ ॥ क
ल्पितस्यप्रपंचस्यकिंतत्त्वमितिसंशये ॥ सर्वंब्रह्मेतिवेदांतावदंतीत्थंसदुत्तरम् ॥ २७ ॥ अध्य
स्तानामधिष्ठानात्पृथक्सत्तानविद्यते ॥ इत्येवंबोधनायाहसर्वंब्रह्मेतिवेदगीः ॥ २८ ॥ निर्गुणं
निष्कलंब्रह्माखंडमेकरसंसुखम् ॥ कथंस्याज्जगदाकारंमलिनंजडमन्यथा ॥ २९ ॥ साकारं
चनिराकारंसगुणंनिर्गुणंतथा ॥ ऋतेऽविद्यांनसंगच्छेतैकंवस्तुसदेकदा ॥ २३० ॥ अविद्याश
बलंब्रह्मजगज्जीवेशतांगतम् ॥ भातिनोकेवलंशुद्धंवस्तुनानात्वमेतिवा ॥ ३१ ॥ किंचप्रपंचस
त्यत्वेमुक्तिःस्यात्तेऽतिदुर्लभा ॥ प्रपंचाकारतांब्रह्मनत्यजेदात्मनःकदा ॥ ३२ ॥ ॥

रिक्तमितिसर्वंब्रह्मेतिवाक्यस्यार्थमाह । अध्यस्तानामिति ॥ २८ ॥ किंचनिर्गुणादिरूपस्यैवसतःपरमात्मनःसगुणादिरूपत्वमविद्यांविनानुपपद्यमानमित्याशयेनाह । निर्गुणमिति ॥ २९ ॥ २३० ॥ फलितमाह । अविद्याशबलमिति ॥ ३१ ॥ नाभावोविद्यतेसतइत्युक्तत्वात्सतोबाधायोगात्कदापिमुक्तिर्नस्यादित्याह । किंचेति । आत्मनःस्वस्यकदापिजगदाकारतांनत्यजेत् ॥ ३२ ॥ ॥

नन्वेवंसत्येकस्मिन्ब्रह्मणिकथंजीवत्वमीश्वरत्वंबंधोमोक्षश्चव्यवस्थाप्यतेइतिभास्करःशंकते। नन्विति ॥ ३३ ॥ त्वयापिकथंव्यवस्थाप्य तइत्याशंक्यस्वमतेनव्यवस्थामाह। अस्मन्मतइति ॥ ३४ ॥ ३५ ॥ व्यवस्थाभावंस्पष्टयति। केवलेति ॥ ३६ ॥ ३७ ॥ एवमुक्तआ चार्यआह। अहोइति ॥ ३८ ॥ जातिव्यक्तिगुणगुणिकार्यकारणविशिष्टस्वरूपांशांशिभावनिबंधनाहिभिन्नाभिन्नतातवाभिमता नचसा

नन्वेवंत्वन्मतेपिस्याद्व्यवस्थाकथमेवहि ॥ जीवेशयोस्तथाबंधमोक्षयोःकेवलेपरे ॥ ३३ ॥ अ स्मन्मतेकथंचित्साव्यवस्थाबंधमोक्षयोः ॥ स्याद्यतोब्रह्मणोभिन्नाभिन्नोजीवोमतोनयात् ॥३४॥ ब्रह्मणोनित्यमुक्तत्वंजीवानामेवबद्धता ॥ जीवानांज्ञानकर्मभ्यांमुक्तिरेवंव्यवस्थितिः ॥ ३५ ॥ केवलाभेदवादेतुस्वस्मिन्ब्रह्मकथंजगत् ॥ उत्पादयेत्स्वयंसर्वानर्थकारणमज्ञवत् ॥ ३६ ॥ वि रुद्धास्तिविशुद्धस्याविशुद्धात्मतयाप्रथा ॥ नित्यमुक्तस्यबद्धत्वंकथंतेस्वीकृतंवद ॥ ३७ ॥ अ होवेदांतदक्षत्वंदृष्टंभोसर्वथातव ॥ नैतत्सारंमतंतेऽस्यसर्वसंकरवादिनः ॥ ३८ ॥ नजीवब्रह्म णोस्तावज्जातिव्यक्त्यादिभावता ॥ तदभावेक्वचिद्भेदाभेदौस्तोमानतोनते ॥ ३९ ॥ ममैवांशो जीवलोकेजीवभूतःसनातनः ॥ इतिस्मृतिःस्वयंभेदाभेदौप्राहेतिचेन्नहि ॥ २४० ॥ ॥

जीवेश्वरयोःसंभवति तयोरद्रव्यत्वाज्जीवस्यानादित्वाद्व्यादिवत्पारतंत्र्याप्रतिपत्तेरंशांशित्वेप्रमाणाभावादित्याह। नेति ॥ ३९ ॥ अं शांशित्वेप्रमाणमाशंक्यपरिहरति। ममेति ॥ २४० ॥ ॥ ॥ ॥ ॥ ॥

श्रुतिस्मृत्योः श्रुतेःप्राबल्यात्तद्विरोधेस्मृतेरपिनप्रामाण्यमित्याशयेनब्रह्मणोनिरवयवत्वनिरूपिकांश्रुतिंपठति । निष्कलमिति । सास्मृतिर्गीतास्मृतिरपिविरुद्ध्यते ॥ ४१ ॥ तामुदाहरति क्षेत्रज्ञमिति ॥ ४२ ॥ ४३ ॥ ननुपादोस्यविश्वाभूतानीतिश्रुत्यनुगृहीतोक्तस्मृत्याततसिद्धिमाशंक्य पादरवेणपादोभागइत्यल्पतामात्रविवक्षयाब्रह्मानंत्यपरवाक्यस्यतदसाधकत्वादन्यथापटादिवदवयवारभ्यत्वप्रसंगादित्याशयेनाह । अन्यथेति ॥ ४४ ॥ ननुब्रह्मण्यंशित्वंस्वाभाविकंचेदयंदोषस्तस्यौपाधिकत्वेतुनिरंशस्यस्वाभाविकत्वादंशांशित्वस्यौपाधिकत्वान्नश्रुतेःस्मृतिविरोधइत्याशंक्यौपाधिकोप्यंशांशिभावस्तात्विकःकिंवाकल्पितइतिविकल्प्यखड्गधारासमाविद्धेप्याकाशेभेदनानुपलब्धेरुपाधिनाविदा

निष्कलंनिष्क्रियंचेतिनिरंशत्वप्रबोधिनी ॥ श्रुतिरत्रविरुद्ध्येतस्मृतिःसाचविरुध्यते ॥ ४१ ॥
क्षेत्रज्ञंचापिमांविद्धिसर्वक्षेत्रेषुभारत ॥ समंसर्वेषुभूतेषुतिष्ठंतंपरमेश्वरम् ॥ ४२ ॥ विनश्य
त्स्वविनश्यंतंयःपश्यतिसपश्यति ॥ स्मृतिःसैववदंतीत्थंकथमंशांशितांवदेत् ॥ ४३ ॥ अन्य
थातस्यसांशस्यब्रह्मणोऽपिघटादिवत् ॥ अंशैरारभ्यताभूयाद्दूषणंकिमतःपरम् ॥ ४४ ॥ न
वानिष्कलआकाशःखड्गधारादिभिर्जनैः ॥ वस्तुतःशक्यतेभेत्तुंपरब्रह्मतथैवहि ॥ ४५ ॥ नहि
बुद्ध्याद्युपाधीनांब्रह्मभेत्तुंसमर्थता ॥ नतत्सृष्टेःपुराजीवभेदोब्रह्मणिनिष्कले ॥ ४६ ॥ ॥

र्यंजीवःपृथक्क्रियतेइतिवक्तुमशक्यत्वान्नाद्यइत्याह । नवेति ॥ ४५ ॥ नहीति । अपिचकिंब्रह्मोपाधिसृष्ट्वास्वयंसंसारमनुभवति किंवाजीवस्यसंसारमापादयति नाद्यः स्वात्मानमुपाधिभिर्विदार्यसंसारमाविर्भावयतोब्रह्मणःस्वस्मिन्व्यामोहएवप्रकटितःस्यात् नद्वितीयः उपाधिसृष्टेःप्रागौपाधिकजीवरूपाभावात्तदर्थमुपाधिसृष्टिरितिवक्तुमशक्यत्वादित्याशयेनाह । नतत्सृष्टेरिति । ब्रह्मणःसत्त्वात्तद्भिन्नोजीवोऽप्यस्तीतिनभ्रमितव्यं तस्यब्रह्ममात्रत्वेवस्तुतस्ततोऽन्यत्वासिद्धेःकेवलस्यस्वस्मादन्यत्वादर्शनादितिभावः ॥ ४६ ॥ ॥

किंच किमंतःकरणंभेदकंकिंवाकर्मोतमिथ्याज्ञानमाहोस्वित्संस्कारः नाद्यः सुषुप्तौतदभावादित्यभिप्रेत्यकर्मादिनिराकरोति । कर्मेति । द्रव्येणपरश्वादिनाद्रव्यस्यवृक्षादेर्विदारणंदृष्टं कर्मादीनांत्वद्रव्यत्वान्नविदारकत्वंवस्तुतस्तुविदारणात्प्राग्जीवाभावान्नतदाश्रितकर्मादिसंभवइत्यर्थः ॥ ४७ ॥ नन्वौपाधिकत्वशंकयोपाधितोजायमानत्वंनोच्यतेऽपित्पाधिप्रयुक्तत्वंयथाद्रव्यत्वस्यगुणवत्प्रयुक्तत्वमित्याशंक्यद्रव्यत्ववद्भेदस्याप्यनादित्वप्रसंगात्तज्जन्यत्वमेवतत्त्वमित्याशयेनाह । बुद्ध्याद्युपाधिरिति । तथाचानादिभूतस्यभेदस्यजातिव्यक्तिभावादिनिबंधनत्वाद्ब्रह्मणिजीवेचस्थितिर्दुरुपपादेतिभावः ॥ ४८ ॥ ननुजातिव्यक्त्यादिभावाभावेऽपिनीलपीतयोर्यथाव्यावृत्तत्वेनस्वाभाविकोभे

कर्माविद्याचसंस्काराबुद्ध्याद्युत्पत्तितःपुरा ॥ विद्यमानाअपिह्येतेविभजंतेनजीवकम् ॥ ४७ ॥
बुद्ध्याद्युपाधिरेवेमंजीवंविभजतेयतः ॥ बुद्ध्याद्युपाधिकोजीवोविनिर्णीतोमनीषिभिः ॥ ४८ ॥
ननुस्वाभाविकोभेदोनीलपीतादिवद्भवेत् ॥ अभेदस्तुभवेत्तत्रद्रव्यत्वादिनिबंधनः ॥ ४९ ॥
तदायमात्माब्रह्मेतिसामानाधिकरण्यकम् ॥ नस्याद्यथानयुज्येतनीलंपीतमितिप्रथा ॥ २५० ॥
अथभेदोननिष्पन्नोनाप्यनादिरसौभवेत् ॥ ब्रह्मण्ययंविभातीहकिंतूपाधिनिबंधनः ॥ ५१ ॥

दोद्रव्यत्वादिजातिनिबंधनश्चाभेदस्तथात्राप्यस्त्वित्याशंक्यपरिहरति । नन्विति । अत्यंतभेदाशंकानिरासायोक्तं । अभेदइति ॥ ४९ ॥ यथानीलंपीतमितिसामानाधिकरण्यंनोपलभ्यते तथायमात्माब्रह्मेतिसामानाधिरण्यंनस्याच्छ्रुतंचतत्तथात्वंवारयतीत्याह । तदेति । तत्सृष्ट्वातदेवानुप्राविशदित्यादौब्रह्मणएवबुद्ध्याद्यनुप्रवेशेनसंसारित्वेनप्रतिपत्तेर्नभेदाभेदयोरुपपत्तिरित्यपिद्रष्टव्यम् ॥ ५० ॥ जपाकुसुमाद्युपाधिसंपर्कजनितस्फटिकलौहित्यप्रतिभासवद्भेदप्रतिभासोऽपिभ्रमइतिकल्पितत्वपक्षमुत्थापयति । अथेति ॥ ५१ ॥ ॥

इष्टापत्त्यापरिहरति । तर्हीति । भेदस्यप्रामाणिकत्वेनविभ्रमत्वाभावमाशंक्यपरिहरति । प्रामाणिकस्येति ॥ ५२ ॥ मैवमिति । तत्रप्रत्यक्षादिकंप्रमाणमुतागमो नाद्यइत्याह । अध्यक्षमुख्यानामिति । द्वितीयंप्रत्याह । आगमस्त्विति ॥ ५३ ॥ भेदप्रतिषेधकमागमवाक्यमुदाहरति । नान्यइति । नन्वभेदपरंश्रुत्यादिवाक्यंनतुभेदप्रतिषेधकमित्याशंक्यैषतआत्मेत्यादिवाक्यैरभेदप्रतिपादनात्पृथग्भेदस्याऽप्रतिपाद्यमानत्वान्ननिषेधवाक्यसंदर्भस्यभेदविषयत्वमित्याशयेनाह । तथेति । तथाऽभेदमप्यागमोवदति ॥ ५४ ॥ ननुद्वासुपर्णेत्यादिना

तर्ह्यतस्मिंस्तदारोपोविभ्रमोऽसौभवेदिह ॥ प्रामाणिकस्यभेदस्यकथंविभ्रमतेतिचेत् ॥ ५२ ॥
मैवमध्यक्षमुख्यानांभेदेब्रह्मात्मनोर्नहि ॥ प्रसरोऽस्त्यागमस्त्वेनंभेदंविप्रतिषेधति ॥ ५३ ॥
नान्योऽतोस्तीतिवाक्येनतथाऽभेदंवदत्यपि ॥ अनेकैर्वाक्यसंदर्भैस्तत्त्वमस्यादिरूपकैः ॥ ५४ ॥
नवाबद्धत्वमुक्तत्वव्यवस्थानुपपत्तितः ॥ भेदस्तत्राभिदायाःस्वीकृतेर्नस्याद्व्यवस्थितिः ॥ ५५ ॥
भेदांशमुपजीव्यैवव्यवस्थास्तीतिचेत्तदा ॥ अस्मन्मतेऽप्यविद्यादिसंसर्गतदभावतः ॥ ५६ ॥
बंधमोक्षव्यवस्थास्यादद्वैतेब्रह्मवस्तुनि ॥ भेदाभेदौविरुद्धौस्तोनैकस्मिन्संभवस्तयोः ॥ ५७ ॥

भेदस्यापिप्रतिपत्तेःनात्यंताभेदइत्याशंक्यबद्धत्वमुक्तत्वव्यवस्थानुपपत्तेर्भेदोनयुक्तइत्याह । नवेति । कथंव्यवस्थानुपपत्तिरित्याशंक्याभेदस्यापिस्वीकारादत्यंतभेदाभावादित्याह । अभिदायाइति ॥ ५५ ॥ ननुभेदांशमाश्रित्यबद्धत्वमभेदांशमाश्रित्यमुक्तत्वमितिचेत्तदास्मन्मतेऽविद्यासंसर्गाद्बद्धतातदऽसंसर्गान्मुक्ततेत्याह । भेदांशमिति ॥ ५६ ॥ बंधमोक्षेति । नन्वविद्याद्यसंसृष्टस्यब्रह्मणोनतत्संसर्गःसंभवेद्विरुद्धत्वादग्नौशैत्यवदित्याशंक्यैकस्मिन्भेदाभेदयोर्विरुद्धयोर्भावाभावयोःसमावेशमंगीकुर्वतोभेदाभेदवादिनस्तवमतेविरोधस्यभावान्मैवमित्याशयेनाह । भेदेति ॥ ५७ ॥ ॥ ॥ ॥ ॥ ॥ ॥

परब्रह्मणीति। किमभेदइत्यत्रनञाभेदाभावोऽभिधीयतेकिंवातदन्यः नाद्यः भावाभावयोरेकत्रविरुद्धत्वात् नद्वितीयःनञ्पदस्याभावेमुख्य त्वादर्थांतराभिधायकत्वायोगात्तदंगीकारेपि अहंमनुष्यइत्यैक्यस्यभेदज्ञानतयाद्वौचंद्रावित्यत्रभेदस्यैक्यज्ञानवाध्यतायादर्शनादस्त्येवविरोधस्तथाचविरुद्धयोरपिभेदाभेदयोरेकत्रसमावेशंस्वीकुर्वतोभावाभावयोरपितथात्वांगीकारेवाधकाभावादविद्यादिसंसर्गासंसर्गाभ्युपगमे कोवाविरोधइतिभावः ॥ ५८ ॥ अंशांशित्वपक्षेदोषांतरमाह। त्वदिति। जीवेस्वतःसंसारिणिसतिअंशिनोब्रह्मणःसंसाराभावेदृष्टांतोनास्तीत्यर्थः ॥ ५९ ॥ किंच प्रत्येकंदेहपटावयवेषुमलसंस्पृष्टेषुमलिनःपटोहंमलिनइतिभानादवयविनिमलसंसर्गनिश्चयात्सत्यपिभेदेजीवसम

परब्रह्मण्यविद्यादिसंसर्गतदभावयोः ॥ सिद्धयोःकस्तवद्वेषोबंधमोक्षादिगोचरे ॥ ५८ ॥ त्वन्मतेत्वंशभूतेऽस्मिन्जीवेसंसारिणिस्वतः ॥ तदभावेंऽशिनोनास्तिदृष्टांतोब्रह्मणःकिल ॥ ५९ ॥
वस्त्रेदेहैकदेशेचोपस्पृष्टेसूतिकादिभिः ॥ नचाप्रक्षालनीयौतौकृत्स्नौस्तोवस्त्रदेहकौ ॥ २६० ॥
अतोऽसंसारितानास्तिब्रह्मणस्त्वन्मतेकदा ॥ प्रत्युतब्रह्मजीवैस्तैःप्रपंचेनाखिलेनच ॥ ६१ ॥

वायिभिर्मलैरवयविब्रह्ममलभूयिष्ठमेवनिश्चीयते लिप्यतेनसपापेनपद्मपत्रमिवांभसेत्यादिफलवचनानितुवर्तमानापदेशित्वात्प्रत्यक्षविरुद्धतयार्थवादगतानीत्याशयेनाह। वस्त्रेति। वस्त्रदेहैकदेशेतदवयवेकृत्स्नौवस्त्रदेहौनप्रक्षालनीयाविति नचापितुमलदूषितत्वात्प्रक्षालनीयावेवेत्यर्थः ॥ ६० ॥ अतइति। यस्मादेवमतस्त्वन्मतेब्रह्मणोऽसंसारित्वंकदापिनास्तीत्याह। कदापीतिशेषः। किंच ब्रह्मणिमलसंसर्गमप्यसहमानोत्यर्थंभक्तिविलसितस्वांतोदोषाकरजीववजगदभेदंवदंस्तद्दोषजातंब्रह्मण्यापादयन्देवानांप्रियःकुतोनावहेयवचनइत्याशयेनाह। प्रत्युतेति ॥ ६१ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

अभिन्नत्वेनेति। तदाब्रह्मदोषजातमात्मनिस्वस्मिन्पश्येदित्यन्वयः नलिप्यतेलोकदुःखेनबाह्यइत्यादिश्रुतिविरोधाद्भेदांगीकारे सर्वंखल्विदं ब्रह्मेत्यादिसर्वात्मकत्वश्रुतिविरोधोविरुद्धत्वादुभयोःप्रामाण्यस्यायुक्तत्वाद्भेदाभेदवादेऽन्यतरप्रामाण्याभ्युपगमेप्रयोजकाभावादयंपक्षोऽत्यं तपापिष्ठत्वाद्धेयएव नयादिभेदेनव्यवस्थितविषयत्वाच्छ्रुतिद्वयमप्यविरुद्धमितिचेदुपाधिकृतोभेदः किंपारमार्थिकउतमिथ्या नांत्यः परमार्थ तोभेदाभावेपरमार्थसत्यस्यसंसारबंधस्याभेदेसतिव्यवस्थानुपपत्तेःनप्रथमः औपाधिकस्यस्फटिकलौहित्यवत्परमार्थत्वासंभवात्तस्मान्मिथ्या भेदेनमिथ्यासंसारव्यवस्थायुज्यते बिंबप्रतिबिंबयोःसंसारादर्शनात् ननुब्रह्मणिजीवाभेदेऽप्यस्मन्मतेतत्रसंसारापादनमयुक्तंतस्यसंसार्यह मित्यभिमानाभावादितिचेन्नाभेदेतस्यदुर्वारत्वात् किंब्रह्मसर्वाञ्जीवानात्मत्वेनावलोकयतिनवानद्वितीयःसर्वज्ञताभंगप्रसंगात्आद्येस्वात्म

**अभिन्नत्वेनसंपश्येद्दोषजातंतदात्मनि ॥ तथाचतादृशब्रह्मप्राप्तेरपुरुषार्थता ॥ ६२ ॥ ॥**

न्येवसंसारमपिपश्येत् नन्वभेदवद्भेदमपिपश्यतीतिचेत्तर्हिब्रह्मस्वात्मनिसंसारंपश्यतिनपश्यतिचेत्युक्तंस्यात् किंच सत्यपिभेददर्शनेमिथ्याता दात्म्याभिमानाद्देहधर्मानात्मनिपश्यतिपरमार्थतएवाभेदाभिमानेसतिब्रह्मपश्यतीतिकिमुवक्तव्यं ननुदृष्टांतेभेदज्ञानस्यपरोक्षत्वात्तस्मिन्स त्यप्यभेदाभिमानोचितकार्यमविरुद्धंब्रह्मणितुभेदज्ञानस्यापरोक्षत्वान्नतदुचितकार्योत्पत्तिर्युक्तेतिचेन्नशुक्तिकांसाक्षात्कुर्वतस्तद्विरुद्धरजतसा क्षात्कारवदभेदंकरतलामलकवदपरोक्षतयापश्यतस्तद्विरुद्धभेदापरोक्षानुपपत्तेः ननुरजतस्याध्यस्तत्वादधिष्ठानतत्त्वसाक्षात्कारोत्तरमन वभासोयुक्तइहउभयोरपिसत्यत्वंनसमुचितंइतिचेन्न सर्वाधारस्यसर्वज्ञस्यसर्वसत्यतयैवात्मन्यपरोक्षतयापश्यतोब्रह्मणःसर्वसंबंधस्यपुनस्ता दवस्थ्यादितिएवंभेदाभेदेसंसाराव्यवस्थामुपपाद्यमोक्षाव्यवस्थितिमुपपादयति। तथाचेति ॥ ६२ ॥ ॥ ॥

शास्त्रेति । किमेकोपाधिप्रविलयान्मोक्षः किंवासर्वोपाधिप्रविलयादितिविकल्प्याद्यंप्रत्याह । फलमिति । ज्ञानंप्रमा ध्यानंसजातीयप्रत्यय प्रवाहः आदिपदेनध्यातृध्यानादित्रिपुटिसंहारमात्रावस्थानरूपसमाधिसंग्रहस्तैरेकस्यजीवस्यैकस्मिन्नुपाधौप्रलीयमानेपिनकिंचित्प्रयोजन मस्ति परिशिष्टाखिलोपाधिसंबंधरूपत्वेनप्राप्यब्रह्मणःसदोषत्वानपायात् ॥ ६३ ॥ द्वितीयंनिराह । प्रविलापयितुमिति ॥ ६४ ॥ ननु त्वन्मतेप्युक्तानुपपत्तिस्तुल्येत्याशंक्यास्मन्मतेत्वेकोपाधिपरित्यागेनबिंबभूतब्रह्मात्मनापरोक्षावभासितोऽपिप्रतिबिंबश्यामत्वादिभिरिवजी वांतरसंसारैःसंबंधाभावान्नदोषइत्याह । अस्मन्मतइति ॥ ६५ ॥ मिथ्याभूतोपाधेस्तत्त्वज्ञाननिवर्त्यतयातत्त्वज्ञानेसतितन्निवृत्तिरूपोमोक्षोयु

शास्त्रारंभादिकंसर्वंव्यर्थंस्यात्त्वन्मतेफलम् ॥ ज्ञानध्यानादिभिर्नैवस्वोपाधौप्रविलापिते ॥६३॥
प्रविलापयितुंशक्यानजीवोपाधयोऽखिलाः ॥ येनब्रह्मणिवार्यंतदोषजातंविकल्पितम् ॥ ६४ ॥
अस्मन्मतेतुनोकश्चिद्दोषोब्रह्मणिकेवले ॥ प्रतिबिंबगतोदोषोनबिंबंसंस्पृशेद्यतः ॥ ६५ ॥ स
र्वोपाधिविनिर्मोक्षस्तत्त्वज्ञानेनजायते ॥ स्वप्नकल्पितवस्तूनांप्रबोधेक्षयदर्शनात् ॥ ६६ ॥ शु
कादितत्त्वबोधेनसर्वोपाधिक्षयेसति ॥ प्रसज्येताधुनासर्वसंसारादर्शनंयदि ॥ ६७ ॥ त्वत्प
क्षेऽपिसमानोऽयंदोषस्तत्रकथंशृणु ॥ एकैकस्यापिजीवस्यमुक्तावेकैककल्पके ॥ ६८ ॥ ॥

ज्यतइत्याह । सर्वेति । ननुनानाजीववादेव्यवस्थासंभवेऽपिकथमेकजीववादेसेत्याशंक्याह । स्वप्नेति । सत्त्वोपाधीनामविद्यात्मकत्वात्त स्याश्चैक्याद्विद्ययानिवृत्तौसर्वविलयःस्वप्नकल्पितसर्वविलयइवयुक्तइत्यर्थः ॥ ६६ ॥ नन्वेकजीववादेकिमितःपूर्वैकेचिन्मुक्तानवाद्वितीये वामदेवोमुक्तःशुकोमुक्तइत्यादिशास्त्रविरोधःस्यादित्याशयेनद्वितीयेदूषणमाशंकते । शुकादीति ॥ ६७ ॥ त्वत्पक्षेऽप्ययंदोषःसमानइत्यु त्तरमाह । त्वदिति । कथंतत्रमत्पक्षेदोषइतिचेच्छृण्विति ॥ ६८ ॥ ॥ ॥ ॥ ॥

॥ ६९ ॥ नन्विदानींसंसारस्योपलभ्यमानत्वात्पुरानसर्वमुक्तिरितिसमाधानमप्युभयत्रतुल्यमित्याह । अथेति । ननूभयत्रानुपपत्तिमुक्त्वा समाधानसाम्येकथंस्वपक्षसम्यक्त्वाग्रहोभवतामितिचेत् नास्माकमविवेकेनभवद्वदाग्रहोऽपित्वस्मन्मतउपपत्तिबाहुल्यादित्याशयेनाह । उपपत्तिस्त्विति कथंचिद्वक्तुंशक्यतेइत्यन्वयः ॥ २७० ॥ ७१ ॥ ७२ ॥ मुच्यमानाइति । तथाचानवच्छिन्नचैतन्यंब्रह्माविद्यातत्कार्यानुरागाद्यद्ब्रमुपाधिभेदाज्जीवरूपंभिन्नत्वेनव्यवह्रियते यथोदकभाजनभेदेनसूर्यप्रतिबिंबस्ततश्चाविद्यानिवृत्तिंविनावामदेवादेर्मुक्त्यनुपपत्तेर्नसा

जीवानामप्यतीतानामनंतानांतथैवच ॥ तत्तत्कल्पेषुमुक्तौस्यात्संसारादर्शनंतव ॥ ६९ ॥ अथानुभवमालंब्यसमाधानंतदोभयोः ॥ समानमुपपत्तिस्तुब्रह्मात्मैकत्ववादिभिः ॥ २७० ॥ कथंचिच्छक्यतेवक्तुंश्रौतपक्षानुसारिभिः ॥ बंधमोक्षव्यवस्थांभोयस्त्वंपृच्छसिमांप्रति ॥ ७१ ॥ सत्वमेकश्चिदानंदाखंडात्मैकरसःस्वयम् ॥ सर्वाधिष्ठानभूतोऽसित्वदन्येयेमुमुक्षवः ॥ ७२ ॥ मुच्यमानास्तथामुक्ताबद्धाजीवास्तथाखिलाः॥ स्वप्नवत्कल्पिताःसर्वेत्वदविद्यावशात्त्वयि॥७३॥ वामदेवशुकादेस्तुविमुक्तिश्रवणंतव ॥ रोचनायार्थवादोऽस्तिविद्यासंस्तवनार्थकः ॥ ७४ ॥ तथाचबंधमोक्षौद्वौकस्यैषतवसंशयः ॥ नसंसारदशायांवामोक्षकालेऽथसंभवेत् ॥ ७५ ॥

स्वीकार्या इदानींतनसंसारोपलंभविरोधाद्वामदेवादेर्मुक्त्यवभासस्यस्वप्नमुक्त्यवभासवद्भ्रमइत्याशयः ॥ ७३ ॥ तर्हितन्मुक्तिप्रतिपादकशास्त्रविरोधइत्याशंक्यतद्विषयकशास्त्रस्यप्रत्यक्षविरुद्धत्वादर्थवादतेत्याशयेनाह । वामदेवेति ॥ ७४ ॥ नन्वेकमुक्तावपिकस्यैकस्यमुक्तिरितिविनिगमनाभावादायासबहुलेश्रवणादौप्रवृत्तिर्नयुक्तेत्याशंक्याह । तथाचेति । संसारावस्थायांसर्वस्यापिसंसार्यहमित्यनुभवान्मोक्षावस्थायांमुक्तोऽहमित्यनुभवसंभवात्तत्तत्पुरुषदृष्ट्या तस्यतस्यजीवत्वाच्छ्रवणादिप्रवृत्तौनास्तिबाधकमित्यर्थः ॥ ७५ ॥ ॥

इत्येवंगुरुशास्त्राभ्यांबोधितेसतिकस्याप्यत्रसंशयोनोदेतीत्यर्थः ॥ ७६ ॥ एवंपरमतनिरासेनफलितंस्वमतमाविष्करोति । अतइति ॥ ७७ ॥ ॥ ७८ ॥ ७९ ॥ २८० ॥ ननुजीवोब्रह्मणात्यंतमभिन्नश्चेत्तर्हिमृन्मृदितिवाक्यवत्तत्त्वमसिवाक्येतत्त्वमितिपदद्वयेपुनरुक्तिःस्यादितिभास्करःशंकते । नन्विति ॥ ८१ ॥ स्वीकार्याविति । परिहरत्याचार्यः । मैवमिति । तर्हितवमतेवाक्यार्थज्ञानतोऽपिदेहेंद्रियादिसंसारनिवृत्ति

तत्तत्पूरुषदृष्टयैवंसएवात्मेतिबोधिते ॥ कस्यापिगुरुशास्त्राभ्यांनोदेतीतीहसंशयः ॥ ७६ ॥ अतोऽखंडैकशुद्धात्मवादेऽस्मिन्नुपपत्तितः ॥ तत्परेणैवशास्त्रेणबुद्धेब्रह्मैक्यवस्तुनि ॥ ७७ ॥ अविद्यायाःसकार्यायाःस्वाप्नस्येवलयोभवेत् ॥ अखंडानंदएवैकोब्रह्मात्मापरिशिष्यते ॥ ७८ ॥ तथाचनित्यमुक्तंतद्ब्रह्मैवाविद्ययास्वया ॥ जीवभावंप्रपद्यादौसंसारंप्रतिपद्यते ॥ ७९ ॥ स्वविद्ययातदेवात्रनित्यमुक्तंविमुच्यते ॥ नित्यनिवृत्तएवासौसंसारोऽपिनिवर्तते ॥ २८० ॥ नन्वेवंतर्हिजीवस्यब्रह्मत्वेसतिसर्वथा ॥ तत्त्वमस्यादिवाक्येस्यात्पुनरुक्तिःपदद्वये ॥ ८१ ॥ स्वीकार्यौतन्निरासायभेदाभेदाविहेतिचेत् ॥ मैवंतवमतेतर्हिवाक्यार्थज्ञानतोऽपिहि ॥ ८२ ॥ देहेंद्रियादिसंसारनिवृत्तिर्नैवसंभवेत् ॥ देहादिसंयुतस्यैवजीवस्यब्रह्मणासह ॥ ८३ ॥ त्वन्मतेवस्तुतोभेदाभेदौतत्रानयोर्द्वयोः ॥ महावाक्यार्थरूपत्वात्तज्ज्ञानेननजायते ॥ ८४ ॥ ॥

र्नैवसंभवेत् ॥ ८२ ॥ एतदुपपादयति । देहेंद्रियादीति । देहादिसंयुतस्यैवजीवस्यब्रह्मणासहपरमार्थतोभेदाभेदौत्वन्मतेस्तः ॥ ८३ ॥ तत्रभेदाभेदयोर्वास्तवत्वेसतिअनयोर्भेदाभेदयोर्द्वयोर्महावाक्यार्थरूपत्वात्तयोर्भेदाभेदयोर्ज्ञानेनदेहादीनांनिवृत्तिर्नजायतेनिष्कलंकयायु

क्त्या निर्दोषायुक्तिरत्रनास्ति ॥ ८४ ॥ देहादीनामिति । तथाचत्वन्मतेतत्त्वमसीतिवर्तमानापदेशिनआगमस्ययदिदेहादिसंयुतस्यजीवस्यब्रह्मणाभेदःस्यात्तर्ह्युपलभ्येत नोपलभ्यतइत्यनुपलब्धेर्विरोधेनार्थवादत्वंस्यात् ॥ ८५ ॥ योग्येति । ननुमोक्षेदेहादेःक्षयेसतिजीवस्ययोभेदस्तत्रवेदवाक्यस्यतात्पर्यंवर्तमानापदेशस्तुप्ररोचनार्थएवेष्यतइत्याशंक्यपरिहरति । अथेति ॥ ८६ ॥ मोक्षकालेऽपिभेदांशोनिवर्ततेनवा द्वितीयेऽपिसकिंदेहादिनिबंधनउतनिर्निमित्तकः नद्वितीयस्तस्यासंभवादाद्येतन्निर्वाहायदेहादिसत्वस्वीकारावश्यकत्वेमोक्षस्य

देहादीनांनिवृत्तिस्तेयुक्त्यावैनिष्कलंकया ॥ त्वन्मतेह्यागमस्यापिवर्तमानापदेशिनः ॥ ८५ ॥
योग्यानुपलब्धितःस्याद्विरोधेनार्थवादता ॥ अथागमस्यतात्पर्यंमोक्षेदेहादिकक्षये ॥ ८६ ॥
तथापिमोक्षकालेचेज्जीवस्यतवसंमतः ॥ भेदांशोननिवर्तेततन्निर्वाहार्थमेवते ॥ ८७ ॥ देहेंद्रि
यादयःसर्वेस्वीकार्यास्तर्हितेऽप्यहो ॥ नसंसाराद्विशेषःस्यान्मोक्षेसंकरवादिनः ॥ ८८ ॥ भेदां
शविनिवृत्तिस्तुतत्त्वज्ञानान्नतेभवेत् ॥ विज्ञानविषयत्वेनभेदस्यत्वन्मतेकिल ॥ ८९ ॥ अतो
मोक्षोनतेसिद्ध्येत्तत्त्वविज्ञानतःश्रुतेः ॥ व्यर्थःपरिश्रमःसर्वोभेदाभेदाध्ववादिनः ॥ २९० ॥

संसाराविशेषापातस्तवमतइत्याशयेनाह । तथापीति ॥ ८७ ॥ ८८ ॥ आद्येतन्निवृत्तिस्तत्त्वज्ञानाद्वुतान्यस्मान्नद्वितीयस्तन्निवर्तकस्यान्यस्यानंगीकारान्नाद्यस्तद्विषयस्यतस्यतन्निवर्तकतायोगादित्याह । भेदांशेति ॥ ८९ ॥ यस्माद्भेदस्यनिवृत्तिर्नसंभवति सचभेदोदेहादिनिबंधनस्तस्यचदेहादेर्मोक्षेऽपिसत्वात्तस्यमोक्षस्यसंसारादविशेषस्तस्माच्छ्रुतिजन्यतत्त्वज्ञानात्तवमोक्षोनसिद्ध्यतितथात्वेचभेदाभेदवादिनस्तवसाधनजालसंपादनेपरिश्रमएवफलितइत्याह । अतइति ॥ २९० ॥ ॥ ॥ ॥ ॥

एवमुक्तोभास्करःशंकते । स्यादेवमिति ॥ ९१ ॥ ज्ञानेनेति । ननुश्रुत्यादिप्रमाणाभावादिदंसमुच्चयमतंकथंत्वयेष्यतइत्याशंक्याह । यतइति । यावज्जीवमग्निहोत्रंजुहुयादित्यादिश्रुत्यायावज्जीवंविहितस्यकर्मणस्त्यागायोगात्तेनकेवलेनमुक्तेरलभ्यत्वात्कर्मसमुच्चितेनज्ञानेन मोक्षइतिश्रुत्यैवसिद्ध्यतीत्यर्थः ॥ ९२ ॥ एवमर्थाच्छ्रुत्याकर्मसमुच्चयेबोधितइत्युक्तमिदानींसाक्षादपितयाबोधितइत्याह । यज्ञेनेति । तमेतंवेदानुवचनेनब्राह्मणाविविदिषंतियज्ञेनदानेनतपसानाशकेनेतिवाक्येन ॥ ९३ ॥ ब्रह्मविदिति । ब्रह्मविदाप्नोतिपरं तरतिशोकमात्मवि

स्यादेवंयदिबोधेनविमुक्तिःकेवलेनमे ॥ इष्टास्यान्नतथाकिंतुश्रौतकर्मयुतेनहि ॥ ९१ ॥ ज्ञाने नेष्टायतःश्रुत्यायावज्जीवंप्रचोद्यते ॥ कर्मतन्नविनाज्ञानंकेवलंमुक्तिदंभवेत् ॥ ९२ ॥ यज्ञेनेत्या दिवाक्येनविनियोगोहिकर्मणाम् ॥ विहितस्तेनतेषांचगम्यतेमुक्तिहेतुता ॥ ९३ ॥ ब्रह्मवित्प रमाप्नोतिशोकंतरतिचात्मवित् ॥ उच्यतेब्रह्मविज्ञानंश्रुतिभिर्मोक्षसाधनम् ॥ ९४ ॥ उभा भ्यामेवपक्षाभ्यांयथाखेपक्षिणांगतिः ॥ तथैवज्ञानकर्मभ्यांमोक्षःस्यादितिचस्मृतिः ॥ ९५ ॥ मैवंनैवत्वयाबुद्धःश्रुतीनामाशयःपरः ॥ यावज्जीवमितिश्रुत्याप्यज्ञानांकर्मसंगिनाम् ॥ ९६ ॥ कर्तव्यंबोध्यतेकर्मनतुसंन्यासिनांक्वचित् ॥ यदहरेवविरजेत्प्रव्रजेत्तद्दिनेत्विति ॥ ९७ ॥

दित्यादिभिर्ब्रह्मविज्ञानंमोक्षसाधनमुच्यते तथाचपरस्परश्रुतिविरोधात्तत्समुच्चयःश्रुतिसंमतइत्यर्थः ॥ ९४ ॥ स्मृतिमप्युदाहरति । उभाभ्यामिति ॥ ९५ ॥ श्रुतितात्पर्यार्थापरिज्ञानविजृंभितेयंतवोक्तिरित्याचार्यआह । मैवमिति । यावज्जीवमिति श्रुतितात्पर्यमाह । यावदिति ॥ ९६ ॥ कर्तव्यमिति । कुतइतिचेद्यदहरेवविरजेत्तदहरेवप्रव्रजेदित्यादिश्रुत्यविरोधायेत्याशयेनाह । यदहरेवविरजेदिति । इतीयं

श्रुतिर्मोक्षार्थिनामपिकर्मणांत्यागमेवाह । ज्ञानिनांकर्मत्यागेतुकिंपुनर्वक्तव्यं ॥ ९७ ॥ ९८ ॥ किंच तेजस्तिमिरयोरिवज्ञानकर्मणोः परस्परविरोधस्यश्रुतियुक्तिसिद्धत्वात्तत्त्वज्ञानिनांतदभ्यासपराणांमुमुक्षूणांवानास्तिकर्मसंभवइत्याह । श्रुतिरिति ॥ ९९ ॥ विरोधंप्रकटयति । कर्तृकर्मेति । कर्तृकर्मादिकारकप्रधानंहिकर्मज्ञानविलक्षणंज्ञानेचाकर्तृत्वमभोक्तृत्वंकर्मविरोध्यतोऽनयोर्विरोधइत्यर्थः ॥ ३०० ॥ विरोधांतरमाह । मिथ्येति । तस्यकर्मणोमिथ्याज्ञानप्रयुक्तत्वात्ज्ञानस्यचतन्निवर्तकत्वादनयोर्विरोधस्तथाचनिवृत्तमिथ्याज्ञानस्यज्ञानि



कर्मणांत्यागमेवाहश्रुतिर्मोक्षार्थिनामपि ॥ किंपुनर्ज्ञानिनांकर्मत्यागेवक्तव्यमत्रच ॥ ९८ ॥
श्रुतिभिर्युक्तिभिर्वापिविरोधाज्ज्ञानकर्मणोः ॥ तज्ज्ञानांवामुमुक्षूणांसंभवोनास्तिकर्मणः ॥ ९९ ॥
कर्तृकर्मप्रधानंहिकर्मज्ञानविलक्षणम् ॥ अकर्तृत्वमभोक्तृत्वंज्ञानेकर्मविरोधिच ॥ ३०० ॥ मि
थ्याज्ञानप्रयुक्तंतत्कर्मज्ञानविरोधिच ॥ निवृत्तमिथ्याज्ञानत्वाज्ज्ञानिनःसंभवेत्कथम् ॥ १ ॥
तेजस्तिमिरयोर्यद्वद्यौगपद्यंनसंभवेत् ॥ एकाश्रयेतथानास्तिविरोधाज्ज्ञानकर्मणोः ॥ २ ॥
अहंब्रह्मास्मिकर्ताहमितियस्यास्तिनिश्चयः ॥ सचार्वाकविनेयःस्याद्देहादौब्रह्मधीर्यतः ॥ ३ ॥
किंचकर्मफलंमोक्षःस्याद्यदातच्चतुर्विधम् ॥ उत्पाद्यमाप्यंसंस्कार्यंविकार्यंचेतितेष्वथ ॥ ४ ॥

नःकथंतत्संभवइत्यर्थः ॥ १ ॥ फलितमाह । तेजस्तिमिरयोरिति । तेजस्तिमिरयोर्यथायौगपद्यंनसंभवति तथाज्ञानकर्मणोरेकस्मिन्नाश्रयेयौगपद्यंनसंभवति ॥ २ ॥ देहाद्यभिमानंविनाकर्मसुप्रवृत्त्यनुपपत्तेर्देहाभिमानेस्थितेऽहंब्रह्मास्मीत्यभिमानवतश्चार्वाकशिष्यतासंपन्नेत्याह । अहमिति ॥ ३ ॥ किंच कर्मफलस्योत्पाद्याद्यात्मत्वाद्ब्रह्मणस्तद्विलक्षणत्वान्मोक्षस्यतत्स्वरूपत्वात्तस्यतत्फलतानुपपन्नेत्याह । किंचेति । तत्कर्मफलंउत्पाद्यंघटादिआप्यंग्रामादिसंस्कार्यंव्रीह्यादिविकार्यंचर्मादि ॥ ४ ॥ ॥ ॥ ॥

अजोनित्यइत्यादिश्रुत्याब्रह्मरूपस्यमोक्षस्यनित्यत्वावधारणात्तेषुचतुर्षुकर्मफलेषूत्पाद्योमोक्षोनसंभवतीत्याह । नित्यत्वादिति । अन्यथात
स्योत्पाद्यत्वेकथंनित्योभवेद्यत्कृतकंतदनित्यमितिव्याप्तेः ॥ ५ ॥ आकाशवत्सर्वगतइत्यादिश्रुत्यासर्वगत्वेनावधारितस्याऽऽप्यत्वमपिनसंभ
वति परिच्छिन्नस्यैवाप्यताप्रसिद्धेरित्याह । सर्वगत्वेनेति । कूटस्थस्यविकार्यतानिरस्तेत्याह । चर्मवदिति ॥ ६ ॥ संस्कार्यतापिमलाप
करणेनाऽतिशयाधानेनवा नाद्यः निरंजनस्यासंगस्यानुपपत्तेः । नद्वितीयःसर्वदैकरसस्यनिरतिशयस्यतथात्वायोगादित्याह । नित्यस्ये
ति । यस्मादेवमतोज्ञानफलेमोक्षेनास्तिकर्मणांप्रवेशइत्याह । अतइति ॥ ७ ॥ यज्ञेनेत्यादिवाक्यानांमलिनांतःकरणानामज्ञानांचित्त

नित्यत्वाद्ब्रह्मरूपस्यमोक्षस्यश्रुतिनिश्चयात् ॥ उत्पाद्योनतुमोक्षःस्यात्कथंनित्योऽन्यथाभवेत्
॥ ५ ॥ सर्वगत्वेननित्याप्तःकथमाप्योहिकर्मभिः ॥ चर्मवद्विक्रियाभावाद्विकार्यःस्यात्कथंत
दा ॥ ६ ॥ नित्यस्यातिशयोनास्तिसंस्कार्योऽतोनसंमतः ॥ अतोज्ञानफलेमोक्षेप्रवेशोनास्तिक
र्मणाम् ॥ ७ ॥ यज्ञेनेत्यादिवाक्यानामज्ञानांचित्तशुद्धये ॥ कर्माणीत्येवतात्पर्यंनतुज्ञानसमुच्चये
॥ ८ ॥ ज्ञात्वातमेवचात्येतिमृत्युंनान्योऽस्तिमुक्तये ॥ पंथाज्ञानाद्धिकैवल्यंकर्मभ्योनैवतद्भवेत् ॥ ९ ॥

शुद्ध्यर्थंकर्माणिकार्याणीत्येवतात्पर्यंनतुज्ञानकर्मसमुच्चयेविविदिषंतीतिज्ञानेच्छायाज्ञानस्यवासाधनत्वेनयज्ञादीनांविधानादित्याह । यज्ञे
नेति । तथाचस्मृतयः कायेनमनसाबुद्ध्याकेवलैरिंद्रियैरपि । योगिनःकर्मकुर्वंतिसंगंत्यक्त्वात्मशुद्धये । आरुरुक्षोर्मुनेर्योगंकर्मकारण
मुच्यते । योगारूढस्यतस्यैवशमःकारणमुच्यतेइत्याद्याः ॥ ८ ॥ तमेवविदित्वातिमृत्युमेति नान्यःपंथाविद्यतेऽयनाय ज्ञानादेवतुकैवल्यं
नास्त्यकृतःकृतेनेत्यादिश्रुतिप्रामाण्यादपि केवलाज्ज्ञानान्मोक्षइत्याह । ज्ञात्वेति ॥ ९ ॥ ॥ ॥ ॥

त्वत्पक्षोक्तज्ञानंतुसर्वानर्थकरमज्ञभूतभेदविषयत्वात्संसारापादकमेवेत्याह । ज्ञानमिति ॥ ३१० ॥ यत्तुसत्यस्यापिनिवृत्तौदृष्टांतावुक्तौतत्प्र त्याह । यत्तूक्तमिति । विषादेःसत्यत्वस्यैवासिद्धेर्नदृष्टांतता ॥ ११ ॥ ननुसर्वःप्रपंचोमिथ्येतिभवन्मतेविषस्यसत्यत्वासंभवेऽपिगरुडध्यान निवर्त्यत्वप्रयुक्तंनविषस्यमिथ्यात्वंत्वयेष्यतेकिंतुप्रपंचमिथ्यात्वसाधकप्रमाणांतरप्रयुक्तं तत्रचतार्क्ष्यध्याननिवर्त्यस्यापिविषस्यसत्यत्ववज्ज्ञा ननिवर्त्यस्यापिसंसारस्यसत्यत्वमस्त्वित्याशंक्य ध्यानस्यापि वेदांतविज्ञानसुनिश्चितार्थाइत्यादिश्रुतेर्गुरूपसदनश्रवणमननाद्यभिधान लिंगाच्चब्रह्मज्ञानंपरीक्षितप्रमाणमतकंप्रमारूपमेवसंसारनिवर्तकंध्यानंतुकल्पिताकल्पितसाधारणयथोपदिष्टार्थविषयत्वान्नप्रमारूपमेवविष



ज्ञानंतुत्वन्मतेदुष्टंसंसाराध्वप्रवर्तनम् ॥ नतुमोक्षकरंभ्रांतिज्ञानत्वादेवसर्वथा ॥ ३१० ॥ यत्तू
क्तंगरुडध्यानादिभिःसत्यंविषादिकम् ॥ नश्यतीतिनसत्यत्वंविषादेरपिसंभवेत् ॥ ११ ॥
ध्यानस्याप्यप्रमात्वेनदृष्टांतत्वंनसंभवेत् ॥ सेतुदर्शनमप्यत्रक्रियारूपेणपापिनाम् ॥ १२ ॥
पापहंतृनदृष्टांतोविज्ञानफलसाधने ॥ अन्यथाऽश्रद्दधानानांम्लेच्छानांतन्निवासिनाम् ॥ १३ ॥

निवर्तकमितितस्यादृष्टांततेत्याशयेनाह । ध्यानस्येति । नवस्तुतःसेतुदर्शनंसत्यस्यनिवृत्तौदृष्टांतोऽन्यत्रसेतुभ्रमेणाघाऽनिवृत्तेः प्रमारू पस्यैवतस्याघनिवर्तकत्वादित्याशंक्याह । सेतुदर्शनमपीति । सेतुदर्शनमपिनकेवलंपापनिवर्तकमपितुविहितक्रियात्मनातोनाऽत्रदृष्टांत इत्यर्थः ॥ १२ ॥ पापेति । अन्यदर्शनमात्रस्यपापनिवारकताभ्युपगमेतथायद्धिपापप्रमात्वमात्रंयन्निवर्तकताप्रयोजकंतत्तत्राध्यस्तमि त्यस्यनास्तिक्वापिव्यवहारः यद्यपिरंगाऽध्यासेनापिरजताध्यासनिवृत्तिरस्तितथापिसमूलसमस्ताध्यासनिवृत्तिरधिष्ठानप्रमापेक्षातदन्यानपे क्षाचदृष्टा सन्यायइहापिद्रष्टव्यइतिभावः ॥ १३ ॥ ॥ ॥ ॥ ॥ ॥

ब्रह्महत्यादीति । ननुसेतुदर्शनवद्ब्रह्मज्ञानस्यापिविध्यायत्तमेवसंसारनिवर्तकत्वंनशुक्तिज्ञानवदधिष्ठानप्रमायत्तमित्याशंक्य वेदवाक्यो त्थब्रह्मज्ञानंविध्यनपेक्षमेवसंसारनिवर्तकं तत्रविधेरशक्यनिरूपणत्वादित्याशयेनाह । अतइति । तथाचप्रपंचोमिथ्याज्ञाननिवर्त्यत्वा च्छुक्तिरजतवदित्याद्यनुमानेनसंसारस्यमिथ्यात्वंसिद्ध्यति नचेदमिदंसामान्यतोदृष्टमनुमानं ज्योतिष्टोमेनस्वर्गफलःक्रियात्वान्मर्दनक्रि यादिवदमानमितिवाच्यं तत्रज्योतिष्टोमेनस्वर्गकामोयजेतेतिस्वर्गोद्देशेनयागविधिनाविरोधेनकालात्ययापदिष्टत्वादत्रतुसत्यःप्रपंचो

ब्रह्महत्यादिकर्तॄणांपापोत्पत्तिर्नसंभवेत् ॥ मुमुक्षूणामतस्तत्त्वमस्यादिवाक्यतोभवेत् ॥ १४ ॥ दृष्टद्वारेणविज्ञानंबंधहंतृनवाविधेः ॥ किंचवेदविरुद्धेऽस्मिन्संमतेभ्रांतिदायिनि ॥ १५ ॥ भे दाभेदमतेतत्त्वंपदार्थोनैवशक्यते ॥ युक्त्यावर्णयितुंतत्रकश्चासौत्वंपदार्थकः ॥ १६ ॥ जीव स्तेसंमतस्तावद्भेदाभेदोभयात्मकः ॥ भिदाभिदाभ्यामंशाभ्यामंशीकिंवानचाग्रिमः ॥ १७ ॥ जीवस्यावस्तुतादोषान्नहिजीवोभिदाभिदे ॥ तयोस्तुपरतंत्रत्वान्नचस्यात्समुदायता ॥ १८ ॥

ज्ञाननिवर्त्यइत्यागमाभावेनतदभावात्प्रत्युतमिथ्यारूपस्यबंधस्यज्ञाननिवर्त्यत्वश्रुतार्थापत्तिसिद्धेरित्याशयः । किंच । तत्त्वंपदार्थस्तवम तेइनिंरूपइत्याह । किंचेति ॥ १४ ॥ १५ ॥ १६ ॥ जीवइति । किंत्वंपदार्थोजीवोभेदाभेदोभयस्वरूपउतताभ्यामंशाभ्यामंशिस्वरू पइतिविकल्पार्थः आद्यंप्रत्याह । नचाग्रिमइति ॥ १७ ॥ भेदाभेदापेक्षयापृथक्जीवस्यासत्त्वेतदवस्तुत्वापातात्तस्यभेदाभेदात्मत्वायोगा दितिहेतुमाह । जीवस्येति । भेदाभेदसमुदायोजीवइतिचेत्तयोर्धर्मिप्रतियोगितंत्रत्वेनसमुदायस्यैवासिद्धेर्मैवमित्याह । तयोरिति ॥ १८ ॥

नांत्यइति । द्वितीयेऽप्यभेदांशोब्रह्मोतान्यइतिविकल्प्याद्यंनिराह । यदीति । ब्रह्मणोजीवांशतापातात्तस्यसावयवत्वेनविनश्वरताप्रसंगाच्च नाद्यइत्यर्थः ॥ १९ ॥ द्वितीयंप्रत्याह । नेति । तथाचजीवस्यसावयत्वानपायाज्जीवब्रह्मणोरत्यंताभेदज्ञानादिव्यवहारोनसिद्ध्यतीतिफलितमाह । तथाचेति ॥ ३२० ॥ ब्रह्मैवाभेदांशइत्यस्मिन्पक्षेऽपिशास्त्रोपदेशानर्थक्यमित्याह । शास्त्रोपदेशइति । सःकिमभेदांशस्योतभेदांशस्याभेदांशोब्रह्मोतान्यएव नांत्यस्तस्याप्रसिद्धेर्जीवब्रह्मणोरत्यंतभेदापत्तेश्चेत्यभिप्रेत्याद्यंप्रत्याह । नाभिदांशस्येति ॥ २१ ॥ द्वितीयं

नांत्योऽस्तियद्यभेदांशोब्रह्मतर्ह्यस्तुतस्यवै ॥ जीवांशत्वंचजीवस्यसांशतादोषआप्नुयात् ॥१९॥
नब्रह्मयद्यभेदांशस्तर्ह्यत्यंतभिदातयोः ॥ तथाचज्ञानमोक्षादिव्यवहारोनसिद्ध्यति ॥ ३२० ॥
शास्त्रोपदेशःकस्यायंनाभिदांशस्यसंभवेत् ॥ ब्रह्मरूपतयातस्यनोपदेशाद्यपेक्षिता ॥ २१ ॥
नोपदेशोभिदांशस्याहंब्रह्मास्मीत्ययोगतः॥ नमोक्षेऽपिभिदांशस्यस्यादभेदोविरोधतः॥ २२ ॥
नचाविद्यादिदोषोऽस्याभेदांशस्यात्रसंभवेत् ॥ ब्रह्मण्येवप्रसज्येतनापिभेदांशगःसच ॥ २३ ॥
उपाधिजननात्पूर्वंभेदाभावादथापिच ॥ उपाधिमनपेक्ष्यैवभिन्नोंऽशोजीवउच्यते ॥ २४ ॥

निराचष्टे । नेति । योब्रह्मणोऽभिन्नस्तस्यब्रह्मणाभेदोपदेशानौचित्यात् ननुमोक्षेभेदांशस्यब्रह्मणाभेदोभविष्यतितमपेक्ष्याभेदोपदेशोयुज्यतएवेत्याशंक्याह । नेति । नाभावोविद्यतेसतइतिन्यायात् ॥ २२ ॥ किंचाविद्यादिदोषोभवन्मतेकस्य किमभेदांशस्योतभेदांशस्येतिविकल्प्याद्यंप्रत्याह । नचेति । द्वितीयंनिराह । नापीति ॥ २३ ॥ तत्रहेतुमाह । उपाधीति ॥ २४ ॥ ॥ ॥

उपाधिनिरपेक्षस्याभिन्नाशस्यकिंस्थितस्यमोक्षउतविनष्टस्यनद्वितीयोनिरुपाधिकस्यविनाशायोगाद्विनाशेऽपितदाश्रयाभावादयुक्तोमोक्ष इत्याह । तदंशेति । नन्वस्तुब्रह्मणएवमोक्षइत्याह । ब्रह्मणइति ॥ २५ ॥ द्वितीयमुत्थाप्यदूषयति । मोक्षइति । ब्रह्मवेदब्रह्मैवभवतीत्येव कारे ॥ २६ ॥ तस्मादेवंविधानेकदोषदुष्टंस्वमतंविहायास्मन्मतमंगीकुर्वित्याह । अनेकेति ॥ २७ ॥ ननुत्वन्मतेऽपिपौनरुक्त्यादिदो

तदंशनाशेजीवस्यनाशान्मोक्षोऽपिकस्यसः ॥ ब्रह्मणस्त्वभिदांशस्यनित्यमुक्तत्वमेवहि ॥ २५ ॥
मोक्षेऽपिभिन्नाभिन्नश्चेत्तर्हिब्रह्मैवतत्त्ववित् ॥ इत्येवकारेस्वारस्यंनस्यान्मोक्षेऽपिसंस्मृतेः ॥ २६ ॥
अनेकदोषदुष्टेऽस्मिन्भेदाभेदमतेवृथा ॥ त्यजाग्रहंगृहाणाद्यमन्मतंवेदसंमतम् ॥ २७ ॥ अ
स्मन्मतेतुजीवस्यब्रह्मत्वेसत्यपिस्वतः ॥ सद्वितीयत्वपारोक्ष्यभ्रमद्वयनिवृत्तये ॥ २८ ॥ पद
द्वयस्यवाक्येऽस्मिन्नुपयुक्तत्वमस्तिभोः ॥ वाक्यजज्ञानतोऽविद्यानिवृत्तौपरिशिष्यते ॥ २९ ॥
नित्यसिद्धपरब्रह्माखंडमोक्षःस्वतस्त्विति ॥ पुनरुक्तिर्नदोषोऽत्रब्रह्माद्वैतमतेभवेत् ॥ ३३० ॥
किंचमोक्षस्यकावार्ताव्यवहारोऽपिदुर्लभः ॥ सर्वसंकरवादेऽस्मिन्श्रृणुयुक्त्येदमुच्यते ॥ ३१ ॥

षसद्भावात्तदाश्रयणमनुपपन्नमित्याशंक्याह । अस्मदिति । स्वतोब्रह्मत्वेसत्यपिस्वस्मिन्सद्वितीयत्वभ्रमःपरमेश्वरेपरोक्षताभ्रमः ॥ २८ ॥ अस्मिंस्तत्त्वमसिवाक्ये ॥ २९ ॥ नित्येति । तथाचत्वंपदार्थतत्पदार्थाभेदबोधनपरेब्रह्माद्वैतमते नास्तिपुनरुक्तिदोषइत्याह । पुनरुक्ति रिति ॥ ३३० ॥ किंच व्यवहारोऽपिभवन्मतेदुर्लभइत्याह । किंचेति ॥ ३१ ॥ ॥ ॥ ॥ ॥

भेदइति । अभेदेनसहैकस्मिन्वस्तुनियोभेदोवर्ततेसःकउच्यते किंरूपादिवद्भावरूपोऽथवापरस्पराभावः आद्येऽपिकिमभेदविरुद्धउततदविरुद्धइतिविकल्प्याद्येऽपि वक्ष्यमाणंदूषणमित्याशयेनद्वितीयेदूषणमाह। तदेति । भेदेसत्येवाभेदोऽपिस्यादित्यर्थः ॥ ३२ ॥ द्वितीयमुत्थाप्यविकल्प्यनिराचष्टे। अन्योन्याभावइति । कारणकार्ययोर्हाटककटकयोः ॥ ३३ ॥ अस्तीति । सकिमभेदविरुद्धइतिप्रथमंभेदाभेदयोर्भावाभावैकत्वपक्षेदूषणमाह । नेति । तयोर्भावाभावरूपयोर्भेदाभेदयोर्नास्त्यविरोधः हियस्मात्तयोःसहावस्थानंनसंभवति अन्यथाकटकमुकुटयोःकटकत्वमुकुटत्वरूपेणान्योन्याभेदप्रसंगइत्यर्थः ॥ ३४ ॥ किंचकार्यस्यकारणाभेदएव कार्यस्यसमस्तकार्याभिन्नेनकारणेनाभे

भेदःकउच्यतेयस्तुसहाभेदेनवर्तते ॥ रूपादिकेऽवभावश्चेत्तदाभेदेऽभिदाभवेत् ॥ ३२ ॥ अन्योन्याभावइतिचेत्सकिंकारणकार्ययोः ॥ अस्तिवानास्तितत्रांत्यएकत्वंवास्तवंभवेत् ॥ ३३ ॥
अस्तिचेद्भेदएवास्तिनाभेदःसंभवेत्तदा ॥ नतयोरविरोधोऽस्तिसहस्थानंयतोनहि ॥ ३४ ॥ कटकस्यहाटकाच्चेद्भेदोहाटकात्मना ॥ नभिद्यंतेयथाभावामुकटाद्यास्तथैवहि ॥ ३५ ॥ कटकात्मनापितेषांभेदोनस्याद्यतस्ततः ॥ हाटकान्नैवभेदोऽस्तिकटकस्यतदात्मना ॥ ३६ ॥ तथाचस्वर्णमेवस्याद्वस्तुतःकटकादयः ॥ भेदस्याभासताद्दृष्टाऽभेदोहाटकरूपतः ॥ ३७ ॥

दात्मककार्याणामेककार्यात्मत्वप्रसंगइत्याह । कटकस्येति । यथामुकुटकटककुंडलादयोहाटकात्मनानभिद्यंतेतथैवकटकात्मनापितेषां भेदोनस्यात् यतस्तस्माद्धाटकात्कटकस्यहाटकात्मनाभेदोनैवास्ति ॥ ३५ ॥ ३६ ॥ तथाचैककार्यरूपत्वादन्यकार्याणांतेषुचकारणाभेदाद्भेदरूपासिद्धावैकांतिकाद्वैतापातइत्याह । तथाचेति ॥ ३७ ॥ ननुकटकस्यद्वेरूपेस्तोहाटकत्वंकटकत्वंच तत्रहाटकात्मनास्यकुंडलादिभिरभेदइष्टएवनकुंडलरूपेणव्यावृतत्वात्तस्येतिविस्मृताचार्याभिसंधिःस्वप्रक्रिययाशंकते । ॥ ॥ ॥

नाभेदइति। आचार्यस्तुकटकहाटकयोरभेदेहाटकस्यकुंडलादिषुअनुवृत्तेरभेदेनकटकस्यापितैरभेदःस्यादितिपूर्वोक्तमेवस्मारयति। यदीति। यदिहाटकादभिन्नोऽयंकटकोऽस्तितर्हिसकटकःकथंकुंडलादिषुनानुवर्तेतेत्यन्वयः ॥ ३८ ॥ कुंडलादिष्विति । कटकस्यकुंडलादिष्वनुवृत्त्यनभ्युपगमेतेष्वनुवृत्तहाटकादभेदाभावःस्यादित्याशयेनाह । कथमिति । यदिकुंडलेसनानुवर्ततेचेत्तर्हिस्वर्णादभिन्नःकटकःकथंस्यात् ॥३९॥ अनुवृत्ताद्व्यावृत्तस्यभेदेव्याप्तिमाह । अनुवर्तमानइति ॥ ३४०॥ उपनयमाह । स्वर्णइति । हेतुसिद्धिरर्थाद्दृष्टव्येति निगमयति । यतइति । अतःकुंडलादयोहाटकाद्भिन्नाएवेति ॥ ४१ ॥ कटकादिषुसुवर्णानुवृत्त्यायदातदभेदात्कुंडलादीनामनुगमस्तदासत्तानुवृत्त्यात

नाभेदःकटकत्वेनकुंडलादेर्विभेदतः॥ यदिस्वर्णादभिन्नोऽस्तिकटकोऽयंकथंनसः ॥ ३८ ॥ कुंडलादिष्वनुस्यूतोवर्ततेत्यथनेतिचेत् ॥ कथंस्वर्णादभिन्नःस्यात्कटकोनानुवर्तते ॥ ३९ ॥ अनुवर्तमानेयस्मिन्व्यावर्ततेहियेततः ॥ भिन्नाएवतुतेज्ञेयाःकुसुमानीवसूत्रतः ॥ ३४०॥ स्वर्णेनुवर्तमानेयेविकाराःकुंडलादयः ॥ यतस्तेनानुवर्ततेभिन्नाःस्युर्हाटकादतः ॥ ४१ ॥ किंचसत्तानुवृत्त्यापिसर्वस्यानुगमोभवेत् ॥ इहेदंनेदमस्मादिदंनेदमिदमद्यन ॥ ४२ ॥ एवंचेदमिदंनैवंविभागोनैवसंभवेत् ॥ कदाचित्कस्यचिच्चैवक्वचिद्वेतिकथंचन ॥ ४३ ॥ ॥ ॥

दभिन्नसकलपदार्थानांपरस्पराभेदापत्त्याव्यवहारोच्छेदप्रसंगइत्याह । किंचेति । सत्तानुवृत्त्याचसर्ववस्त्वनुगमेइहदुग्धेइदंदधिनेदंतैलमितिसंसर्गतदभावव्यवस्थानस्यात् इदंपयआदिकमस्माद्दध्यादेर्भिद्यतइदंकुड्यमस्मात्कुड्यान्नभिद्यतइत्यसंकरोनस्यात् अद्यवसंतकालेइदंकोकिलरुतमस्तिइदमंबुधरध्वांतंनास्तीतिव्यवस्थानस्यात् ॥ ४२ ॥ एवमिति । इदंघटाद्येवंकंबुग्रीवादिप्रकारमिदंपटादिनैवमितिप्रकारविभागोनस्यादित्यर्थः उक्तविभागाभावेहेतुमाह । कदाचिदिति ॥ ४३ ॥ ॥ ॥ ॥

कुतश्चिदिति । इतश्चनकारणेनकार्यस्यवास्तवमैक्यमित्याह । स्वर्णमस्तीति । एतत्कनकमित्यवगतेतस्यविशेषाःकुंडलादयोनजिज्ञा स्याःस्युस्तेषांहेमादभेदात्तस्यचपूर्वमेवाऽऽज्ञातत्वादित्यर्थः ॥ ४४ ॥ ४५ ॥ कनकादभेदात्कुंडलादिष्वसंशयइत्युक्तंतत्रभेदप्रयुक्त्यासं शयसंभवमाशंक्यपरिहरति । कनकादिति । अज्ञाताविशेषाइतिहेतोर्जिज्ञास्याः ॥ ४६ ॥ अभेदइति । विनिगमनाभावादभेदमादा यज्ञाताएवकिंनस्युः प्रत्युततेषांज्ञानेकारणसत्वात्तज्ज्ञानमेवन्याय्यमित्याह । ज्ञानमिति । कनकनिर्णयेतुकुंडलादीनांनिर्णयइत्यत्रा



कुतश्चिद्वाविवेकस्यकारणंनैवसंभवेत् ॥ स्वर्णमस्तीतिविज्ञातेदूरात्तस्यविशेषकाः ॥ ४४ ॥
कुंडलाद्यानजिज्ञास्यास्तेषांस्वर्णादभेदतः ॥ विज्ञातत्वात्सुवर्णस्यपूर्वमेवतुदूरतः ॥ ४५ ॥ कन
कात्कुंडलादीनांभेदोऽप्यस्तिततोहिते ॥ अज्ञाताइतिजिज्ञास्याविशेषाइतिचेच्छृणु ॥ ४६ ॥ अ
भेदोऽप्यस्त्यतोज्ञाताज्ञानंप्रत्युतसांप्रतम् ॥ हेत्वभावेऽस्तिकार्यस्याभावोह्यौत्सर्गिकोमतः॥४७॥
तथाचौत्सर्गिकोभावोऽपोद्यतेहेतुसत्तया ॥ अभेदेकारणस्यास्तिसत्तातद्बाधिकाततः ॥ ४८ ॥
कनकेऽवगतेज्ञाताविशेषाःकुंडलादयः ॥ तज्जिज्ञासावबोधौद्वौदृष्टथास्यातांमतेतव ॥ ४९ ॥

स्तितदभेदःकारणेतदभावाद्भेदरूपनिर्णयात्मकार्याभावऔत्सर्गिकःप्राप्तः सचकारणस्याभेदस्यसत्त्वादपोद्यते घटसामग्रीतइवतत्प्रागभा वस्यहेमनिर्णयेकुंडलादिनिश्चयात्तदभावेविनिगमनाभावनापिनतन्निश्चयोन्याय्यएवेत्युक्तंविवृणोति । हेत्वभावइति । मतोऽस्तीतिसंबंधः ॥ ४७ ॥ तथेति । अभेदेसतिकुंडलादिनिर्णयरूपकार्यस्ययत्कारणेऽभेदस्तेनतस्यकारणस्यसत्तातस्यकार्यभावस्यबाधिकाऽस्ति ततस्त स्मात्कनकेऽवगतइत्युत्तरेणान्वयः ॥ ४८ ॥ ४९ ॥ ॥ ॥ ॥ ॥ ॥

वस्तुतःकार्यकारणयोर्भेदाभावंसकारणमुपसंहरति । यदिति ॥ ३५० ॥ ५१ ॥ यदिकनककुंडलयोर्नभेदाभेदौतर्हिसामानाधिकरण्यं नस्यादत्यंतभेदाभेदेवातत्संभवात् कुंडलकटकयोर्हेमकनकयोर्वातददर्शनादितिभास्करोक्तमनूद्यदूषयति । सामानाधिकरण्यमिति । अथहेमकुंडलमितिसामानाधिकरण्यंतुनसमानाश्रयत्वान्नाप्याधाराधेयभावात्समानाश्रयत्वेआधाराधेयभावेवासामानाधिकरण्यादर्शनात् ॥ ५२ ॥ तर्हितत्सामानाधिकरण्यमनिर्वचनीयंभेदंवास्तवंचाभेदमादायोपपादनीयमित्याह । तर्हीति । नचान्यथा भेदाभेदयोरुभयोर्वा

यद्यस्मिन्गृह्यमाणेनोगृह्यतेभिद्यतेततः ॥ तद्यथारासभेगृह्यमाणेहस्तीनगृह्यते ॥ ३५० ॥ दूरतोगृह्यमाणेयेहाटकेकुंडलादयः ॥ नगृह्यंतेततस्तेहिभिद्यंतेहाटकादिति ॥ ५१ ॥ सामानाधिकरण्यंचहेमकुंडलमित्यपि ॥ नसमानाश्रयत्वाद्वानाधाराधेयभावतः ॥ ५२ ॥ तर्ह्यभेदस्वरूपत्वाद्वक्तव्यंतन्नचान्यथा ॥ नभेदाभेदरूपत्वाद्व्यवहारःक्वचित्खलु ॥ ५३ ॥ हेयमन्यतरंतस्मात्तयोरेवंव्यवस्थिते ॥ अभेदोपादानिकास्याद्यतोऽसौभेदकल्पना ॥ ५४ ॥ भेदोपादानिकानस्याद्युक्त्याचाभेदकल्पना ॥ विभिद्यमानतंत्रत्वाद्भेदस्यबुधपुंगव ॥ ५५ ॥

स्तवत्वेन सामानाधिकरण्यं यदिहेम्नःसकाशात्कुंडलादीनांभेदाभेदौतर्हितेषामनुवृत्तहेम्नःसकाशादभेदादितरेतरव्यावृत्तिर्नस्यान्नस्याच्चहेम्निनिर्णीतेऽसंशयइतिप्रतितर्केणमिथोविरोधाख्येनपराहतत्वात्सामानाधिकरण्यानुपपत्तितर्कोनवास्तवभेदाभेदसाधनायालमित्याशयेनाह । नेति ॥ ५३ ॥ यस्माद्वास्तवयोस्तयोःपरस्परविरोधस्तस्मादन्यतरहेयत्वमावश्यकमित्याह । हेयमिति । एवमन्यतरस्यहेयत्वेव्यवस्थितेभेदस्यैवहेयतान्याय्येत्याह । अभेदेति ॥ ५४ ॥ भेदेति । युक्तिमाह । विभिद्यमानेति ॥ ५५ ॥ ॥ ॥

प्रत्येकमिति । भेदःकिंधर्मिप्रतियोगिनोर्न्यांवृत्त्यवर्ततेकिंवाप्रतियोगिनमपेक्ष्यधर्मिण्येव आद्येधर्मिप्रतियोगिनोःप्रत्येकवर्त्यैकत्वापेक्षा द्वितीयेधर्म्यैकत्वापेक्षेत्याशयेनाह । एकाभावेनेति । तस्मात्स्वसत्तायामभेदापेक्षस्यभेदस्यैवाभेदेऽध्यस्ततेत्यर्थः ॥ ५६ ॥ एकत्वंतुनाध्यस्तंभेदानधीनत्वादित्याह । एकमिति । प्रतीतावपिभेदस्यैवाभेदापेक्षेत्याह । किंचेति । अयंनायमित्येवंस्वरूपेणभेदग्रहस्यतुप्रतियोगिग्रहात्सिद्धिः ॥ ५७ ॥ ५८ ॥ एकत्वग्रहस्यत्वन्यानपेक्षरूपत्वात्सिद्धिस्तस्मादभेदवादेनैवानिर्वचनीयभेदकल्पनेतिदृष्टांतोक्तमर्थंदार्ष्टां

प्रत्येकंभिद्यमानानामेकत्वाद्वस्तुतःकिल ॥ एकाभावेनभेदःस्यादयोगत्वादनाश्रयः ॥ ५६ ॥
एकंभेदानधीनंहिकिंचभेदग्रहस्यतु ॥ प्रतियोगिग्रहात्सिद्धिरयंनायंस्वरूपतः ॥ ५७ ॥ अ
न्यानपेक्षरूपत्वादेकत्वस्यग्रहस्यतु ॥ अभेदहेतुकासिद्धाऽनिर्वाच्याभेदकल्पना ॥ ५८ ॥
एकमेवाद्वितीयंचवेदेब्रह्मश्रुतंयतः ॥ एकरूपंभवेदेकमितिचेश्वरभाषितम् ॥ ५९ ॥ विकारो
नामधेयंचवाचारंभणमेवहि ॥ मृत्तिकेत्येवसत्यंचेत्येवंमिथ्याजगद्भवेत् ॥ ३६० ॥ तस्माद
रमणीयंतेभेदाभेदमतंमतम् ॥ विचारेसतिवेदांतविरुद्धंसर्वथाकिल ॥ ६१ ॥ तस्मात्त्वयाधु
नाभावरूपाज्ञानंचिदाश्रयम् ॥ आश्रित्यब्रह्मविषयंत्याज्योमिथ्याग्रहोनयात् ॥ ६२ ॥

तिकेयोजयति । एकमेवेति ॥ ५९ ॥ वाचारंभणंविकारोनामधेयंमृत्तिकेत्येवसत्यमितिश्रुतिः कारणस्यसत्यत्वंकार्यस्यमिथ्यात्वंचबोधयतीत्याह । विकारइति ॥ ३६० ॥ तस्माच्छ्रुतिविरुद्धमयुक्तंस्वमतंपरित्यज्यश्रुतिसिद्धंयुक्तियुक्तमस्मन्मतमुपादेयमित्याह । तस्मादिति ॥ ६१ ॥ ६२ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

नन्वनैवंविधमज्ञानमंगीक्रियतेज्ञानात्तन्निवृत्तेरसंभवादनिर्मोक्षप्रसंगान्नहिचित्प्रकाशस्तन्निवर्तकोऽविरोधित्वाज्जडप्रकाशयोस्तुसुतरामविरो
धित्वादनवभासनिमित्तंतुभ्रांतिज्ञानमितिभास्करःशंकते। अथेति ॥६३॥ परिहरत्याचार्यो मैवमिति। भिन्नाभिन्नविषयत्वेनसर्वप्रत्ययस्य
याथार्थ्याद्भ्रमस्यदुर्भणत्वमित्याशयः । नन्वुक्तमेवाहंनरइत्यहंकारादिशरीरपर्यंतेनात्मन्यात्मबुद्धिरितिभ्रमस्वरूपमतोक्तस्तस्यदुर्निरूप्यते
त्याशंक्याह । श्रोतव्यमिति । त्वयाविस्मरणशीलेनसर्वत्रसंकीर्णचेतसा ॥ ६४ ॥ खंडइति । व्यक्तिभ्यांखंड[illegible]जातःखं
डव्यक्त्याभेदाभेदौप्रामाणिकौमुंडव्यक्त्याचतौप्रामाणिकौप्रसिद्धौ ॥ ६५ ॥ तथैकस्यैवात्मनोवपुषाब्रह्मणाचभेदाभेदौप्रमा[illegible]कौकुतोन

अथाहंनरइत्येतज्जाग्रदादौभ्रमात्मकम् ॥ ज्ञानंब्रह्मात्मनस्तत्त्वानवभासेऽस्तिकारणम् ॥ ६३ ॥
मैवमस्यभ्रमस्यापिदुर्भणत्वान्मतेतव ॥ श्रोतव्यंतत्त्वयेदानींदुर्भणत्वंयथाभ्रमे ॥ ६४ ॥ खं
डोगौर्मुंडइत्यत्रैकस्याजातेर्यथात्वया ॥ व्यक्तिभ्यांस्वीकृतौभेदाभेदौप्रामाणिकौकिल ॥ ६५ ॥
तथैवाहंमनुष्योऽहंब्रह्मेत्येकस्यदेहिनः ॥ वपुषाब्रह्मणाभेदाभेदौप्रामाणिकौनकिम् ॥ ६६ ॥
तथैवाहंमनुष्योऽस्मीत्यत्रदेहात्मनोस्तव ॥ अभेदप्रत्ययोऽपिस्यात्प्रमारूपोनतुभ्रमः ॥ ६७ ॥
नाहंमनुष्योब्रह्मास्मीत्ययंशास्त्रीयनिश्चयः ॥ नेयंखंडागवीकिंतुमुंडेतीवोपपद्यते ॥ ६८ ॥

स्यातामित्याह । तथेति ॥ ६६ ॥ विमतंप्रमाणंभिन्नाभिन्नविषयत्वात् मुंडोगौरितिप्रत्ययवदित्याह । तथेति । उभयविषयस्यप्रमात्वसि
द्धावभेदविषयस्यप्रमात्वमेवेत्यर्थः ॥ ६७ ॥ विमतमप्रमाणंनिषिध्यमानविषयत्वादिदंरजतमितिप्रत्ययवदित्यनुमानविरोधमाशंक्यपरि
हरति । नाहमिति । तथाचनाहंमनुष्योब्रह्मास्मीतिशास्त्रीयनिश्चयादहंमनुष्यइतिप्रत्ययस्यभ्रमत्वमुच्यतेचेत्तर्हितत्रकिंनिषिध्यमानविषय
त्वमात्रंहेतुःकिंवाप्रतिपन्नोपाधौनिषिध्यमानविषयत्वं नाद्यः नायंखंडोगौःकिंतुमुंडोगौरितिप्रत्ययेऽपिखंडमुंडाभ्यांगोत्वस्याभेदवच्छरीरब्र

ह्मभ्यांजीवस्याभेदप्रत्ययस्यापिप्रामाण्योपपत्तेरित्याह । नेयमिति ॥ ६८ ॥ द्वितीयमाशंक्यपरिहरति । अथेति । इदमंशेप्रतिपन्नंतत्रै वनिषिध्य नेदंरजतमितितथात्मनिप्रतिपन्नंमनुष्यत्वंतत्रैवप्रतिषिध्यतेनाहंमनुष्यइत्यतस्तन्मनुष्योऽहमितिज्ञानंभ्रमःखंडोगौरितिवुतद्वैपरी त्यान्नभ्रमइत्यर्थः ॥ ६९ ॥ अयमपिहेतुस्तत्रव्यभिचारीत्याह । तर्हीति । गोत्वमेवोपाधिर्गोत्वोपाधिस्तस्मिन् ॥ ३७० ॥ ननुतत्रगोत्वो पाधौप्रतिपन्नस्यखंडस्यनप्रतिषेधःकिंतुमुंडइतिनव्यभिचारइत्याशंक्य परिहरति । मुंडायामिति । किंखंडस्यकेवलमुंडेनिषेधःकिंवागो त्वोपहिते नाद्य इत्याह । मुंडायामिति । इहभूतलेघटोनेत्यत्रान्यत्रभूतलसंसृष्टतयाप्रतिपन्नस्यस्मर्यमाणस्यान्यत्रनिषेधोदृष्टोनचखंडःक

अथोच्येतत्वयावादिन्शुक्तौरूप्यनिषेधवत् ॥ नाहंमनुष्यइत्येवंनिषेधात्तद्भ्रमोभवेत् ॥ ६९ ॥
तर्हिखंडागवीत्यस्यगोत्वोपाधौमतेतव ॥ नेयंखंडेतिभानेनभ्रमत्वंस्यान्नमानता ॥ ३७० ॥
मुंडायांतन्निषेधःस्याद्गोत्वोपाधौनहीतिचेत् ॥ मुंडायामप्रसक्तत्वात्खंडायाःक्वनिषिद्धता ॥७१॥
यत्खंडाव्यक्त्यवच्छिन्नंगोत्वंतस्यास्तदास्पदम् ॥ निषिध्यतेऽत्रनोखंडायेनस्याद्दूषणंत्विदम् ॥७२॥
किंतुमुंडात्मिकाव्यक्तिस्तदवच्छिन्नमास्तियत् ॥ गोत्वंतत्रनखंडेतिनिषेधइतिचेत्सम्मम् ॥ ७३ ॥

दाचिदपिमुंडेप्रसक्तोऽतःकथंतत्रतन्निषेधःस्यादित्यर्थः । द्वितीयेगोत्वोपहितमुंडेखंडस्यनिषेधसमयेविशेषणीभूतगोत्वेनिपेधःसमाश्रितःस्या त् यथोमितिप्रतिपन्नमिदंनोपहितशुक्तिव्यक्तौनिषिध्यतेतद्वत्तथाचप्रतिपन्नोपाधौनिषिध्यमानविषयेखंडायांनव्यभिचारइत्यपिद्रष्टव्यम् ॥ ॥ ७१ ॥ ननुखंडत्वसमवायियद्गोत्वंतत्तस्याःखंडव्यक्तेरास्पदंनचतत्रखंडव्यक्तिर्निषिध्यतेयेनेदमुक्तदूषणंभवेदपितुमुंडव्यक्तिसमवायियद्गो त्वंतत्रेत्याशंक्यप्रकृतेसमत्वान्नैवमित्याह । यदिति ॥ ७२ ॥ ७३ ॥ ॥ ॥ ॥ ॥

समतामेवोपपादयति । प्रकृतेऽपीति । तदाश्रयःमनुष्यत्वाश्रयः ॥ ७४ ॥ निषिध्यतइति । तथाचयथागोत्वोपहितखंडमुंडव्यक्तिद्वय ज्ञानंप्रमाणंतथामनुष्योऽहंब्रह्माहमस्मीतिज्ञानद्वयस्यापिप्रमाणत्वमतोमनुष्योऽहमितिप्रत्ययस्यभ्रमत्वमसि[illegible] । तथाचेत ॥ ७५ ॥ ॥७६ ॥ ७७ ॥ नन्वक्तानुमानेअनुच्छिन्नव्यवहारत्वमुपाधिरित्याशंक्यपरिहरति । तदिति । ततोऽनुच्छिन्नव्यवहारात्त[illegible]चनायंखंडोगौरिति निषेधप्रत्ययोत्तरकालमपिखंडेगोत्वव्यवहारोलक्ष्यतेनचतथाब्रह्मसाक्षात्कारादुत्तरंमनुष्यत्वव्यवहारइत्यर्थः । साक्षात्कारोत्तरकालमपिप्रार

प्रकृतेऽपिमनुष्यत्वावच्छिन्नात्मातदाश्रयः ॥ नचतत्रमनुष्यत्वमस्माभिस्तुनिषिध्यते ॥ ७४ ॥
निषिध्यतेतद्ब्रह्मत्वावच्छिन्नेखलुचात्मनि ॥ तथाचानुगतेनैवतेनगोत्वेनतेह्युभे ॥ ७५ ॥ व्य
क्तीचखंडामुंडाख्येसंबद्धेस्तोव्यवस्थिते ॥ खंडागौरितिविज्ञानंप्रमाणत्वेनसंमतम् ॥ ७६ ॥
यथातथामनुष्योऽहमित्येवंप्रत्ययस्यच ॥ प्रामाणिकत्वंदुर्वारंभेदाभेदमतेतव ॥ ७७ ॥ तद्व्य
वहारतःसिद्धंप्रामाण्यमितिचेत्तदा ॥ प्रकृतेऽपिप्रमाणत्वंसमानंशांकरेमते ॥ ७८ ॥ त्वन्मते
मोक्षकालेऽपिसर्वोपादानकेनच ॥ ब्रह्मणाऽभिन्नजीवस्यसर्वात्मकतयास्थितेः ॥ ७९ ॥ सर्वो
देहेंद्रियप्राणाद्यभिमानपुरःसरः ॥ व्यवहारोनच्छिद्येतततोभ्रांतित्वमस्यते ॥ ३८० ॥ ॥

ब्धकर्मानुरोधादहंमनुष्यइतिव्यवहारोपलब्धेःसाधनव्यापकतयाप्रामाण्यमपरिहार्यमेवेतिसमाधानाशयः ॥ ७८ ॥ ननुप्रारब्धकर्मसमा प्त्युत्तरंव्यवहारस्योच्छेदान्नसाधनव्यापकतेत्याशंक्यास्मन्मतेसर्वस्याज्ञानविजृंभितत्वात्तत्केनकंपश्येदितिमुक्तौसकलव्यवहारोच्छेदःसंभव ति तवमतेतुसकलस्यपरमार्थत्वादनुच्छेदइत्याशयेनाह । त्वन्मतइति ॥ ७९ ॥ अस्याहंमनुष्यइतिप्रत्ययस्य ॥ ३८० ॥ ॥

भिन्नाभिन्नविषयत्वासिद्धिंशंकते । नन्विति । देहात्मनोर्जातिव्यक्तितानास्तिद्वयोरपिद्रव्यत्वान्नापिकार्यकारणतादेहस्यभौतिकत्वात् ॥ ८१ ॥ नवेति । द्वयोर्द्रव्यत्वादेवनगुणगुणिभावःनापिविशिष्टस्वरूपतादंडवैशिष्ट्यस्यचैत्रतंत्रतावच्छरीरस्यात्मतंत्रत्वाभावातनचांशांशिताआत्मनोनिरवयवद्रव्यत्वात् ॥ ८२ ॥ तथाचोक्तानांपंचानांभेदाभेदप्रयोजकानामभावाद्देहात्मनोर्भेदाभेदासिद्ध्यादेहात्माभेदप्रत्ययोभ्रमएवेत्याह । एतेइति ॥ ८३ ॥ भेदाभेदंपरिहरति । मैवमिति । किमेतेषांमिलितानांप्रयोजकत्वंकिंवाप्रत्येकस्यप्रयोजकत्वमितिविक

ननुदेहात्मनोर्नास्तिजातिव्यक्तिकृतोऽपिच ॥ संबंधोनास्तिवाकार्यकारणत्वनिरूपकः ॥ ८१ ॥
नवागुणगुणित्वाख्योविशेषणविशेष्यकः ॥ नावयवावयवित्वरूपोऽप्यस्तिप्रयोजकः ॥ ८२ ॥
एतेपंचैवसंबंधाभेदाभेदप्रयोजकाः ॥ देहात्मनोर्नसंत्येवतदभेदोऽस्त्यतोभ्रमः ॥ ८३ ॥ मैवं
संभूयपंचानांकारणत्वंनयुज्यते ॥ कुत्रापिमेलनाभावाद्यदैकैकस्यहेतुता ॥ ८४ ॥ तदाकार
णबाहुल्येगौरवंस्वीकृतंत्वया ॥ देहदेहिस्वरूपःकिंसंबंधोनेष्यतेत्वया ॥ ८५ ॥ एतस्याकार
णत्वेतुतथान्येषामपीष्यताम् ॥ भेदाभेदौनचक्वापिसिद्ध्येयातांमतेतव ॥ ८६ ॥ अतिप्रसं
गभीत्याचेन्निर्बंधस्तवपंचसु ॥ तदादेहात्मनोःकार्यकारणत्वंभवत्विति ॥ ८७ ॥ ॥

ल्प्याद्यंप्रत्याह । संभूयेति । मेलनस्यक्वाप्यभावादित्याह । कुत्रापीति । द्वितीयेऽप्याह । यदेति ॥ ८४ ॥ ८५ ॥ विपक्षेदोषमाह । एतस्येति । एतस्यदेहदेहिसंबंधस्यप्रयोजकत्वेविनिगमनाभावादन्येषांजातिव्यक्तिभावादीनामप्यप्रयोजकत्वमिष्यतां तथाचतवसर्वसंकरवादिनोमतेभेदाभेदौक्वापिनसिद्ध्येयातामतोऽपसिद्धांतापातइत्यर्थः ॥ ८६ ॥ यदिजातिव्यक्तिभावादीनामन्यतमस्यप्रयोजकत्वमित्यभिनिवेशस्तर्हिसोऽप्यत्रसुसंपादइत्याह । अतिप्रसंगेति ॥ ८७ ॥ ॥ ॥ ॥ ॥

ननुसर्वस्यब्रह्मकार्यत्वात्कथंदेहस्यजीवकार्यतेत्याशंक्यजीवस्यतदभेदात्तत्कार्यस्यतत्कार्यत्वमपिसुवचमेवेत्याशयेनाह । कारणत्वमिति ॥ ८८ ॥ उपसंहरति । प्रत्ययानामिति ॥ ८९ ॥ अहंमनुष्यइत्यादिप्रत्ययानांयाथार्थ्यान्नभ्रांतित्वमित्युक्तं संप्रतिसमवायिकारणपर्यालोचनयापिभ्रांतित्वमाक्षिपति । मतेरिति । त्वदभिमताभ्रांतिःकिमंतःकरणपरिणामःकिंवात्मपरिणामइतिविकल्प्याद्यमनूद्यदूषयपि । अंतःकरणस्येति । अमृज्जस्यघटस्यमृदनाश्रयत्ववदंतःकरणपरिणामस्यभ्रांतिज्ञानस्याविद्यारूपस्यात्माश्रयत्वमनुपपन्नमित्यर्थः ॥ ३९० ॥

कारणत्वंब्रह्मगतंचेतनत्वेनसाम्यतः ॥ अपिजीवगतंवक्तुंशक्यतेकिंनयुक्तितः ॥ ८८ ॥ प्रत्ययानांसमस्तानांयथार्थत्वान्महामते ॥ मनुष्योऽहमितिज्ञानंभ्रांतिरूपंनतेमतम् ॥ ८९ ॥ मतेर्जीवस्यवाभ्रांतिर्नामांतःकरणस्यतु ॥ परिणामश्चेत्तदात्माश्रयाविद्याभवेन्नच ॥ ३९० ॥
नन्वंतःकरणस्यैवपरिणामश्चिदात्मनि ॥ आरोप्यतेतदावाच्यंसंसर्गःस्यात्कथंवद ॥ ९१ ॥
अन्यथाख्यातिवादाभिमानिनस्तेमतेमतः ॥ संसर्गाभावएवेहाधिष्ठानारोप्ययोःकिल ॥ ९२ ॥
आत्मनोऽविद्ययासाकंसंबंधोनभवेत्तव ॥ अथात्मपरिणामश्चेद्भ्रांतिरित्येवतेमतम् ॥ ९३ ॥

ननुजपाकुसुमलौहित्यस्ययथास्फटिकेस्फुरणंतथातथाभूताज्ञानस्यात्मनिप्रतिभासःकिंनस्यादितिशंकते । नन्विति । भेदाभेदमतेऽध्यास एवनसंभवतीत्युक्तंसंप्रतितमंगीकृत्योत्तरमाह । तदेति । भ्रांतेरात्मसंबंधःसन्नसन्वेत्याशयेनाह । वाच्यमिति ॥ ९१ ॥ नाद्यइत्याशयेनाह । अन्यथाख्यातीति । तस्यासत्त्वंत्वपरोक्षप्रथानुपपत्तिबाधितं वेदितव्यम् ॥ ९२ ॥ आत्मनइति । द्वितीयमुत्थाप्यनिराचष्टे । अथेति ॥ ९३ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

अपरिणामित्वान्निरवयवद्रव्यत्वेनपरिणामायोग्यत्वात् परिणामित्वमंगीकरोतिवादी । आत्मनइति ॥ ९४ ॥ अंगीकृत्यपरिहरति । सत्यमि ति । सुप्तोत्थितस्यनकिंचिदवेदिषमितिपरामर्शाज्ज्ञानमुन्नेयंतच्चनित्यंकरणविरमेऽपिभावात्तथाचैकज्ञानाश्रयस्यज्ञानांतराकारेणपरिणतिर्न संभवतीत्याशयेनाह । तथापीति । त्वन्मतेज्ञानस्यगुणत्वमुतद्रव्यत्वमितिविकल्प्याद्यमनूद्यदूषयति । भवतेति । तिष्ठतिस्थितेसति ॥९५॥ भ्रांतित्वेति । नचैतद्युक्तंएकस्मिन्द्रव्येऽवांतरजातीयगुणद्वयस्ययुगपत्समवायासंभवान्नहिपटेशौक्ल्यद्वयंयुगपत्समवैतीत्याह । नयुक्तमि

आत्मनोऽपरिणामित्वात्कथंभ्रांतिस्तदातव ॥ आत्मनोऽपरिणामित्वंसिद्धंनास्तिममेतिचेत् ॥९४॥
सत्यंतथापिभवतानित्यज्ञानगुणःखलु ॥ आत्मास्वीक्रियतेतर्हितस्मिन्ज्ञानेहितिष्ठति ॥ ९५॥
भ्रांतित्वाकाररूपोऽसौपरिणामोऽपिवाच्यताम् ॥ नयुक्तंतत्सजातीयविशेषात्मगुणद्वयम् ॥९६॥
एकस्मिन्युगपद्द्रव्येसमवायंभजेतनो ॥ पटेशौक्ल्यद्वयंनैवसमवेतंचदृश्यते ॥ ९७ ॥ जाग
रस्वप्नयोस्तस्मादनिर्वाच्यमनादिच ॥ ब्रह्मावरकमज्ञानंस्वीकर्तव्यंभवेत्तव ॥ ९८ ॥ नन्व
ज्ञानेनसंबंधेऽसंगत्वंकथमात्मनः ॥ मैवंमतंयथास्माभिरज्ञानंखल्वनादिच ॥ ९९ ॥ संबंधो
ऽपितथानादिःकल्पितःसंमतोऽस्तिनः ॥ अज्ञानकार्यवत्तस्यासंगत्वाभंजकत्वतः ॥ ४०० ॥

ति । एवंद्रव्याश्रितरूपरसाख्यगुणद्वयव्यावृत्त्यर्थमुक्तमवांतरेति कटकाधारहेम्नस्तदैवरुचकानाधारत्ववन्नित्यज्ञानाश्रयस्यज्ञानांतराश्रयत्वा नुपपत्तेर्द्रव्यत्वपक्षनिरासोवेदितव्यः ॥ ९६ ॥ ९७ ॥ तस्माद्दुराग्रहंविहायास्मन्मतमभ्युपेयमित्याह । जागरेति ॥ ९८ ॥ कूटस्थेऽज्ञा नसंबंधासंभवमाशंक्यपरिहरति । नन्विति ॥ ९९ ॥ ४०० ॥ ॥ ॥ ॥ ॥

नहीति । विमतंनस्वाध्यस्तसंस्पर्शिअधिष्ठानत्वादाकाशवदिति फलितमाह । अध्यस्तस्येति ॥ १ ॥ नाधिष्ठानस्येति । एवमनादिभूत मज्ञानंप्रसाध्यतस्यावरणविक्षेपशक्तिभ्यांजगदुपादनतांदर्शयति । तदेवमिति ॥ २ ॥ ततअनात्मनएवजडत्वात्तत्रावरणकृत्याभावात्तम नावृत्यात्मानमावृत्यानेकप्रकारंममाहमितिपरमसाहसरूपंविक्षेपमुत्पादयति । अनात्मानमिति ॥ ३ ॥ ततइति । ततोविक्षेपोत्पत्त्यनंतरं ।

नह्याकाशस्यनीलिम्नासंबंधेऽसंगताक्षतिः ॥ अध्यस्तस्यगुणेनापिदोषजातेनवाभवेत् ॥ १ ॥
नाधिष्ठानस्यसंस्पर्शोनीलिम्नाखस्यनोयथा ॥ तदेवंभावरूपंचाज्ञानंसिद्धंतदेवहि ॥ २ ॥ अ
नात्मानमनावृत्यावृत्यात्मानमनेकधा ॥ ममाहंचेतिविक्षेपंजनयत्यातिसाहसम् ॥ ३ ॥ त
तोऽध्यासंदृढीकृत्यसंसृतिंजनयत्यदः ॥ तदज्ञानंसमादायजगतोब्रह्मकारणम् ॥ ४ ॥ उच्य
तेनस्वतस्तस्मिन्कारणत्वंहिसंभवेत् ॥ एवंचसतिसर्वेषांवेदांतानांसमन्वयः ॥ ५ ॥ ब्रह्मात्म
न्यद्वयेसिद्ध्येन्नान्यथाकार्यकारणात् ॥ निर्विकारंपरंब्रह्मवस्तुतोऽस्तितदेवहि ॥ ६ ॥ स्वाश्र
यांचस्वविषयामविद्यांभावरूपिणीम् ॥ समाश्रित्यजगज्जीवभावंयातिप्रमादतः ॥ ७ ॥ तदे
वतत्त्वविज्ञानमाश्रित्यात्मानमद्वयम् ॥ साक्षात्कृत्यविमुक्तंचभवत्येवश्रुतेरयम् ॥ ८ ॥

तथाभूताज्ञानमादायैवब्रह्मणोजगत्कारणतानस्वतइत्याह । तदिति ॥ ४ ॥ उच्यतइति । एवमेवकार्यकारणभावाभ्युपगमेसर्ववेदांतसम न्वयःसिद्ध्यतिनान्यथातत्परिग्रहइत्याह । एवंचेति ॥ ५ ॥ ब्रह्मात्मनीति । तथाचश्रुत्युक्तकूटस्थत्वमपितस्यनिष्प्रत्यूहमित्याह । निर्विकार मिति । इंद्रोमायाभिःपुरुरूपईयतेरूपंरूपंप्रतिरूपोबभूवेत्यादिश्रुतिमनुसृत्यब्रह्मणएवस्वाज्ञानाद्बद्धतास्वज्ञानाद्विमुक्तताचेत्याह । तदेवही त्यादिना ॥ ६ ॥ ७ ॥ ८ ॥ ॥ ॥ ॥ ॥ ॥ ॥

सर्वस्या अपि श्रुतेरयमेव तात्पर्यार्थः भवद्भिरयं कथं ज्ञात इति चेद्व्याससूत्रेभ्य इत्याह । भावार्थ इति । ननु व्याससूत्रव्याख्यानकर्तृभिरस्माभिः कुतो न बुद्ध इत्याशंक्य तत्र प्रथितश्रुतियुक्त्यपरिज्ञानादित्याशयेनाह । तथेति ॥ ९ ॥ ४१० ॥ ननु विकारिण्या असत्स्वरूपायाः प्रकृतेरविकारिणि निरस्तसंगे ज्ञानैकरसे आत्मन्यवस्थानमनुपपन्नं विरोधादतोऽतःकरणविशिष्टमाश्रित्यैव साकरणमिति शंकितं स्मारयति । नन्विति ॥ ११ ॥ परिहरति । मैवमिति । नन्वहमज्ञ इति विशिष्टाश्रिताज्ञानानुभव एव मानमित्याशंक्य परिहरति । अहमिति ॥ १२ ॥ अनुभ



भावार्थो भगवद्व्यासस्तथैव समसूत्रयत् ॥ तथा शारीरके भाष्ये निर्णीतं श्रुतियुक्तिभिः ॥ ९ ॥
स्वीकर्तव्यं त्वयाप्यद्य स्वबुद्ध्यालोच्य युक्तिभिः ॥ मतमद्वैतमेवेदं सर्वर्षीणां च संमतम् ॥ ४१० ॥
नन्वात्मन्यत्र कूटस्थे नाविद्याध्वांतरूपिणी ॥ युक्ता विशिष्टगा तस्मादभ्युपेया मनीषिभिः ॥ ११ ॥
मैवं विशिष्टगत्वेऽस्या मानं नैवेह दृश्यते ॥ अहमज्ञ इति ज्ञानं मानं चेत्संमतं तदा ॥ १२ ॥ अनु
भव्यहमित्यस्मादनुभूतेस्तथैव च ॥ विशिष्टगत्वसंसिद्ध्येत्त्वन्मतेऽतिप्रसंगता ॥ १३ ॥ ननु
चिद्रूपबोधस्य जडांतःकरणे कथम् ॥ निष्ठता स्यादतो नेष्टापत्तिर्वाच्या त्वया बुध ॥ १४ ॥ न
न्वयो दहतीत्यत्र यथायस्युपचारतः ॥ दाहकत्वं तथात्रापि जडे ज्ञानस्य संस्थितिः ॥ १५ ॥

वीति । एवं संमतं चेत्तदा तथैवानुभव्यहमित्यस्माज्ज्ञानान्मानादनुभूतेरपि विशिष्टगत्वसंसिद्ध्येत्तथा च त्वन्मतेऽतिप्रसंगतेत्यर्थः ॥ १३ ॥ ननु तस्यास्तन्निष्ठताया इष्टत्वान्नास्त्यतिप्रसंग इत्याशंक्याह । नन्विति ॥ १४ ॥ ननु यथा दाहकेऽप्ययसि दाहकवह्नितादात्म्यादयो दहतीति दाहकत्वमुपचर्यते तथानुभवरूपात्मतादात्म्यादप्यंतःकरणेऽनुभव्यहमित्यनुभूत्याश्रयत्वमुपचर्यत इति भास्करः शंकते । नन्विति ॥ १५ ॥

एवंचेत्तर्हिप्रकृतेऽपिचिन्मात्राश्रयाप्यविद्यांतःकरणस्याविद्याश्रयचिन्मात्रतादात्म्यापन्नत्वादहमज्ञइतिज्ञानेनमानेनोपचारतोविशिष्टगता स्त्वित्याचार्यःपरिहरति । मैवमिति ॥ १६ ॥ ननुतत्राजडीभूतानुभूतेर्जडांतःकरणस्थत्वानुपपत्तिरूपबाधकसद्भावादस्त्वनुभूत्याश्रय त्वोपचारःप्रकृतेतथाभूतबाधकानुपलब्धेर्नसयुज्यतेइतिभास्करःशंकते । नन्विति ॥ १७ ॥ अविद्यायाःस्वकार्यांतःकरणनिष्ठत्वोपपत्ति रूपबाधकस्यप्रकृतेऽपिदुर्निवार्यत्वान्मैवमित्याशयेनाचार्यआह । मैवमिति । अविद्यायाअंतःकरणाश्रितत्वेदोषांतरमाह । यदीति ॥१८॥

मैवमत्रापिचिन्मात्राश्रयाविद्योपचारतः ॥ अहमज्ञइतिज्ञानेनविशिष्टगताभवेत् ॥ १६ ॥ न नुबाधकसद्भावाज्जडेतत्रोपचारता ॥ अस्त्वेवंप्रकृतेनैवपश्यामोबाधकंवयम् ॥ १७ ॥ मैवम त्रापिबाधस्यसत्वंकेननिवार्यते ॥ यद्यविद्याविशिष्टेस्यादज्ञोऽहमितिभानतः ॥ १८ ॥ सुप्तौ लयंगतेचित्तेनैवाज्ञानंभवेत्तदा ॥ नाज्ञासिषमितिज्ञानात्तत्रसुप्तौतदिष्यते ॥ १९ ॥ प्रतिबंध कशून्यत्वात्सुप्तावैक्यात्परात्मनोः ॥ ऐक्यत्वश्रुतिवाक्यान्नचिद्गतातत्रसेतिचेत् ॥४२० ॥ स तिसंपद्यतत्रेतिवाक्यात्संप्रतिभातिसा ॥ अन्यथातदभावेस्यात्संसारस्यलयःस्वयम् ॥ २१ ॥

सुप्ताविति । इष्टापत्तिमाशंक्याह । नेति । तदज्ञानम् ॥ १९ ॥ सतासोम्यतदासंपन्नोभवीतिब्रह्मात्मैकत्वप्रतिपादकश्रुतिवाक्यप्रमा णात्सुषुप्तौतयोरैक्येप्रतिबंधकभूतायाअविद्यायाअभावस्यनिर्धारणात्तत्रसाचिद्गतानेतिभास्करःशंकते । प्रतिबंधकेति ॥ ४२० ॥ सतिसं पद्यनविदुरितिवाक्यात्सुषुप्तावज्ञानस्थितिरवश्यमभ्युपेयान्यथासंसारलयापत्त्यापुनरनुत्थानप्रसंगादित्याचार्यःपरिहरति । सतीति ॥ २१ ॥

एवमज्ञानस्यविशिष्टाश्रितत्वंनिरस्यवैशिष्ट्यमपिविकल्प्यनिराह । वैशिष्ट्यमिति ॥ २२ ॥ आद्यइति । एवंतन्मतेकुत्सितत्वमुद्भाव्यत
थाभूतमपिस्वमतंत्युक्तुंसलज्जंतमालक्ष्याह । कुमतमिति ॥ २३ ॥ अस्मन्मतेतुनकाप्यनुपपत्तिरित्याशयेनाह । एकमिति ॥ २४ ॥
नन्वेवंभवदुक्तरीत्यैक्यमेवयदिप्रमाणंपरमार्थतः सद्भवेद्भेदश्चासन्नेवभवेत्तदासमस्तव्यवहारलोपप्रसक्त्यातवमतस्यावैदिकत्वप्रसंगइतिभास्क

वैशिष्ट्यंतेमतेनित्यमनित्यंवानचांतिमः ॥ स्वतएवनिवर्तेतकिंज्ञानेनसकर्मणा ॥ २२ ॥ आ
द्येतेमुक्त्यभावःस्याद्वैशिष्ट्यस्याविनाशतः ॥ कुमतंस्वीकृतंत्यक्त्वाकिंभवेत्तवदूषणम् ॥ २३ ॥
एकमेवाद्वितीयंसद्ब्रह्मतज्ज्ञानतोऽखिलम् ॥ दृश्यंनिवर्ततेस्वात्माद्वैतमेवावशिष्यते ॥ २४ ॥
नन्वेवंसतिवस्त्वैक्यंसद्भवेद्यदिमानतः ॥ व्यवहारस्तदासर्वोवैदिकोलौकिकस्तथा ॥ २५ ॥ उ
च्छिद्येततथाब्रह्मगोचराःश्रवणादयः ॥ उच्छिद्येरन्प्रसज्येतावैदिकत्वंमतस्यते ॥ २६ ॥ मै
वंभोयदिसत्यःस्याद्व्यवहारस्तदात्वयम् ॥ आक्षेपःस्याद्यतोनैवंश्रृणुयुक्त्यागमोक्तया ॥ २७ ॥
यस्याज्ञानंभ्रमस्तस्यभ्रांतोद्वैतंप्रपश्यति ॥ यथानिद्रावशान्मूढोभ्रांतःस्वप्नाननेकधा ॥ २८ ॥

रःशंकते । नन्विति ॥ २५ ॥ २६ ॥ भेदादेःसत्यत्वेतन्निवृत्त्यसंभवाद्रुपायानर्थक्यात्तद्बोधकवेदादिवैयर्थ्यंस्यात्परंतुतथाप्रतिपादनम
स्मन्मतेयदिभवेत्तदोक्तदोषोऽस्मन्मतेप्रसज्येतनचतथास्तिप्रत्युततस्यैवतवायंदोषइत्याशयेनाचार्यआह । मैवमिति ॥ २७ ॥ यावद्भ्रां
तिद्वैतस्यविद्यमानत्वात्सर्वव्यवहारोपपत्तिः तन्नाशेतदुच्छेदइष्टापत्तिरित्याशयेनप्रतिज्ञातमर्थंविवृणोति । यस्येति । तत्रानुरूपंदृष्टांतमा
ह । यथेति ॥ २८ ॥ . ॥ ॥ ॥ ॥ ॥ ॥ ॥

॥ २९ ॥ ४३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ वैदिकइति । दृष्टांतोक्तमर्थंदार्ष्टांतिकेयोजयति । तथेति । जाग्रदात्मकेस्वप्ने ॥३५॥

पश्यत्येवाखिलंतत्रलौकिकंवैदिकंजनः ॥ व्यवहारंतथाब्रह्मगोचरान्छ्रवणादिकान् ॥ २९ ॥
ब्राह्मणस्यकुमारोऽस्मिकर्ताहंचास्यकर्मणः ॥ इदंकर्मफलंमेस्यादारब्धमिदमद्यमे ॥ ४३० ॥
इदंकृत्वाकरिष्येऽदएतेममसुतादयः ॥ लौकिकंकर्मसंत्यज्यकरिष्येवैदिकंसदा ॥ ३१ ॥ नि
ष्कामोनिर्मलोभूत्वायक्ष्येऽहंपरमेश्वरम् ॥ वैराग्यंममसंजातंकरिष्येश्रवणादिकान् ॥ ३२ ॥ य
थाशुकादयोमुक्तास्तथैवाहंविमुक्तिताम् ॥ संप्राप्तःस्यांकदाघोरात्संसारादितिनिश्चयान् ॥३३॥
कल्पयन्नेवसंबुद्धस्तदानिद्राक्षयंगता ॥ व्यवहर्तानदेहोऽस्तिव्यवहारोनलौकिकः ॥ ३४ ॥ वैदि
कःश्रवणादिर्वानैवान्याबहुकल्पनाः ॥ तथैवात्रविचार्यंतेजाग्रत्स्वप्नेऽप्यनेकशः ॥ ३५ ॥ याव
दज्ञानमस्तीतितावत्तत्कार्यकृज्जनः ॥ नष्टेऽज्ञानेनतत्कार्यंवैदिकंलौकिकंजगत् ॥ ३६ ॥ विका
रोनामधेयंचनाममात्राद्दतेनहि ॥ तत्त्वमस्ययमात्माहंब्रह्मास्मीत्येवमादिकम् ॥ ३७ ॥ ब्र
ह्मात्मैक्यंस्फुटंब्रूतेवाक्यजालमनेकधा ॥ सर्वंचखल्विदंब्रह्मनेहनानास्तिकिंचन ॥ ३८ ॥ अ
तोऽन्यदार्तमात्मैवसत्यमित्यादिसर्वथा ॥ वाक्यजालंविलाप्येदंजगद्ब्रह्माद्वयंब्रुवत् ॥ ३९ ॥
ज्ञापयत्यद्वयंवस्तुचिदानंदात्मकंस्वतः ॥ नित्यमुक्तस्वभावंतन्निश्चितंश्रुतियुक्तिभिः ॥ ४४० ॥

॥ ३६ ॥ विकारइति । ऐक्यादिप्रतिपादकश्रुतिवाक्यजातंपठति । तत्त्वमिति ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४४० ॥ ॥ ॥

फलितमुपसंहरति । अद्वैतमिति ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ भट्टपादप्रभाकरोदयनाचार्या



अद्वैतंब्रह्मसंसिद्धंभेदाभेदविलक्षणम् ॥ आविद्यकंजगत्सिद्धंप्रतीतिसमकालिकम् ॥ ४१ ॥ अतोब्रह्माद्वयंसिद्धंश्रुतियुक्तिभिरादरात् ॥ स्वीकर्तव्यंत्वयेदानींमोक्षार्थंसुखदंमतम् ॥ ४२ ॥ भेदाभेदमतंत्यक्त्वाकुमतंवेदनिंदितम् ॥ अथवायत्रसंदेहोनिःशंकंतत्रपृच्छमाम् ॥ ४३ ॥ एवंयुक्तिशतैर्भट्टभास्करंमुद्रिताननम् ॥ कृत्वाश्रीशंकराचार्योजयतिस्मसयोगिराट् ॥ ४४ ॥ जितःसोऽपिसशिष्यश्चदंडवत्प्रणिपत्यतम् ॥ हृदिशल्यंसमारोप्यपराभूतोहिभास्करः ॥ ४५ ॥ गृहंप्रविश्यचिंतार्तोबभूवस्वमतेऽफले ॥ सशिष्यस्तन्मतंश्रुत्वाश्रद्धांनैकत्रसंदधे ॥ ४६ ॥ ततःश्रीशंकराचार्यःसंविजित्याथभास्करम् ॥ स्वभाष्याणिप्रयत्नेनलोकेसंचारयन्स्थितः ॥ ४७ ॥ तत्रागत्यार्हतःकश्चिद्विवादंशंकरेणवै ॥ कृतवांस्तंविजित्यापिभग्नमानंचकारह ॥ ४८ ॥ दिगंबरेषुभग्नेषुनैजभाष्याणिभासयन् ॥ वितत्यनैमिशेतानिसदेशान्पारदान्ययौ ॥ ४९ ॥ तत्तद्देशस्थितान्प्राज्ञाञ्जित्वास्ववशमानयत् ॥ श्रुतिभिर्युक्तिभिर्भट्टपादमुख्यपराजयात् ॥ ५० ॥ ऊढविद्यामदंहर्षमिश्राख्यंजितवानसौ ॥ कामरूपांस्ततोगत्वाशाक्तभाष्यकृतंकविम् ॥ ५१ ॥ जित्वाऽभिनवगुप्ताख्यंभग्नमानमचीकरत् ॥ जितोऽभिनवगुप्ताख्योमनस्येवमचिंतयत् ॥ ५२ ॥



दीनांपराजयादूढविद्यामदम् ॥ कामरूपान्देशविशेषान् ॥ ५० ॥ ५१ ॥ ५२ ॥ ॥ ॥ ॥

॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ एतेषांमतानांनिराकरणेनसर्वस्यापिमहाननुपकारोजातइतिव्यतिरेकमुखेनाह ।

नानेनसदृशोलोकेसर्वज्ञःशास्त्रमर्मभित् ॥ नायंविजेतुंमेशक्यःकथंस्यान्मद्वशंवदः ॥ ५३ ॥
अतोऽमुंनाशयाम्यद्यशत्रुंदैवतकृत्यया ॥ इतिगूढंविचिंत्येत्थंसहशिष्यैःसुदुःखितः ॥ ५४ ॥
स्वकृतंशाक्तभाष्यंससंत्यज्यबहिरेवच ॥ शिष्यभावंसमाश्रित्यप्रविवेशगृहंस्वकम् ॥ ५५ ॥
भाष्यकारोऽपितंजित्वोदीच्यानथसकोशलान् ॥ विजित्यांगादिदेशेषुकीर्तिमास्तीर्यपावनीम्
॥५६॥ गौडाञ्जगामतत्रापिमीमांसाशास्त्रपारगम् ॥ मुरारिमिश्रमेवादौयंख्यातंजितवान्मुनिः
॥ ५७ ॥ न्यायशास्त्रविदांश्रेष्ठमुदयनाख्यमादरात् ॥ विजित्यशंकरोवेदसिद्धांतैर्वशमानयत्
॥ ५८ ॥ मिश्रंचधर्मगुप्ताख्यंनानाशास्त्रविशारदम् ॥ विजित्यपावनींकीर्तिमवापासौहिशंकरः
॥ ५९ ॥ यदिजगतिमहेशोवेदसिद्धांतमार्गंविशदयितुमुदारंशंकराचार्यनाम्ना ॥ निरवधिसुख
हेतुंनावतारंहिकुर्यात्सकलमिहविनश्येत्तर्हिपाखंडमार्गैः ॥ ४६० ॥ श्रुतिविमुखमघाढ्यंसर्वका
पालिकाग्र्यंहतमपिनिजकृत्यैर्भैरवद्वारतोऽहन् ॥ पशुपतिमतनिष्ठंनीलकंठंविजित्यश्रुतिवरमत
सिद्ध्यैसंबभौभाष्यकृत्कौ ॥ ६१ ॥ ॥ ॥ ॥ ॥

यदीति । सकलमपिजगत्पाखंडमार्गैर्विनश्येत्पुरुषार्थाद्भ्रष्टंस्यात् ॥ ४६० ॥ विस्तरोक्तमर्थंसंक्षिप्याह । श्रुतीति । निजकृत्यैःस्वकर्मभिः
कौभूमौ ॥ ६१ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

अशुखेभेदाभेदमतेनिविष्टंमिथ्याग्रहवंतंस्वीयंमतंमोक्षदंवेदांतवचनैःसिद्धंदर्शयन् मिथ्याभूतातिकठिनतर्कजालनिरतंभट्टभास्करंसत्तर्कवज्र युक्तैर्वेदांतैःसआचार्योविजित्यशंसुखंकरोतीतिशंकरइतिख्यातिंभूमौप्राप्तइत्यर्थः ॥ ६२ ॥ किंच बुद्धइति । युद्धायसमुद्यतोबुद्धःकि लपुरःस्थित्वाक्षणाद्विद्रुतःकणादस्तुझटितिकोणेविलयंगतःगौतमस्तुतमःस्तोमेनावृतःक्वचिद्गाढांधकारेमग्नःअसौकपिलस्तुभग्नःसंस्ततोऽप

भेदाभेदमतेनिविष्टमसुखेमिथ्याग्रहंभास्करं स्वीयंशांतिदमागमांतवचनैःसिद्धंमतंदर्शयन् ॥
मिथ्याकर्कशतर्कजालनिरतंसत्तर्कवज्रान्वितैर्वेदांतैःसविजित्यशंकरइतिख्यातिंजगत्यांगतः॥
॥ ६२ ॥ बुद्धोयुद्धसमुद्यतःकिलपुरास्थित्वाक्षणाद्विद्रुतःकोणेद्राक्कणभुङ्न्यलीयततमःस्तोमा
वृतोगौतमः ॥ भग्नोऽसौकपिलोऽपलायतततःपातंजलाश्चांजलिंचक्रुस्तस्ययतीशितुश्चतुरता
केनोपमीयेतसा ॥ ६३ ॥ इहजगतिमतंयच्छांकरंशंकरंतत्कविभिरपिमहद्भिर्ग्राह्यमेवाशुसि
द्ध्यै ॥ कुमतमपरमांध्यंदूरतःसंविहायप्रभवभृतिभयाढ्यंब्रह्मजिज्ञासुभिश्च ॥ ४६४ ॥ इति
शांकरदिग्विजयसारेश्रीमन्मुकुंदपदारविंदमकरंदाभिलाषिसदानंदाख्यविदुषाविरचितेकापा
लिकविध्वंसनपुरःसरनीलकंठभास्करप्रभृतिविजयोनामपंचदशःसर्गः ॥ १५ ॥ ॥

लायत ततस्तस्मात्कारणादितिवा पातंजलाश्चांजलिंचक्रुस्तस्ययतिपतेःसाचतुरताकेनोपमीयेत ॥ ६३ ॥ कथातात्पर्यमाह । इहेति ॥ ॥ ४६४ ॥ ॥ इतिश्रीमत्परमहंसपरिव्राजकाचार्यवालगोपालतीर्थश्रीपादशिष्यदत्तवंशावतंसरामकुमारसुतधनपतिसूरिकृतःश्रीमच्छं कराचार्यविजयडिंडिमौपंचदशःसर्गः ॥ १५ ॥ ॥ ॥ ॥ ॥ ॥

श्रीगणेशायनमः ॥ एवंदिग्विजयकौतुकंप्रतिपाद्यशारदापीठवासादिसपरिकरंनिरूपयितुमुपक्रमते । अथेति ॥ १ ॥ २ ॥ अस्यशंकरस्य ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ कर्मकृतोधातुकृतश्च ॥ ७ ॥ सचप्रयत्नःकुतःकरणीयःकर्मक्षयेस्वयमेवनश्यतीत्यर्थः । पतेदिति ॥ ८ ॥

अथश्रीशंकराचार्यःशिष्यानध्यात्मशालिनः ॥ आलोक्यकृतकृत्यांस्तान्मुदंलेभेऽखिलान्यतीन् ॥ १ ॥ यदाऽभिनवगुप्ताख्योविजितःशंकरेणवै ॥ सततोऽभिचचाराथमूढबुद्धिर्यतिंप्रति ॥ २ ॥ अभिचारेणतेनाशुशंकरस्ययतीशितुः ॥ अचिकित्स्यतमोरोगोऽजनिष्ठास्यभगंदरः ॥ ३ ॥ परिचर्यांतदाभिक्षोःशंकरस्यगिरिर्यतिः ॥ तोटकग्रंथकर्ताश्रीगुरोःसम्यक्चकारह ॥ ४ ॥ सरुजंगुरुमालोक्यशिष्याःसर्वेऽप्यजिज्ञपन् ॥ स्वामिन्नोपेक्षणीयोऽयंरोगःशत्रुवदार्तिकृत् ॥ ५ ॥ अध्यासःश्रीमतांनास्तियद्यपीहकलेवरे ॥ तथापिनोविनेयानांसुखार्थंभेषजंकुरु ॥ ६ ॥ शिष्यविज्ञप्तिमाकर्ण्यगुरुराहवचोऽमृतम् ॥ कर्मधातुकृतोव्याधिर्द्विधाभोगेनचाग्रिमः ॥ ७ ॥ नश्येदंत्यःप्रयत्नेनसचमेनैवरोचते ॥ पतेत्कर्मक्षयाद्देहोनान्यथायंपतिष्यति ॥ ८ ॥ पतत्वद्यैववाकल्पेनमेवृद्धिर्नवाक्षतिः ॥ क्वाहंनित्यचिदानंदःक्वेदंतुच्छंकलेवरम् ॥ ९ ॥ नार्थोऽनेनममाप्यद्यसदासंगाद्व्ययात्मनः ॥ भवद्भिरपिनैवात्राग्रहःकार्यःशरीरके ॥ १० ॥ एवंश्रुत्वावचोलोकशिक्षणार्थंगुरोरिदम् ॥ शिष्याऊचुःस्वयंभक्त्याशंकरंदेशिकंपरम् ॥ ११ ॥ ॥ ॥

कल्पेब्रह्मदिनसमाप्तौ ॥ ९ ॥ १० ॥ लोकशिक्षणप्रयोजनकंवचः ॥ ११ ॥ ॥ ॥ ॥ ॥

सत्यंगुरोनतेलोभःशरीरपरिरक्षणे ॥ किंतुनोजीवनंश्रीमद्देहस्तस्माद्यतामहे ॥ १२ ॥ हठादे
वततोऽनुज्ञामादायाचार्यतोवराः ॥ भिषग्वरान्समानेतुंराज्ञांगेहेषुतेगताः ॥ १३ ॥ तेभ्योभि
षग्वरान्नीत्वागुरोरंतिकमाययुः ॥ तेऽतिदक्षाभिषक्श्रेष्ठाश्चक्रिरेऽनेकसत्क्रियाः ॥ १४ ॥ नश
शामयदाव्याधिर्गतास्तूष्णींभिषग्वराः ॥ अपरेऽपितथागत्यगतावैद्यानरुग्गता ॥ १५ ॥ सो
ढ्वापीत्थंमुनिर्दुःखंविजहौममतांतनौ ॥ शिष्याणामतिनिर्बंधंदृष्ट्वायोगीश्वरस्तदा ॥ १६ ॥ म
हादेवंससस्मारतन्नियुक्तौभिषग्वरौ ॥ अश्विनौविप्ररूपेणागतौयत्रस्मशंकरः ॥ १७ ॥ दृष्ट्वा
श्रीशंकराचार्यंवचोयुक्त्यातमूचतुः ॥ रोगोऽयमचिकित्स्योऽस्तिपरकृत्याकृतोयतः ॥ १८ ॥ इ
त्युक्त्वाजग्मतुर्देवौयथेष्टंतौत्रिविष्टपम् ॥ ततःकृत्यांसमाकर्ण्याजानसिद्धःसनंदनः ॥ १९ ॥ वा
र्यमाणोऽपिगुरुणासिद्धमंत्रंजजापह ॥ तत्क्षणेशंकरंत्यक्त्वारोगोऽसौकृत्ययासह ॥ २० ॥ प्रति
यातोऽमुनैवासौहतोगुप्तोममारह ॥ बुद्धिपूर्वकृतोदोषोनोमहत्सुसुखायच ॥ २१ ॥ ततःस्वस्थो
बभूवासौभाष्यकारोयतीश्वरः ॥ परब्रह्मात्मनात्मानंध्यायन्नेकाग्रमास्थितः ॥ २२ ॥ एक
दाजाह्नवीतीरेध्यायन्ब्रह्महृदिस्थितम् ॥ गौडपादाभिधंव्योम्नोऽवतरंतंददर्शसः ॥ २३ ॥

॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ॥ ॥

प्रत्युत्थायननामाथगुरूणांपरमंगुरुम् ॥ शंकरःप्रांजलिर्भूत्वागुरोरग्रेव्यवस्थितः ॥ २४ ॥ वि
द्याविनयसंपन्नंशंकरंलोकशंकरम् ॥ दृष्ट्वाश्रीगौडपादस्तंप्राहेत्थंकुशलंवचः ॥ २५ ॥ कुशलं
वर्ततेभिक्षोसशिष्येत्वयिमानद ॥ कच्चिद्गोविंदनाथात्त्वंसद्विद्यांप्राप्तवानसि ॥ २६॥ कच्चित्सं
सारसंतापादुद्वेगंप्राप्यनिर्गतः ॥ कच्चिद्वैराग्यमाश्रित्यगुरवोऽभिगतास्त्वया ॥ २७॥ कच्चित्ते
षांमनोवाचाकायकर्मभिरादरात् ॥ शुश्रूषासाधिताकच्चित्तेषांमार्गोह्यनुष्ठितः ॥ २८ ॥ असा
रेदृश्यवर्गेऽस्मिन्सारःकच्चिद्विचारितः ॥ कच्चित्सारंचिदानंदंवत्सवेद्यंनुवेत्सिहि ॥ २९ ॥ अ
खंडात्मनिसन्निष्ठांकच्चित्त्वंलब्धवानसि ॥ कच्चित्तेशत्रवःकामक्रोधाद्यादुःखदाजिताः ॥ ३० ॥
सुखदाःसद्गुणाःकच्चित्प्राप्ताःशमदमादयः॥कच्चित्संसाधितोयोगःकच्चिच्चित्तंस्थिरीकृतम्॥३१॥
वैराग्यालंकृताःकच्चिद्वेदांतपरिनिष्ठिताः ॥ शांताःश्रद्धालवोदांताःशिष्यास्त्वांपर्युपासते ॥३२॥
इत्थमद्वैतनिष्ठेनसर्वलोकहितैषिणा ॥ प्रेम्णादयार्द्रचित्तेनपृष्टःश्रीशंकरोयतिः ॥ ३३ ॥ श्रद्धा
भक्तीपुरोधायव्याजहारकृतांजलिः ॥ भगवन्करुणासिंधोसद्गुरोब्रह्मदेशिक ॥ ३४ ॥ यद्यत्पृ
ष्टंभवद्भिर्मेसर्वंतत्संभविष्यति ॥ कृपासिंधून्गुरून्प्राप्यजंतोःकिंन्वत्रदुर्लभम् ॥ ३५ ॥ मूको
वाग्मीभवेन्मंदधीर्भवेत्पंडिताग्रणीः ॥ कामुकोवीततृष्णःस्यादाचार्यांगावलोकनात् ॥ ३६ ॥

॥ ३७ ॥ ३८ ॥ जातमात्रंव्रजंतमिति । तथाचोक्तंश्रीमद्भागवते । यंप्रव्रजंतमनुपेतमपेतकृत्यंद्वैपायनोविरहकातरआजुहाव । पुत्रेति



गुरूणांमहिमानंकोऽखिलंवक्तुंक्षमोभवेत् ॥ अतःप्रणामोभवतांपादयोरस्तुसर्वदा ॥ ३७ ॥ अहोभाग्यंमदीयंयच्छ्रीगुरोस्तवदर्शनम् ॥ यस्यविद्योपदेष्टास्तिसाक्षाद्वैयासकिःस्वयम् ॥३८॥ जातमात्रंव्रजंतंयंप्रेम्णापुत्रेतिचाह्वयन् ॥ पृष्ठतोऽनुप्रपेदेश्रीपाराशर्योऽनुशोचयन् ॥ ३९ ॥ य आहूतोजगत्सर्वंस्वात्मरूपंप्रदर्शयन् ॥ प्रत्याक्रोशंददौवृक्षैःशुकोव्यासात्मजोमुनिः ॥ ४० ॥ इत्याकर्ण्याब्रवीच्छ्रीमद्गौडपादोमहामुनिः ॥ श्रुतंमयागुणौघस्यसौंदर्यंतवनिर्मलम् ॥ ४१ ॥ द्रष्टुंत्वामहमायातःसमीपेतवशंकर ॥ भाष्यमुख्यानिबंधास्तेश्रुतागोविंदवक्रतः ॥ ४२ ॥ मांडूक्यवार्तिकंपूर्वंमयाकारियदद्भुतम् ॥ तस्मिंश्चतावकंभाष्यंश्रुत्वाश्रोतुंसमागतः ॥ ४३ ॥ एवंश्रुत्वावचस्तस्यगौडपादस्यसद्गुरोः ॥ शंकरोहर्षमापन्नोभाष्यंमांडूक्यवार्तिके ॥ ४४ ॥ कृतंतच्छीघ्रमादायगुरवेश्रावयद्यतिः ॥ तथैवब्रह्मसूत्रेषुगीतासूपनिषत्सुच ॥ ४५ ॥ तत्तद्भाष्यंकृतंसम्यक्श्रावयित्वाथशंकरः ॥ पुनःसंश्रावयद्भाष्यंकृतंमांडूक्यवार्तिके ॥ ४६ ॥ श्रुत्वाभाष्याणिमांडूक्यभाष्यंश्रुत्वाविशेषतः ॥ श्रीगुरुर्हर्षमापन्नोभाष्यकारंवचोऽब्रवीत् ॥ ४७ ॥

तन्मयतयातरवोऽभिनेदुस्तंसर्वभूतहृदयंगुरुमानतोऽस्मीति ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ भाष्यंजातमितिश्रुत्वा ॥ ४३ ॥ ४४ ॥ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

मत्कारिकाशयावेदिभाष्यंश्रुत्वाहमद्भुतम् ॥ हर्षसीमामनुप्राप्तोवरमाशुददामिते ॥ ४८ ॥
एवंश्रुत्वागुरोर्वाक्यंभाष्यकारोऽब्रवीदिदम् ॥ अद्वैताचार्यवर्यंत्वामद्राक्षंपुरुषोत्तमम् ॥ ४९ ॥
अतःपरोवरःकोऽस्तियद्देयोवरोमम ॥ तदापरावरेशुद्धेस्वात्मन्येवास्तुमेमनः ॥ ५० ॥ तथा
स्तुगौडपादोऽपितमुक्त्वांतर्द्धिमागतः ॥ ततःश्रीशंकरस्वामीशिष्येभ्योऽश्रावयत्कृतम् ॥ ५१ ॥
गुरुणासहसंवादंव्यतीतातेनशर्वरी ॥ गंगायांप्रातरुत्थायसशिष्यःस्नानमाचरत् ॥ ५२ ॥ अ
थैकांतेपरब्रह्मनिदिध्यासनलालसः ॥ गंगातीरेविवेशासौभाष्यकारोमहामनाः ॥ ५३ ॥ अ
त्रांतरेशृणोद्वार्तांकाश्मीरस्तुतिगर्भिताम् ॥ कैश्चिदुक्तांपृथिव्यांहिजंबूद्वीपोवरोमहान् ॥ ५४ ॥
तत्रापिभारतंवर्षंतत्रकाश्मीरमंडलम् ॥ यत्रास्तेशारदादेवीसर्वविद्याप्रकाशिनी ॥ ५५ ॥ नवे
दांतसमंशास्त्रंनास्तिमेरुसमोगिरिः ॥ तत्त्वज्ञानात्परंतीर्थंनोनदेवोहरेःपरः ॥ ५६ ॥ काश्मी
रसदृशंलोकेमंडलंनास्तिसुंदरम् ॥ शारदासदृशीदेवीनास्तिब्रह्मांडगोलके ॥ ५७ ॥ इत्थंवा
र्तांसमाकर्ण्यभाष्यकारोमनोदधे ॥ काश्मीरमंडलंगंतुंतत्क्षणेशिष्यसंयुतः ॥ ५८ ॥ यात्रांकृ
त्वाययौशिष्यैर्भिक्षुःकाश्मीरमंडलम् ॥ संप्राप्यदक्षिणद्वारंपिनद्धंवादिमंडलैः ॥ ५९ ॥ प्रवे
ष्टुकामस्तत्रायंरुद्धोवादिगणैस्तदा ॥ कैश्चिदुक्तोयतिस्तत्रशृणुभिक्षोवचस्त्विदम् ॥ ६० ॥

॥ ६१ ॥ ६२ ॥ परमाण्विति । संयोगवतःपरमाणुयुग्मात्सूक्ष्मंद्व्यणुकमुत्पन्नमित्यस्माकंकाणादानांमतं त्वंचेत्सर्वज्ञस्तर्हिद्व्यणुकाश्रितं यदणुत्वंतत्कस्माज्जायतइतिकथय ॥ ६३ ॥ परमाणुद्वयनिष्ठायाद्वित्वसंख्यासातस्यद्व्यणुकगतद्वित्वस्यकारणमस्ति ॥ ६४ ॥ ६५ ॥



विनावादंप्रवेशोऽत्रविजिगीषोर्नजायते ॥ अत्रांतरेसमागत्यकाणादःकश्चिदब्रवीत् ॥ ६१ ॥
कस्त्वंभोभिक्षुरूपेणप्राप्तःकाश्मीरमंडलम् ॥ सर्वज्ञोऽसियदातर्हिवक्तव्यंपृच्छ्यतेमया ॥ ६२ ॥
परमाणुद्वयाज्जातंद्व्यणुकंचेतिनोमतम् ॥ तदाश्रितमणुत्वंयत्तत्कस्माज्जायतेवद ॥ ६३ ॥ ए
वंपृष्टोहसन्नूचेकाणादंभाष्यकृन्मुनिः ॥ परमाणुनिष्ठाद्वित्वसंख्यातस्यास्तिकारणम् ॥ ६४ ॥
उत्तरंप्राप्यकाणादःसमभ्यर्च्ययतीश्वरम् ॥ गतोमार्गंविहायासौप्राप्तोनैयायिकस्तदा ॥ ६५ ॥
यतींद्रवदकाणादपक्षाद्युक्तिपरिष्कृतात् ॥ गौतमीयेमतेमुक्तेर्विशेषःकोभवेन्मतः ॥ ६६ ॥ ए
कविंशतिसंख्याकदुःखध्वंसात्मिकामता ॥ व्योमवत्संस्थितिर्मुक्तिर्वैशेषिकमतेत्वियम् ॥ ६७ ॥
तथैवगौतमीयेऽपिदुःखध्वंसात्मिकामता ॥ केषांचिद्गौतमीयानांमीमांसाद्यनुवर्तिनाम् ॥ ६८ ॥
कंचिद्विशेषमाश्रित्यसंमतासाविलक्षणा ॥ साचमुक्तिरपीत्थंतैर्दुःखध्वंसपुरःसरा ॥ ६९ ॥ आ
नंदसंविदाद्यास्तिसंमतानिरुपद्रवा ॥ श्रुत्वैवंगौतमीयोऽपिपूजयित्वामुनिंगतः ॥ ७० ॥

॥ ६६ ॥ आचार्यआह । एकेति ॥ ६७ ॥ मीमांसाउत्तरमीमासा ॥ ६८ ॥ वैलक्षण्यमेवदर्शयति । साचेति ॥ ६९ ॥ ७० ॥

॥ ७१ ॥ साप्रकृतिःकापिलेमतेस्वतंत्रावापरतंत्राथवाजगन्निदानंतद्ब्रूहि ॥ ७२ ॥ इतीति । मूलयोनिर्मूलप्रकृतिरस्तियासाकापिलैः सांख्यशास्त्रेस्वतंत्राप्रधानाख्याजगतःकारणंमता ॥ ७३ ॥ स्वतंत्रेति । तन्मतस्यनिर्मूलताबोधनायाह । हठादिति । यात्रिगुणामूलप्र

कापिलोथागतःप्राहवदभिक्षोममाग्रतः ॥ प्रकृतिर्मूलयोनिर्याकारणंजगतांमता ॥ ७१ ॥ कापिलेसास्वतंत्रावापरतंत्राथवामता ॥ जगन्निदानंतद्ब्रूहिप्रवेशोनास्तितेऽन्यथा ॥ ७२ ॥ इति श्रुत्वावचस्तस्यहसन्नूचेऽथशंकरः ॥ त्रिगुणामूलयोनिर्याप्रधानाख्यास्तिकापिलैः ॥ ७३ ॥ स्वतंत्राकारणंसांख्येजगतोऽभिमताहठात् ॥ त्रिगुणामूलयोनिर्याजगतःकारणंमता ॥ ७४ ॥ वेदांतेपरतंत्रासापरब्रह्मसमाश्रया ॥ एवंसकापिलःश्रुत्वापूजयित्वाययतिंगतः ॥ ७५ ॥ तदैवसौगतःप्राप्तःपप्रच्छसयतीश्वरम् ॥ द्विधाबाह्यार्थवादोऽस्तिसंमतोऽस्माभिरादरात् ॥ ७६ ॥ वद त्वमंतरंतस्यप्रवेशोनास्तितेऽन्यथा ॥ भाष्यकारोऽपितंप्राहश्रृणुबौद्धशिशोवचः ॥ ७७ ॥ प्रत्यक्षवेद्यमाहैकोवस्तुजालंतथागतः ॥ लिंगगम्यंद्वितीयस्तुवस्तुजातंवदत्यहो ॥ ७८ ॥ पुनराहवचोबौद्धोवदभिक्षोत्वमंतरम् ॥ विज्ञानवादवेदांतवादयोरुभयोरपि ॥ ७९ ॥ शिष्यानालोक्ययतिराट्हसन्नूचेसशंकरः ॥ विज्ञानवादीक्षणिकमात्मानंमन्यतेऽधमः ॥ ८० ॥ ॥

कृतिःसावेदांतशास्त्रेपरतंत्राजगतःकारणंमता परतंत्रत्वेऽपिकस्याधीनेत्यपेक्षायामाह । ब्रह्मसमाश्रयोऽत्र ॥ ७४ ॥ ७५ ॥ ७६ ॥ ७७ ॥ एकोवैभाषिकस्तथागतोबौद्धःद्वितीयःसौत्रांतिकः ॥ ७८ ॥ ७९ ॥ अयमत्यंतमंदबुद्धिरितिबोधनायशिष्यानालोक्यहसन्नुवाच ॥ ८० ॥

॥ ८१ ॥ ८२ ॥ ८३ ॥ तथाचैतयोर्यत्किंचिदंतरंनास्तिकिंतुमहदंतरमित्याह । क्वेति ॥ ८४ ॥ ८५ ॥ नन्वऽस्तिकायादादिभूतशब्दानांकोवार्थोजैनसंमतइत्याशंक्यजीवास्तिकायःपुद्गलास्तिकायोधर्मास्तिकायोऽधर्मास्तिकायआकाशास्तिकायइतिजीवादिपंचकंतच्छब्दतोवाच्यमित्याचार्यआह । अस्तीति । अस्तीतिकायंतेशब्द्यंतइत्यस्तिकायाः कैगैशब्दइतिस्मरणात्तत्रजीवास्तिकायस्त्रिधा बद्धोमुक्तोनित्यसिद्धश्च तत्रार्हन्नित्यसिद्धइतरेकेचित्साधनैर्मुक्ताअन्येबद्धाः पुद्गलास्तिकायःषोढा पृथिव्यादीनिचत्वारिभूतानिस्थावरंजंगमंचेति शा

वेदांतिनस्तुमन्यंतेसच्चिदानंदमक्षरम् ॥ प्रत्यगाख्यपरात्मानंव्यापिनंशुद्धमद्वयम् ॥ ८१ ॥
अधिष्ठानंपरब्रह्मवस्तुरूपंनिरंजनम् ॥ अध्यारोपःप्रपंचस्यतस्मिन्नेवस्वमायया ॥ ८२ ॥ स
र्वंक्षणिकमाहुस्तेबौद्धाभ्रांतिवशाज्जडाः ॥ निरधिष्ठानमप्यत्रभ्रमंबौद्धावदंतिच ॥ ८३ ॥ क्वा
धमःश्रुतिबाह्यश्चविज्ञानंक्षणिकंवदन् ॥ बौद्धःक्वचसुमेधावीवेदांतीपुरुषोत्तमः ॥ ८४ ॥ इत्थं
श्रुत्वावचोबौद्धोगतोभ्रांतस्तिरस्कृतः ॥ दैगंबरःसमागत्यपप्रच्छेदंसशंकरम् ॥ ८५ ॥ अस्ति
कायादिशब्दानांकोवार्थोजैनसंमतः ॥ जीवादिपंचकंचाहवाच्यंतच्छब्दतोयतिः ॥ ८६ ॥ इ
त्थंश्रुत्वागतःसोऽपिजैमिनीयःसमागतः ॥ पप्रच्छशंकरंभिक्षोब्रूहीदानींविशेषतः ॥ ८७ ॥

स्त्रीयबाह्यप्रवृत्त्याह्यांतरोऽपूर्वाख्योधर्मोऽनुमीयतइतिप्रवृत्त्यनुमेयोधर्मास्तिकायः ऊर्ध्वगमनशीलस्यजीवस्यदेहेऽवस्थानेनाधर्मोऽनुमीयइतिस्थित्यनुमेयोऽधर्मास्तिकायः आकाशास्तिकायोद्वेधा लोकाकाशोऽलोकाकाशश्चेतितत्रोपर्युपरिस्थितानांलोकानामंतर्वर्तीआद्यस्तेषामुपरिमोक्षस्थानंप्रतिस्थितोद्वितीयइतितदर्थः ॥ ८६ ॥ ८७ ॥ ॥ ॥ ॥ ॥

॥ ८८ ॥ ८९ ॥ ९० ॥ ९१ ॥ ९२ ॥ सर्वज्ञतेति । पुरैवद्वारस्थवादिपरीक्षणात्पूर्वमेवविदितास्ति कुतइत्यतआह । यस्मादिति ॥
॥ ९३ ॥ ९४ ॥ तर्हिंकिमर्थंविद्याभद्रासनारोहेप्रतिबंधइत्याशंक्याह । किंत्विति ॥ ९५ ॥ साहसमिति । एवंपक्षद्वयमभिधायशुद्धिर्ना

जैमिनीयेमतेशब्दोद्रव्यंवाथगुणोमतः ॥ नित्योऽनित्योऽथवाब्रूहिशीघ्रंनोचेद्दिशात्रमा ॥ ८८ ॥
सर्वगानित्यवर्णाश्चसंमताजैमिनीयकैः ॥ द्रव्यंचव्यापकःशब्दःशब्दत्वाद्वेदशब्दवत् ॥ ८९ ॥
वेदशब्दस्यनित्यत्वंव्यापकत्वंचसंमतम् ॥ इत्थंश्रुत्वावचःसोऽपिजैमिनीयोगतस्ततः ॥ ९० ॥
भिक्षुराजःसशिष्यःसंप्रविश्यांतर्गृहंततः ॥ विद्याभद्रासनंतत्रचाधिरोढुमनाअभूत् ॥ ९१ ॥
अत्रांतरेऽब्रवीद्देवीशारदाप्यशरीरिणी ॥ भोसर्वज्ञयतीशेंद्रस्थेयंतावद्वचःश्रृणु ॥ ९२ ॥ सर्वज्ञ
तापुरैवास्तितवभिक्षोविदांवर ॥ यस्मात्तेशिष्यतांयातोविश्वरूपाभिधोद्विजः ॥ ९३ ॥ साक्षा
त्प्रजापतिर्ब्रह्मासृष्टिकर्तास्वयंप्रभुः ॥ ससार्वज्ञ्यंविनाशिष्यभावंसंप्राप्नुयात्कथम् ॥ ९४ ॥ किं
तुसर्वज्ञतैवात्रपीठारोहेनकारणम् ॥ हेतुःसंशुद्धिरप्यत्रसाविचार्यास्तिनास्तिवा ॥ ९५ ॥ साह
संमाकृथाभिक्षोपूर्ववृत्तंचसंस्मर ॥ उपभुज्यांगनाःकामकलाशास्त्रंसुशिक्षितम् ॥ ९६ ॥ भव
ताभिक्षुवेषेणकृतेभिक्षोविशुद्धिता ॥ विद्याभद्रासनंसद्भिःसिद्धवर्यैःसमाश्रितम् ॥ ९७ ॥ ईदृ
शंपदमारोढुंकथंत्वंचार्हसिप्रभो ॥ इत्थंश्रुत्वायतींद्रोऽपिशारदामब्रवीद्वचः ॥ ९८ ॥ ॥

स्तीतिपक्षंसाधयति । पूर्ववृत्तमिति ॥ ९६ ॥ ९७ ॥ ९८ ॥ ॥ ॥ ॥ ॥

आजन्मेति । किंत्वन्यदेहेनराजशरीरेणकृतंतेनतत्कृतेनपापेनचायंयतिदेहःपरमपावनोनाशुद्धिभाक् ॥ ९९ ॥ विपक्षेऽतिप्रसंगमाह ।



आजन्मनमयामातरस्मिन्देहेतुकिल्बिषम् ॥ कृतंकिंत्वन्यदेहेननतेनायमशुद्धिभाक् ॥ ९९ ॥
अन्यथापूर्वदेहेयोजघन्यःशूद्रजातिकः ॥ सुकृताद्द्विप्रतांप्राप्यवेदेनाधिकृतोभवेत् ॥ १०० ॥
अतःशुद्धोऽस्मिमेनास्तिशुद्ध्यभावोविवेकतः ॥ इत्थंश्रुत्वावचस्तस्यशारदाभून्निरुत्तरा ॥ १ ॥
ततःश्रीशंकराचार्योविद्याभद्रासनंमुदा ॥ समारुह्यसभामध्येरेजेऽभ्योम्नीवचंद्रमाः ॥ २ ॥ स
र्वज्ञपीठमारुह्यवेदांतमतभास्करः ॥ शिष्यानद्वैतसन्मार्गनिष्ठानाज्ञापयद्विभुः ॥ ३ ॥ अद्वैत
संप्रदायांतंवेदांतैःसंमतंमतम् ॥ लोकेप्रचारयध्वंभोःशिष्यामोक्षकरंन्नृणाम् ॥ ४ ॥ एवमा
ज्ञाप्यकाश्मीरमंडलेविनिवेश्यतान् ॥ शिष्यान्कांश्चित्स्वयंकैश्चिद्ययौशृंगगिरिंयतिः ॥ ५ ॥
तत्रनीत्वाकियत्कालंसशिष्योबदरीवनम् ॥ जगामशंकराचार्योहर्षेणमहतावृतः ॥ ६ ॥ नि
र्णीयभाष्यसंदोहंमहर्षीणांमतेस्थितः ॥ अध्यापयामाससमुनीन्शांतानद्वैततत्परान् ॥ ७ ॥ त
त्रशीतार्दितान्शिष्यान्दृष्ट्वातप्तोदकंमुनिः ॥ शंकरात्प्रार्थयामासस्वयंचकिलशंकरः ॥ ८ ॥
तप्तोदलहरींतत्रमुनिनागिरिशोऽर्थितः ॥ प्रावर्तयत्सुखाराध्योजनानांसुखहेतवे ॥ ९ ॥



अन्यथेति ॥ १०० ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ स्वयंचशंकरत्वेनप्रसिद्धः ॥ ८ ॥ ९ ॥ ॥ ॥

उपसंहरति । इत्थमिति ॥ ११० ॥ ११ ॥ १२ ॥ नेति । मुमुक्षुनरणांवेदांतशास्त्रमुख्यतात्पर्यविषयकबोधोत्पादनेत्वयासदृशोऽन्यस्त्रिषु लोकेषुसर्वस्मिन्ब्रह्मांडेनास्ति ॥ १३ ॥ अतःशंकरनाम्नआचार्यांतपदस्यशंकराचार्यस्यप्रेम्णायेभजनपरास्तेएवसद्योमुक्तिभाजःस्युर्नत्वन्य आचार्याभासभक्ताइत्याहुः । यइति ॥ १४ ॥ वेदांतविज्ञानसुनिश्चितार्थाइत्यादिश्रुत्यावेदांतमुख्यतात्पर्यार्थज्ञानवतामेवमोक्षाभिधाना

इत्थंबहुविधैःशुद्धैश्चरितैःकल्मषापहैः ॥ समाव्यतीयुर्द्वात्रिंशच्छंकरस्यजगद्गुरोः ॥ ११० ॥ ततोब्रह्मादयोदेवाआजग्मुस्तत्रशंकरम् ॥ आनेतुंकृतकार्यंतंस्वंधामसुखदंपरम् ॥ ११ ॥ ब्रह्माणमग्रतःकृत्वातंस्तोतुमुपचक्रिरे ॥ यतीशशंकरस्वामिञ्जितंतेबोधभास्कर ॥ १२ ॥ नत्वयासदृशश्चान्यस्त्रिषुलोकेषुबोधने ॥ वेदांतशास्त्रसिद्धांततात्पर्यस्यचसन्नृणाम् ॥ १३ ॥ येत्वांशंकरनामानमाचार्यांतपदंगुरुम् ॥ भक्त्याभजंतितेसंतःसद्यःस्युर्मुक्तिभागिनः ॥ १४ ॥ मनोमात्रमिदंदृश्यंसत्यंब्रह्माद्वयंपरम् ॥ इत्थंवेदांततात्पर्यंसद्भाष्यैस्तेप्रकाशितम् ॥ १५ ॥ येधीरास्तेमतंशुद्धमनुतिष्ठंतिभावतः ॥ तत्त्वज्ञानंसमाश्रित्यजीवन्मुक्ताभवंतिते ॥ १६ ॥ शंकरःशंकरःसाक्षान्निर्णीतोवेदपारगैः ॥ विश्वरूपमुखैर्धीरैराश्रितोऽसियतोमुने ॥ १७ ॥

त्वद्भाष्यैरेवचेदानींतनानांतथाभूततात्पर्यनिश्चयसंभवादित्याशयेनाह । मनोमात्रमिति ॥ १५ ॥ येधीराःपंडितास्तवमतंभक्तितोऽनुतिष्ठंति तएवजीवन्मुक्ताअपीत्याहुः । यइति ॥ १६ ॥ किंचशंकरस्त्वंसाक्षाद्देवाधिदेवोमहादेवएववेदपारगैर्निर्णीतोयतोविश्वरूपादिभिर्धीगुरुत्वेनाश्रितोऽसीत्यर्थः ॥ १७ ॥ ॥ ॥ ॥ ॥ ॥ ॥

व्यतिरेकेदोषमाहुः । यइति ॥ १८ ॥ तत्त्वमस्यादिवाक्यानांब्रह्माद्वयेतात्पर्येणपर्यवसानंप्रदर्शयताभवताविद्याशक्त्यालिंगितःशंकरःस र्वदातिष्ठतीतिश्रुत्यादिस्वप्रसिद्धिरधुनासार्थिकाकृतेत्याहुः । तत्त्वमिति ॥ १९ ॥ १२० ॥ यतस्त्वदीयंमतमेवसर्वलोकानांसुखकरत्वाद्

येऽस्मिन्मतेजनाःश्रद्धांनकरिष्यंत्यभाग्यतः ॥ वंचितास्तेऽधमामूढादैवेनात्मसुखामृतात् ॥१८॥
तत्त्वमस्यादिवाक्यानांनिष्ठाब्रह्माद्वयेपरे ॥ सम्यक्प्रकाशितालोकेभवतातापहारिणा ॥ १९ ॥
ज्ञानशक्तिंसमाश्रित्यसदातिष्ठतिशंकरः ॥ इत्थंश्रुतौस्मृतौसिद्धंप्रादर्शिभवताधुना ॥ १२० ॥
शंकरंसर्वलोकानांशांकरंमतमुत्तमम् ॥ श्रुतिस्मृतीतिहासदौसिद्धंसर्वमहात्मसु ॥ २१ ॥ मतं
तेसर्वशिष्टेषुप्रसरिष्यतिशंकर ॥ नातःपरंमतंलोकेसंसिद्धंमोक्षकारणम् ॥ २२ ॥ इत्थंस्तुत्वा
समानर्चुर्दिव्यैःपुष्पैःसुरेश्वराः ॥ अब्रुवन्शंकरंसर्वेब्रह्माद्यास्तेपुनर्वचः ॥ २३ ॥ भवानाद्यस्त्रि
जगतामीश्वरःसर्वदेहिनाम् ॥ यदर्थमवतारस्तेसिद्धंतन्नःसमीहितम् ॥ २४ ॥ अधुनायाहि
धामस्वंकैलासाख्यमुमापते ॥ नित्यमुक्तस्वभावस्त्वंशंकराचार्यतांगतः ॥ २५ ॥ इत्थंब्रह्मा
दिदेवानांवचःश्रुत्वामहेश्वरः ॥ गंतुंस्वधामलोकेशोमहादेवाकृतिश्चसन् ॥ २६ ॥ आविर्भूत
त्रिनेत्रादिरीश्वरःस्वगणैर्वृतः ॥ आरुह्योक्षाणमग्र्यंसनैजंधामपरंययौ ॥ २७ ॥ ॥

त्तममिदमेवचश्रुत्यादौमहात्मसुचसिद्धमतस्तवैवमतंसर्वशिष्टेषुप्रचारंगमिष्यतीत्याहुः । शंकरमिति ॥ २१ ॥ २२ ॥ २३ ॥ २४॥२५॥
॥ २६ ॥ अग्र्यमुक्षाणंश्रेष्ठंवृषंनंदिसंज्ञम् ॥ २७ ॥ ॥ ॥ ॥ ॥ ॥

श्रीकृष्णाय नमः ॥ वृष्णीनांकृष्णदेवानामाचार्यायमहात्मने ॥ श्रीमद्गर्गकवीशायतस्मैनित्यंनमोनमः ॥ १ ॥ शौनकउवाच ॥ श्रुतंतव मुखाद्ब्रह्मन्पुराणानांचविस्तरात् ॥ श्रेष्ठंश्रेष्ठंचमाहात्म्यंकर्णयोःसुखवर्द्धनम् ॥ २ ॥ गर्गस्यचमुनेरद्यसंहितायाःप्रयत्नतः ॥ अस्माकंवदमाहात्म्यंसाररूपंविचार्यच ॥ ३ ॥ अहोधन्याभागवतीमुनेर्गर्गस्यसंहिता ॥ राधामाधवयोर्यस्यांमहिमाबहुवर्णितः ॥ ४ ॥ सूतउवाच ॥ अहो शौनकमाहात्म्यंनारदाच्चमयाश्रुतम् ॥ उक्तंसंमोहनेतंत्रेशिवायैचशिवेनवै ॥ ५ ॥ कैलासशिखरेशुभ्रेयत्राक्षयवटाजिरे ॥ तीरेचालकनंदाया नित्यंसंराजतेहरः ॥ ६ ॥ शंकरंचैकदादेवंगिरिजासर्वमंगला ॥ सिद्धानांशृण्वतांतत्रपप्रच्छवांछितंमुने ॥ ७ ॥ पार्वत्युवाच ॥ यंदेवंध्यायसे नाथतस्यापिचरितंपरम् ॥ जन्मकर्मरहस्यंचकथयस्वममाग्रतः ॥ ८ ॥ पुरात्वन्मुखतःसाक्षाच्छ्रुतं...म्नांसहस्रकम् ॥ श्रीमद्गोपालदेवस्यतत्कथांवदमेहर ॥ ९ ॥ महादेवउवाच ॥ कथागोपालकृष्णस्यराधेशस्यमहात्मनः ॥ गर्गस्यसंहितायांचश्रूयतेसर्वमंगले ॥ १० ॥ पार्वत्युवाच ॥ बहूनिचपुराणानिसंहितादीनिशंकर ॥ सर्वान्विहायगर्गस्यत्वंप्रशंससिसंहिताम् ॥ ११ ॥ यस्यांकाभगवल्लीलाविस्तरेणतदुच्यताम् ॥ कृतवान्संहितांगर्गःकेनसंप्रेरितःपुरा ॥ १२ ॥ किंपुण्यंकिंफलंचास्याःश्रवणेनापिलभ्यते ॥ पुराकैःकैर्जनैर्देवश्रुतामामवदप्रभो ॥ १३ ॥ सूतउवाच ॥ इतिप्रियायावचनंनिशम्यप्रसन्नचित्तोभगवान्महेशः ॥ विचार्यगर्गस्यकृतांकथांचप्रत्याहवाक्यंसदसिस्थितःसः ॥ १४ ॥ महादेव उवाच ॥ शृणुदेविसविस्तारंमाहात्म्यंपापनाशनम् ॥ राधामाधवयोश्चापिसंहितायाःप्रयत्नतः ॥ १५ ॥ पूर्वंचरित्रंस्वस्यापिब्रह्मणाप्रार्थितोयदा ॥ राधायैकथयामासप्रव्रजन्भूतलंहरिः ॥ १६ ॥ ततःशेषेणभगवान्गोलोकेप्रार्थितःपुनः ॥ तस्याग्रेकथयामाससमस्तांस्वकथांमुदा ॥ १७ ॥ शेषोददौब्रह्मणेचब्रह्माधर्मायसंहिताम् ॥ धर्मःसंप्रार्थितःप्राहस्वपुत्राभ्यांकथामृतम् ॥ १८ ॥ नरनारायणाभ्यांचरहसिसर्वमंगले ॥ नारायणो नारदायसेवनेनिरतायच ॥ १९ ॥ जगादकृष्णचरितंयच्छ्रुतंधर्मवक्त्रतः ॥ ततश्चप्रार्थितःप्राहगर्गाचार्यायनारदः ॥ २० ॥ नारायणमुखाल्लब्धांसर्वांश्रीकृष्णसंहिताम् ॥ इतिश्रुत्वापरंज्ञानंहरेर्भक्तिसमन्वितम् ॥ २१ ॥ चकारपूजनंगर्गोनारदस्यमहात्मनः ॥ उवाचनारदोगर्गंत्रिकालज्ञंचपार्वति ॥ २२ ॥ नारदउवाच ॥ मयातुभ्यंश्रावितंचयशःसंक्षेपतोहरेः ॥ वैष्णवानांप्रियंगर्गत्वमेतद्विपुलंकुरु ॥ २३ ॥ सर्वेषांकामदंश

श्वत्कृष्णभक्तिविवर्द्धनम् ॥ ममप्रियंकुरुविभोशास्त्रंतुपरमाद्भुतम् ॥२४॥ वचसाममविप्रेंद्रकृष्णद्वैपायनेनच ॥ सर्वशास्त्रात्परंश्रेष्ठंश्रीमद्भागवतंकृतम् ॥ २५॥ ब्रह्मन्यथाभागवतंगोपयिष्याम्यहंतथा॥ त्वत्कृतंश्रावयिष्यामिबहुलाश्वायभूभृते ॥२६॥ इतिश्रीसम्मोहनतंत्रेपार्वतीहरसंवादेश्रीगर्गसंहितामाहात्म्येप्रथमोऽध्यायः॥१॥ महादेवउवाच॥ श्रुत्वादेवर्षिवचनंगर्गाचार्योमहामुनिः ॥ विनयावनतोभूत्वाप्रहसन्निदमब्रवीत्॥१॥गर्गउवाच॥त्वयाब्रह्मन्वचश्चोक्तंकठिनंसर्वतोऽस्फुटम् ॥ तथापिचकरिष्यामित्वंकरोषिकृपांयदि॥२॥इत्येवमुक्तोभगवान्नारदःसर्वमंगले ॥ स्ववीणांवादयन्गायन्ब्रह्मलोकंययौमुदा ॥ ३ ॥ गर्गाचलेकविर्गर्गःशास्त्रंचक्रेमहाद्भुतम्॥ निरूपितंचसंवादंदेवर्षिबहुलाश्वयोः॥४॥ नानाकृष्णचरित्रैश्चविचित्रैःपरिपूरितम् ॥ श्लोकैर्द्वादशसाहस्रैःसुधामिष्टैरलंकृतम् ॥ ५ ॥ यच्छ्रुतंगुरुवक्राच्चयद्दृष्टंश्रीहरेर्महत् ॥ तत्सर्वंचरितंगर्गःसंहितायांसमादधे॥६॥ श्रीगर्गसंहितानाम्नाकथाभूत्कृष्णभक्तिदा॥ यस्याःश्रवणमात्रेणसर्वकार्यंचसिद्ध्यति॥७॥अत्रैवोदाहरंतीममितिहासंपुरातनम् ॥ यस्यश्रवणमात्रेणसर्वपापंप्रणश्यति ॥ ८ ॥ वज्रस्यापिसुतोराजाप्रतिबाहुर्नृपोह्यभूत् ॥ तस्यराज्ञःप्रियादेविमालिनीनामवर्त्तते ॥ ९ ॥ मथुरायांकृष्णपुर्य्यांभार्ययासहितोनृपः ॥ संतानार्थेविधानेनबहून्यत्नांश्चकारह ॥ १० ॥ गावश्चबहवोदत्ताःसुपात्रेभ्यःसवत्सकाः ॥ तथातेनकृतायज्ञादक्षिणाभिःप्रयत्नतः ॥ ११ ॥ गुरवोब्राह्मणादेवाःपूजिताभोजनैर्धनैः ॥ पुत्रोनजातस्तदपिततश्चिंतातुरोऽभवत् ॥ १२ ॥ तावुभौदंपतीनित्यंचिंताशोकपरायणौ ॥ पितरोस्यजलंदत्तंकवोष्णमुपभुंजते ॥ १३ ॥ राज्ञःपश्चान्नपश्यामोयोस्माकंतर्पयिष्यति ॥ इत्येवंस्मरतस्तस्यदुःखिताःपितरोऽभवन् ॥ १४॥ नबांधवानमित्राणिनामात्यसुहृदस्तथा ॥ शोचयंत्यस्यभूपस्यनगजाश्वाःपदातयः ॥१५॥ नैराश्यंभूपतेस्तस्यानित्यंमनसिवर्त्तते ॥ जनस्यसुतहीनस्यनास्तिवैजन्मनःफलम् ॥ १६ ॥ गृहंशून्यंह्यपुत्रस्यदुःखितंचमनःसदा ॥ देवमानुषपितॄणांनानृणत्वंसुतंविना ॥ १७ ॥ पुत्रमुत्पादयेत्प्राज्ञस्तस्मात्सर्वप्रयत्नतः ॥ यशस्तेषांभ्रमिलोकेपरलोकेगतिर्भवेत् ॥ १८ ॥ तेषांतुपुण्यकर्तॄणांपुत्रजन्मगृहेभवेत् ॥ आयुरारोग्यसंपत्तीतेषांगेहेप्रवर्त्तते ॥ १९ ॥ एवंविचिंत्यमनसानशर्मलभतेनृपः ॥ श्वेतान्स्वमूर्द्धजान्दृष्ट्वाचक्रेशोकमहर्निशम् ॥२०॥ तस्यैकदामधुपुरेशांडिल्योपिमुनीश्वरः ॥ स्वेच्छयासउपागच्छत्प्रतिबाहुंविलो

कितुम् ॥ २१ ॥ तंदृष्ट्वासहसाराजाप्रत्युत्थानासनादिभिः ॥ निवेद्यमधुपर्कादींश्चकारपूजनंमुदा ॥ २२ ॥ उदासीनंनृपंदृष्ट्वाकृत्वाविस्मयमेवच ॥ ऋषिस्तमभिनंद्याथस्वस्तिवाचनपूर्वकम् ॥ २३ ॥ पप्रच्छकुशलंराज्येसप्तस्वंगेषुभूपतेः ॥ निवेदितुंस्वकुशलंप्रत्याहनृपसत्तमः ॥ २४ ॥ ॥ राजोवाच ॥ पूर्वदोषेणयद्दृष्टंस्वदुःखंकिंब्रवीम्यहम् ॥ ऋषयस्त्वादृशाब्रह्मन्किंनजानंतिसांप्रतम् ॥ २५ ॥ सौख्यंनराज्येनपुरेममनैवतुदृश्यते ॥ किंकरोमिक्वगच्छामिपुत्रप्राप्तिःकथंभवेत् ॥ २६ ॥ राज्ञःपश्चान्नपश्यामोयोस्माकंपालयिष्यति ॥ इत्येवंस्मरतःसर्वादुःखितामेभवन्प्रजाः ॥ २७ ॥ उपायंवदमेब्रह्मंस्त्वंसाक्षाद्दिव्यदर्शनः ॥ येनापिनिष्कलःपुत्रोवंशकर्त्ताभविष्यति ॥ २८ ॥ महादेवउवाच ॥ इतिश्रुत्वावचोदेविदुःखितस्यनृपस्यच ॥ उवाचमुनिशांडिल्यःकश्मलंशमयन्निव ॥ २९ ॥ इतिश्रीसंमोहनतंत्रेपार्वतीहरसंवादेगर्गसं०मा०द्वि०ध्यायः ॥ २ ॥ ॥ शांडिल्यउवाच ॥ उपायाश्चकृताराजन्बहवश्चपुरात्वया ॥ परंतुतैःसुतोह्येकोनजातःकुलदीपकः ॥ १ ॥ तस्माच्छृणुविधानेनभार्यासहितःशुचिः ॥ धनदांपुत्रदांराजन्मुक्तिदांगर्गसंहिताम् ॥ २ ॥ सर्वंददात्यसौविष्णुर्लघूपायेनवैकलौ ॥ पुत्रादिसुखसंपत्तिःसंहिताश्रवणान्नृणाम् ॥ ३ ॥ नरेंद्रशश्वन्मुनिसंहितायानवाहयज्ञेनजनाःपुनीताः ॥ इहैवसौख्यंपरमाप्नुवंतस्ततस्तुगोलोकपुरंव्रजंति ॥ ४ ॥ रोगीपुमान्रोगगणात्प्रमुच्यतेभीतोभयाद्बंधनगश्चबंधनात् ॥ श्रुत्वाकथांनिर्धनएतिवैभवंमूर्खोभवेत्पंडितएवसत्वरम् ॥ ५ ॥ विप्रोथविद्वान्विजयीनृपात्मजोवैश्योनिधीशोवृषलोपिनिर्मलः ॥ श्रुत्वाकथांप्राप्तमनोरथोभवेत्स्त्रीणांजनानामतिदुर्लभोपिहि ॥ ६ ॥ निष्कारणोभक्तियुतःशृणोतिहिसर्वामिमांवैमुनिगर्गसंहिताम् ॥ विजित्यविघ्नान्प्रविजित्यनाकपान्गोलोकधामप्रवरंप्रयातिसः ॥ ७ ॥ प्रबंधकल्पनागर्गसंहितायाश्चदुर्लभा ॥ सहस्रजन्मपुण्येनलभ्यतेभूतलेनृप ॥ ८ ॥ श्रीगर्गसंहितायाश्चदिनानांनियमोनहि ॥ सर्वदाश्रवणंचोक्तंभुक्तिमुक्तिकरंकलौ ॥ ९ ॥ नजानेसमयेनापिप्रभातेकिंभविष्यति ॥ प्रोक्तंतुसंहितायाश्चनवाहश्रवणंततः ॥ १० ॥ ज्ञानेनब्रह्मचर्येणचैकभुक्तेनभूपते ॥ एकान्नेनहविष्येणफलाहारेणवापुनः ॥ ११ ॥ मिष्टान्नंपूरिकांचैवगोधूमस्ययवस्यवा ॥ अश्नीयात्सैन्धवंकंदंदधिदुग्धंविधानतः ॥ १२ ॥ विष्णोःप्रसादंभुंजीतनाप्रसादंनृपोत्तम ॥ श्रद्धयातुप्रकुर्वीतश्रवणंसर्वकामदम् ॥ १३ ॥ भूमिशायीभवेत्प्राज्ञःक्रोधलोभविवर्जितः ॥ कथांगुरुमुखाच्छ्रुत्वा

सर्वकामफलंलभेत् ॥ १४ ॥ गुरुभक्तिविहीनानांनास्तिकानांचपापिनाम् ॥ अवैष्णवानांदुष्टानांकथायाश्चफलंनहि॥१५॥ सुमुहूर्तेकथारंभं
स्वगृहेकारयेन्नरः ॥ ब्रह्मक्षत्रियविट्शूद्रान्समाहूयस्वकान्स्वकान् ॥ १६ ॥ मंडपंकदलीखंडैःप्रकुर्य्याद्भक्तितःसुधीः ॥ अग्रेतुकलशंधृत्वा
जलपूर्णंसपल्लवम् ॥ १७ ॥ पूर्वंविनायकंपूज्यतत्पश्चात्तुनवग्रहान् ॥ ततश्चपुस्तकंपूज्यवक्तारंपरिपूजयेत् ॥ १८ ॥ सुवर्णदक्षिणांदत्त्वाह्यश
क्तौरजतस्यवा ॥ कलशेश्रीफलंधृत्वामिष्टान्नंतुनिवेदयेत् ॥ १९ ॥ प्रकुर्य्यादार्त्तिकंभक्त्यासंपूज्यतुलसीदलैः ॥ समाप्तिदिवसेराजन्प्रदक्षिण
मुपाचरेत् ॥ २० ॥ परदाररतंधूर्त्तंवादिनंशिवनिन्दकम् ॥ अवैष्णवंक्रोधपरंवक्तारंतुनकल्पयेत् ॥ २१ ॥ वादीचनिंदकोमूर्खोगाथायांभंग
माचरेत् ॥ दुःखदाताचसर्वेषांसतुश्रोताहतःस्मृतः ॥ २२ ॥ गुरुशुश्रूषणेरक्तोविष्णुभक्तःकथार्थवित् ॥ गाथांश्रोतुंमनोयस्यसश्रोताश्रेष्ठउ
च्यते ॥२३॥ शुद्धःसआचार्यकुलप्रजातःश्रीकृष्णभक्तोबहुशास्त्रवेत्ता ॥ कृपाकरःसर्वजनेषुनित्यंसंदेहहारीकथितःसवक्ता ॥२४॥ वरणंब्रा
ह्मणानांचयथाशक्त्याचकारयेत्॥कथाविघ्ननिवृत्त्यर्थंद्वादशाक्षरविद्यया ॥२५॥ कथांतुधीरकंठेनवाचयेत्प्रहरत्रयम् ॥ कथायास्तत्रविश्रामं
द्विवारंकारयेद्बुधः ॥ २६ ॥ लघुशंकादिकंकृत्वाभूत्वानीरेणवैशुचिः ॥ प्रक्षाल्यपाणीपादौचमुखप्रक्षालनंचरेत् ॥ २७ ॥ नवाहेपूजनं
चोक्तंखंडेविज्ञानकेनृप ॥ पुस्तकंपूजयित्वाचपुष्पनैवेद्यचंदनैः ॥ २८ ॥ सुवर्णरजताद्यैश्चवाहनाद्यैःसदक्षिणैः ॥ वस्त्रभूषणगंधाद्यैर्वाचकं
पूजयेत्सुधीः ॥ २९ ॥ विप्रान्वानवसाहस्राँस्तथानवशतान्नृप ॥ तथानवनववापिपायसैर्वानवद्विजान् ॥ ३० ॥ भोजयेत्तुयथाशक्त्याकथा
याश्चफलंलभेत् ॥ कथायास्तत्रविश्रामेकीर्त्तनंकारयेद्बुधः ॥ ३१ ॥ स्त्रीजनैःपुरुषैःसार्द्धंविष्णुभक्तिसमन्वितैः ॥ कांस्यशंखमृदंगाद्यैर्जयश
ब्दैरितस्ततः ॥ ३२ ॥ श्रीगर्गसंहितायाश्चपुस्तकंगुरवेजनः ॥ निधायस्वर्णसिंहेवैदद्यात्सोंतेहारिंव्रजेत् ॥ ३३ ॥ इतितेकथितंराजन्किंभूयः
श्रोतुमिच्छसि ॥ संहिताश्रवणेनापिभुक्तिर्मुक्तिश्चदृश्यते ॥ ३४ ॥ इति श्रीसंमोहनतंत्रेपार्वतीहरसंवादेश्रीगर्गसंहितामाहात्म्येश्रवणविधिव
र्णनंनामतृतीयोऽध्यायः ॥ ३ ॥ ॥ महादेवउवाच ॥ ॥ इदंवचःश्रीमुनिशस्यश्रुत्वाप्रहस्यराजावनतस्तुसम्यक् ॥ कुरुत्वंसपुत्रंमुनेमांश
रण्यंत्वरंश्रावयत्वंहरेःसंहितांच ॥ १ ॥ श्रुत्वानृपवचश्चकारसुखदंपारायणंमंडपंकृत्वाश्रीयमुनातटेमुनिवरःश्रुत्वाऽऽययुर्माथुराः ॥ पूर्णनाथ

दिनेतथापरदिनेराजाथदानंत्वदाद्विप्रेभ्योवरभोजनंबहुधनंश्रीयादवेंद्रोमहान्॥२॥ शांडिल्यायमुनीन्द्रायरथाश्वान्द्रविणंमहत् ॥ गोगजादी निरत्नानिसंपूज्यप्रददौनृपः ॥ ३ ॥ श्रीमद्गोपालकृष्णस्यममोक्तंसर्वमंगले ॥ सहस्रनामशांडिल्यःसर्वदोषहरंजगौ ॥ ४ ॥ कथावसानेराजें द्रःशांडिल्येनप्रणोदितः ॥ दध्यौभक्त्याव्रजपतिंश्रीमन्मदनमोहनम् ॥५॥ ततःप्रादुरभूत्कृष्णःप्रियया पार्षदैःसह ॥ वंशीवेत्रधरःश्यामःको टिमन्मथमोहनः ॥ ६ ॥ दृष्ट्वागतंतंशांडिल्योराज्ञाचसर्वश्रोतृभिः ॥ प्रणामंतुचकाराशुस्तुतिंचक्रेविधानतः ॥ ७ ॥ शांडिल्यउवाच ॥ वैकुण्ठलीलाप्रचुरंमनोहरंनमस्कृतंदेवगणैःपरंवरम् ॥ गोपाललीलाभियुतंभजाम्यहंगोलोकनाथंशिरसानमाम्यहम् ॥ ८ ॥ प्रति बाहुरुवाच ॥ ॥ गोलोकनाथगिरिराजपतेपरेशवृंदावनेशकृतनित्यविहारलील ॥ राधापतेव्रजवधूजनगीतकीर्तेगोविंदगोकुलपतेकिल तेजयोस्तु ॥ ९ ॥ ॥ राज्ञ्युवाच ॥ ॥ वृंदावनेशराधेशपुरुषोत्तममाधव ॥ भक्तानांत्वंतुसुखदस्त्वामहंशरणंगता ॥ १० ॥ सर्वेश्रोतार ऊचुः ॥ श्रीनाथहेजगन्नाथह्यपराधंक्षमस्वनः ॥ सुपुत्रंदेहिभूपायाऽस्मभ्यंभक्तिंस्वपादयोः ॥ ११ ॥ महादेवउवाच ॥ ॥ इतिश्रुत्वास्तु तिंदेविभगवान्भक्तवत्सलः ॥ उवाचप्रणतान्सर्वान्मेघगंभीरयागिरा ॥ १२ ॥ श्रीभगवानुवाच ॥ ॥ मुनीन्द्रशृणुमद्वाक्यंराज्ञासर्वजनैः सह ॥ वचनंयुष्मदादीनांसफलंचभविष्यति ॥ १३ ॥ गर्गेणकथिताब्रह्मन्नाम्नेयंगर्गसंहिता ॥ सर्वदोषहरापुण्याचतुर्वर्गफलप्रदा ॥ १४ ॥ येयेमनोरथंयंयंवांछंतिमनुजाःकलौ ॥ तंतंदास्यतिसर्वेभ्योश्रीमुनेर्गर्गसंहिता ॥ १५ ॥ शिवउवाच ॥ ॥ इत्युक्त्वाराधयासार्द्धंमाधवोंऽतर धीयत ॥ मुनिभूपादयःसर्वेश्रोतारश्चमुदंययुः ॥ १६ ॥ शांडिल्यश्चमुनिर्द्रव्यंमाथुरान्ब्राह्मणान्पृथक् ॥ दत्त्वाराजानमाश्वास्यसोपिचांतर्द धेप्रिये ॥१७॥ ततोभूपतिनाराज्ञीगर्भमाधत्तशोभनम् ॥ सूतिकालेसुतोजातोगुणवान्पुण्यकर्मतः ॥१८॥ दृष्टोराजाब्राह्मणेभ्यःकुमारस्य च जन्मनि ॥ गोभूसुवर्णवस्त्राणिगजाश्वादीनिदत्तवान् ॥ १९ ॥ दैवज्ञैश्चस्वपुत्रस्यसुबाहुंनामचाकरोत् ॥ प्रतिबाहुर्नृपश्रेष्ठःकृतकृत्योबभूवह ॥२०॥ श्रीगर्गसंहितांश्रुत्वाभुक्त्वासर्वसुखानिच ॥ प्रतिबाहुर्ययावंतेगोलोकंयोगिदुर्लभम् ॥२१॥ स्त्रियंपुत्रंधनंवापिवाहनंचयशोगृहम् ॥ राज्यंसौख्यंचमोक्षंचदद्याच्छ्रीगर्गसंहिता ॥ २२ ॥ इतिसर्वांकथांदेव्यैकथयित्वाचशंकरः ॥ तूष्णींबभूवमुनयःपुनस्तंप्राहपार्वती ॥ २३ ॥

